श्रीगणेशायनमः॥ श्रीसरस्वत्यैनमः॥ श्रीवेदव्यासायनमः॥ नारायणंनमस्कृत्यनरंचैवनरोत्तमं॥ देवींसरस्वतींव्या
संततोजयमुदीरयेत्॥ १॥ जनमेजयउवाच कथंयुधिष्ठिरःप्रीतोममपूर्वपितामहः॥ हयमेधंक्रतुवरंचक्रेबंधुभिर
न्वितः॥ २॥ जैमिनिरुवाच शृणुराजन्प्रवक्ष्यामिधर्मराजस्यचेष्टितं॥ दिवंपितामहेयातेधर्मपुत्रोऽतिदुःखितः॥
॥ ३॥ यदृच्छयाचसंप्राप्तंव्यासंपप्रच्छसादरं॥ केनोपायेनमेब्रह्मन्गोत्रहत्याकृतंभयं॥ ४॥ ध्रुवंविनाशमाप्नोतितन्मे
ब्रूहितपोधन॥ विनाभीष्मेणकर्णेनतथाद्रोणेनवर्जितं॥ ५॥ नमेप्रीतिप्रदंराज्यंयत्प्राप्तंपूर्वजार्जितं॥ कर्णस्यमंदिरंरम्यं
ब्रह्मघोषसमन्वितं॥ ६॥ मयाशून्यंकृतंतच्चसांप्रतंदानवर्जितं॥ यत्रार्थिनांगणानित्यंलब्ध्वामानंतथाधनं॥ ७॥ हर्षा
दश्रूणिमुंचंतितत्रमुंचंतिशोकजं॥ धिङ्मदीयमिदंराज्यंयत्रभीष्मोनभानुजः॥ ८॥ ताभ्यांविरहितंतद्वद्देहंचक्षुर्विव
र्जितं॥ बहुधाशासितस्तेनभीष्मेणामितबुद्धिना॥ ९॥ नजहातिचमांशोकोघातयित्वातथाविधान्॥ त्यक्त्वाराज्यंग
मिष्यामिराज्यंभीमःकरोतुवै॥ १०॥ यानितीर्थानिदानानितथायज्ञक्रियाःशुभाः॥ कृत्वापूतोभविष्यामिनपश्यामि
हिसांप्रतं॥ ११॥ व्यासउवाच माभयंकुरुराजेंद्रनदोषस्तेभविष्यति॥ तमुपायंकरिष्यामियेनपूतोभविष्यसि॥
॥ १२॥ यथागोत्रकृतांहिंसामपहास्यसिपांडव॥ अश्वमेधंक्रतुवरंयजस्वकुरुनंदन॥ १३॥ रामेणापिपुरावीरहयमेध
त्रयंकृतं॥ यज्ञंकृत्वातथापुत्रराज्यंपालयमारिष॥ १४॥ राजधर्मेणयल्लब्धंशासनान्माधवस्यतु॥ तद्राज्यंतुपरित्यज्य
कस्माद्गंतुमिहेच्छसि॥ १५॥ इहलोकेपरांकीर्तिंकुरुपुत्रकसुस्थिरां॥ यावत्तेबांधवाःसर्वेवशगाःसंतिसांप्रतं॥ १६॥
शरीरंदोषरहितंतावच्छ्रेयःसमाचर॥ दिवंप्राप्ताहिराजानःकृत्वापुण्यादिकाःक्रियाः॥ १७॥ जैमिनिरुवाच एत
च्छ्रुत्वावचस्तस्यव्यासस्यामिततेजसः॥ उवाचदीनयावाचाधर्मराजोयुधिष्ठिरः॥ १८॥ युधिष्ठिरउवाच नवित्तं
विद्यतेमह्यंविनावित्तेनवैक्रतुः॥ जायतेममविप्रर्षेनचपीडयितुंप्रजाः॥ १९॥ नशक्नोमिनृपान्हंतुंपितृमातृविवर्जिता
न्॥ दुर्योधनेनक्षपितापृथिवीवित्तकारणात्॥ २०॥ तांकथंपीडयिष्यामिधरणींकांचनेच्छया॥ साहाय्यंनैवपश्यामि
सुहृदःसमरेहताः॥ २१॥ तस्माद्राज्यंपरित्यज्यगमनंममरोचते॥ किमत्रानंतरंकार्यंतन्मेगदितुमर्हसि॥ २२॥ व्या

सउवाच मरुत्तेनकृतोयागस्तुष्टाःसर्वेद्विजोत्तमाः॥ तैस्त्यक्तंबहुलंभूमौकांचनंनृपनंदन॥ २३॥ हिमाचलेतिष्ठतित
त्पतितंत्वंसमानय॥ यन्नेतुमसमर्थास्तेविप्राराज्ञासमर्पितं॥ २४॥ मरुत्तेनवदान्येनद्रविणंशतधामखे॥ युधिष्ठिर
उवाच धन्योऽसौमरुतोराजायेनयागस्तथाविधः॥ २५॥ कृतोबहुसुवर्णाढ्योयत्रविप्रास्तुतर्पिताः॥ त्यक्तासुवर्णं
चगताःकथंतदहमानये॥ २६॥ ब्राह्मणानांविशेषेणवित्तंदुःखतरंमम॥ मत्तःपरोनर्निंद्योऽन्योभविष्यतिनराधिपः॥
॥ २७॥ ब्रह्मस्वेयस्यनृपतेर्मतिर्भवतिदारुणा॥ ग्रहणान्मज्जयत्येनंशिलेवांभसिदुस्तरा॥ २८॥ प्रहसिष्यंतिमांविप्राम
मयज्ञेतथाविधे॥ अस्मदीयंधनंराजाप्रयच्छतिहिनःकरे॥ २९॥ तस्मान्नकुत्सितंकर्मकरिष्यामिकथंचन॥ एकात्र
पामेमहतीयन्मयासंगरेहताः॥ ३०॥ कुरवोगुरवश्चैवसुहृत्संबंधिबांधवाः॥ संमार्जयितुमेकांहिनसमर्थोऽस्मितांत्र
पां॥३१॥ द्वितीयैषामहाभागविप्रद्रव्याद्भविष्यति॥ व्यासउवाच धन्योऽसिनृपशार्दूलसम्यगुक्तंत्वयावचः॥ ३२॥
ब्रह्मस्वंप्रतियांशंकांप्रकरोषिवृथाहिसा॥ यदात्यक्तंधनंतैर्हिस्वाम्यंतेषांतदागतं॥ ३३॥ रामेणभूःपुरादत्ताकश्यपायम
हात्मने॥ कथंगृह्णंतिचमहींराजानःपापभीरवः॥ ३४॥ दैत्यैर्जिताधराचेयंदैत्येभ्यःक्षत्रियैर्जिता॥ गतंस्वाम्यंचविप्रा
णांतस्माद्दोषोनविद्यते॥ ३५॥ यदाधराधिपत्यंहिप्राप्तंयेननृपेणच॥ तदातस्याखिलंवित्तंजायतेनात्रसंशयः॥३६॥
तद्धनंत्वंसमानीयकुरुयज्ञंचपांडव॥श्रुत्वाव्यासवचोराजात्यपृच्छद्यज्ञसाधनं॥३७॥ युधिष्ठिरउवाच ब्राह्मणाःक
तिसंख्याकादक्षिणाकीदृशीकृतौ॥ हयश्चकीदृशोभाव्यस्तन्मेव्याख्यातुमर्हसि॥ ३८॥ व्यासउवाच द्विजाविंशति
साहस्रामखादौसंप्रकीर्त्तिताः॥ कुलीनाःसंमताःप्राज्ञावेदशास्त्रार्थपारगाः॥ एकैकस्मैद्विजायात्रदक्षिणांप्रवदामि
ते॥ ३९॥ एकोगजोरथश्चैकोहयश्चैकःसकांचनः॥ प्रत्येकंगोसहस्रंचरत्नप्रस्थंसकांचनं॥ ४०॥ भारश्चकांचनस्यैकः
प्रदेयादक्षिणामखे॥ यस्मिन्दिनेहयोराजन्मुच्यतेप्रथमाहिसा॥ ४१॥ दक्षिणाकथितारम्यातुरगंकथयामिते॥ गोक्षी
रसमवर्णंचकुंदेंदुहिमसन्निभं॥ ४२॥ पीतपुच्छंश्यामकर्णंसर्वतोगतिमुत्तमं॥ श्यामंचापिमहीपालयज्ञेऽस्मिन्तुरगं

* रामाश्ववसवोरुद्राःसूर्योभूमिस्तथैवच॥ भुवश्चमुनयश्चैवभारसंख्याभिधीयते॥ १॥

विदुः ॥ ४३ ॥ चैत्रमासस्यराकायांमोच्योऽयंतुरगोनृप ॥ वर्षमात्रंरक्षणीयःसर्वयोधैर्महाबलैः ॥४४॥ पुत्रोवाबांधवः
शूरोरक्षणार्थंनियोज्यते ॥ स्वयंयःकुरुतेयज्ञमसिपत्रंव्रतंचरेत् ॥ ४५ ॥ नियतःसचराजेंद्रनात्रकार्याविचारणा ॥ इष्ट
भोगान्वर्षमात्रंसेवन्नारीविवर्जितान् ॥ ४६ ॥ एकत्रशयनंकार्यंपत्न्यासहनराधिप ॥ यावदागमनंतस्यपुनरेवप्रजाय
ते ॥ ४७ ॥ तावत्प्रयत्नवान्कर्त्तानिवसेद्धैर्यसंयुतः ॥ हयःपुरीषंमूत्रंवाकुरुतेयत्रयत्रच ॥ ४८ ॥ गोसहस्रंप्रदेयंहिकर्तव्यं
हवनंद्विजैः ॥ पूजनीयाश्चतेविप्रादक्षिणाभिर्नसंशयः ॥ ४९ ॥ ललाटेतुरगस्यापिपत्रंसंलिख्यकांचनं ॥ बध्वास्वनामसं
युक्तंस्वप्रतापसमन्वितं ॥ ५० ॥ कथनीयमिदंवाक्यंमयायंतुरगोत्तमः ॥ विमुक्तोऽस्तिनृपःकश्चित्प्रतिगृह्णातुचेद्बली ॥
॥ ५१ ॥ यस्तुतंप्रतिगृह्णातिसजेतव्योबलात्स्वयं ॥ अनेनविधिनावीरक्रतुरेषःप्रजायते ॥ ५२ ॥ असिपत्रव्रतयुतोबहु
पुण्यफलप्रदः ॥ एवमेवपुराशक्रश्चक्रेहयक्रतोःशतं ॥ ५३ ॥ देवेंद्रत्वमवाप्यासौमोदतेचत्रिविष्टपे ॥ हयमेधशतंचक्रेदे
वेंद्रोव्रतवर्जितं ॥ ५४ ॥ यस्तुव्रतयुतंकुर्यादश्वमेधंमहाक्रतुं ॥ ससर्वपापनिर्मुक्तांप्रकरोतिवसुंधरां ॥ ५५ ॥ अनंगंकोभ
वेज्जेताविनाभीष्मंहिमानवः ॥ तस्माद्भीतानकुर्वंतिव्रतयुक्तंमहामखं ॥ ५६ ॥ यदितेविद्यतेशक्तिरनंगंप्रतिभारत ॥ वि
जेतुंकुरुयज्ञस्यप्रारंभंकुरुनंदन ॥ ५७ ॥ युधिष्ठिरउवाच सर्वथाहयमेधेऽहंशोच्योऽस्मिमुनिसत्तम ॥ नचद्रव्यंनचह
योनसहायाश्चसंतिमे ॥ ५८ ॥ भीमादयोऽपिचमयाक्लेशिताबहवोरणे ॥ कर्णस्यपुत्रोबलवान्वृषकेतुरुदारधीः ॥ ५९ ॥
बालःषोडशवर्षीयोधर्मतस्तंनयोजये ॥ घटोत्कचसुतंचैकंमेघवर्णंनयोजये ॥ ६० ॥ पिताऽस्यनिहतोरात्रौमदर्थेभानु
सूनुना ॥ यस्यप्रसादात्सततंपांडवःपृथिवीपतीन् ॥ ६१ ॥ जितवान्केशवश्चापिसदूरेमधुसूदनः ॥ एतावदुक्त्वावचनं
समाहूयवृकोदरं ॥ ६२ ॥ प्रत्युवाचमहाबुद्धिर्भीमसेनमिदंवचः ॥ भीमभीममहाबाहोकथंयज्ञःप्रजायते ॥ ६३ ॥ गो
त्रहिंसांकथंभीमनाशयिष्येहितद्वद ॥ बहुविघ्नकरोयागस्तस्माच्छोचामिपांडव ॥ ६४ ॥ उपहास्यपदंयास्येयद्यपूर्णोभ
विष्यति ॥ भीमउवाच हयोनविद्यतेराष्ट्रेनवित्तंभवतोदितं ॥ ६५ ॥ नसमीपेहृषीकेशःकस्मात्प्रोक्तंहितद्वचः ॥ समी

* दर्शनंस्पर्शनंक्रीडाशृंगारोगुह्यभाषणं ॥ सृष्टान्नंप्रियमेकत्रशयनंभार्ययासह ॥ निर्विकारंमनःकुर्यादसिपत्रव्रतंत्विदं ॥ १ ॥

पस्थःसदाकृष्णोविद्यतेतवमारिष ॥ ६६ ॥ सर्वाश्वसंपदःसंतियदिकृष्णःसमीपगः॥ सर्वपापविनिर्मुक्तायन्नामग्रहणे
नच ॥ ६७॥ नराभवंतिराजेंद्रसमीपस्थस्यकिंफलं ॥ नपातकंतेनृपतेगोत्रहिंसाकृतंभुवि ॥ ६८॥ विनापिमाधवोयज्ञं
पावयिष्यतिमेमतिः॥ पूर्वमेवहिराजेंद्रयुद्धकालउपस्थिते ॥ ६९ ॥ नोदितास्मोवयंतेनकृष्णेनामितबुद्धिना ॥ कुर्वंतु
युद्धंसततमितितेविस्मृतंकथं ॥ ७० ॥ राजसूयाश्वमेधानांपुण्यंपावयितुंजनं ॥ नसमर्थमहाराजविनातंयज्ञनायकं॥
॥ ७१ ॥ व्यासंपृच्छस्वराजेंद्रक्रतुयोग्यंतुरंगमं ॥ कुत्रापिवर्तमानंमेशंसत्वेषमहामुनिः॥ ७२॥ जैमिनिरुवाच ए
तच्छुत्वावचस्तस्यभीमस्यामिततेजसः॥ प्रत्युवाचपुनर्व्यासोधर्मराजमिदंवचः॥ ७३ ॥ व्यासउवाच धन्योऽसि
वीरभद्रंतेरुचिरंतवभाषितं॥ हयस्तुविद्यतेदूरेपुरींभद्रावतींप्रति ॥ ७४ ॥ यौवनाश्वेनवीरेणरक्ष्यमाणोदिनेदिने॥ अ
क्षौहिणीभिर्दशभिःपाल्यतेधर्मनंदन ॥ ७५ ॥ पवनेनापिसंपर्कोंलभ्यतेनास्यवाजिनः॥ मानवस्यवराकस्यसंख्याका
ग्रहणेनृप ॥ ७६ ॥ कृपणेनयथावित्तंपाल्यतेतुरगस्तथा ॥ राजारक्षापरोनित्यंबलात्तंकःसमानयेत्॥ ७७ ॥ तुरगंयज्ञ
सिद्ध्यर्थंधर्मराजस्यपांडव ॥ ७८ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेयज्ञप्रारंभोनामप्रथमोऽध्यायः॥ १ ॥ ॥ ७९ ॥
जैमिनिरुवाच ततोऽब्रवीद्भीमसेनःप्रहसन्निवभारत ॥ अहंहयंतंतुबलादानयिष्यामिमारिष॥ १ ॥ एकाकीतत्रया
स्यामिजित्वातंबलिनंनृपं॥ ससैन्यंयातुतेराजन्संशयःसुमहानपि॥ २ ॥ वासुदेवंचिंतयानोनरःकर्मकरोतियः ॥ स
र्वार्थसिद्धिंलभतेसत्यमेतद्ब्रवीमिते ॥ ३ ॥ वासुदेवमनादृत्यतपोयज्ञादिकंचयत् ॥ निष्फलंजायतेसर्वंयथाऽभाग्यस्य
चेष्टितं ॥ ४ ॥ नानयेतुरगंचाहंगतिंघोरामवाप्नुयां ॥ येलोकामातृहंतॄणांयेचैवपितृघातिनां ॥ ५ ॥ तेलोकाममजायेर
न्यदितंनानयेहयं ॥ एककूपोदकग्रामेयेवसंतिद्विजातयः॥ ६ ॥ नवेदाध्ययनंयत्रयत्रनोशिवपूजनं ॥ तत्रक्षणंनिवस
तांलोकायेममसंतुते ॥ ७॥ इत्येवमुक्त्वावचनंभीमस्तूष्णींस्थितस्तदा ॥ युधिष्ठिरउवाच भीमसेनमहाबाहोग्रहणंतु
रगस्यमे ॥ ८ ॥ विषमंभातिहृदयेत्वयैकेनवृकोदर ॥ यौवनाश्वोऽपिबलवान्बलिनस्तस्यसैनिकाः॥ ९ ॥ एकाकीतत्रगं
तासिचिंतातुमहतीमम ॥ जैमिनिरुवाच धर्मराजस्यतद्वाक्यंश्रुत्वाकर्णात्मजोऽब्रवीत् ॥ भीमसेनद्वितीयंमांसहायं

नयमाचिरं ॥ १० ॥ भीमसेनउवाच पितातवहतोऽस्माभिर्यदाप्रभृतिपुत्रक ॥ विलोक्यत्वन्मुखंलज्जाजायतेमह
तीहिनः ॥ ११ ॥ वृषकेतुरुवाच उपकारःकृतःसम्यकूजनकोमेरणेहतः ॥ भवद्भिःक्षात्रधर्मेणकुत्सितंतस्यनाशितं ॥
॥ १२ ॥ दुर्योधनस्यभृत्योऽसौयावज्जीवंधरातले ॥ संजातोधर्मविद्वेषीसमलोऽनंतवर्जितः ॥ १३ ॥ क्लिश्यंतीचसभाम
ध्येद्रौपदीयोषितांवरा ॥ तेनकर्णेनसादृष्टायथातुविजनेसती ॥ १४ ॥ गोसहस्राणिमत्स्यस्यगृहीतानिमयाश्रुतं ॥ म
त्पित्रापांडवेनापिमोचितानीतिर्चिंतये ॥ १५ ॥ अत्यंतमलपूर्णायकर्णाययुधिपातनं ॥ कृतंतुपांडवैर्वीरैःशुद्ध्यर्थंदान
मुत्तमं ॥ १६ ॥ कश्चिद्दत्त्वातिहिकरात्काचंवापिवराटिकां ॥ दत्वाचिंतामणिंयद्वदर्जुनेनतथाकृतं ॥ १७ ॥ गृहांगणेवर्त
मानंकस्यचित्त्वफलंतरुं ॥ समुन्मूल्यनयेत्कश्चित्संस्थाप्यसुरपादपं ॥ १८ ॥ तदाऽपराधःकिंतेनब्रूहिभीममहामते ॥ भ
वत्प्रसादात्कर्णोऽसौप्राप्तवान्भास्करंपदं ॥ १९ ॥ अपकीर्तिस्तुतस्येयंवर्ततेऽद्यापिभूतले ॥ तामस्मिन्यज्ञकालेतेनाश
यिष्यामिपांडव ॥ २० ॥ यौवनाश्वस्यनृपतेर्निर्मथ्यबलसागरं ॥ तुरंगंभीमसेनस्तुसमानयतुसत्वरं ॥ २१ ॥ जैमिनि
रुवाच भीमस्तस्यवचःश्रुत्वासमालिंग्याथकर्णजं ॥ समीपस्थंनिजंपौत्रमिदंवचनमब्रवीत् ॥ २२ ॥ घटोत्कचेनते
पित्रातारिताःसर्वपांडवाः ॥ स्वपृष्ठंतान्समारोप्यनीतावैगंधमादनं ॥ २३ ॥ तथात्वंधर्मराजानंवीरपालयपृष्ठतः ॥ अ
हंतुकर्णपुत्रेणसहितोहयमानये ॥ २४ ॥ पार्थेनचत्वयाराजारक्षणीयःप्रयत्नतः ॥ यावद्गृहीत्वातुरगंपुनरायामिसत्वरं ॥
॥ २५ ॥ मेघवर्णउवाच तवगात्रात्समुत्पन्नोधीरःसचघटोत्कचः ॥ पवित्रंतत्कृतंकर्मतेनकश्चात्रविस्मयः ॥ २६ ॥
तावद्रथ्याजलंहीनंयावत्सुरनदीगतं ॥ नजायतेपुनःप्राप्तंवारितत्पातकापहं ॥ २७ ॥ सतांसंगाच्चदुःप्राप्तंकिंचनैवास्ति
देहिनां ॥ शिलारामपदंप्राप्यकिंनपूतापुराऽभवत् ॥ २८ ॥ पुरींभद्रावतींवीरगमिष्यस्यमुनासह ॥ तत्रमांनयभद्रंतेहयं
तमहमानये ॥ २९ ॥ भवान्युद्धगतस्थोहियुद्धंकर्तातुकर्णजः ॥ अहंस्वपृष्ठमारोप्यतुरगंतमिहानये ॥ ३० ॥ शीघ्रंनिर्ग
च्छभीमाद्यनमस्कृत्यधराधिपं ॥ ध्रुवस्तेविजयःपार्थभविष्यतिमहद्यशः ॥ ३१ ॥ नमस्कारोहरेःपुंसांकिंकिंनकुरुतेबत ॥
पुत्रमित्रकलत्रार्थराज्यस्वर्गापवर्गदः ॥ ३२ ॥ हरिस्त्वघंध्वंसयतिव्याधीनाधीन्निरस्यति ॥ धर्मंविवर्धयन्नित्यंप्रयच्छ

तिमनोरथं ॥ ३३ ॥ किंचिन्नदुष्कृतंपार्थहरिंप्रणमतांनृणां ॥ भीमउवाच धन्योऽसिपुत्रकुशलंभाषसेपरमंहितं ॥
॥ ३४ ॥ त्वमागच्छमयासार्धंवृषकेतुरयंतथा ॥ साहाय्यार्थंमहावीरतथात्वमपिपुत्रक ॥ ३५ ॥ त्रयोवयंगमिष्यामःप
रराष्ट्रेनसंशयः ॥ जैमिनिरुवाच एतत्तयोःशुभंवाक्यंनिशम्यकुरुनंदनः ॥ ३६ ॥ महताचैवहर्षेणप्रत्युवाचवृकोदरं ॥
मुनिनाभाषितंकार्यंतत्सर्वमवधारितं ॥ ३७ ॥ क्रियतेभवतासर्वमावाभ्यामपिपांडव ॥ रात्रिर्जातातुमहतीगंतुकाम
स्तपोधनः ॥ ३८ ॥ तस्माद्गच्छामहेसर्वेऋषिंभावयितुंगृहात् ॥ व्यासस्ततोनिर्जगामगृहात्संपूजितस्तुतैः ॥ ३९ ॥ गते
व्यासेधर्मराजःपुनश्चितापरोऽभवत् ॥ कंचपृच्छामिसुहृदंकथंवित्तसमागमः ॥ ४० ॥ भ्रातृभिःसहितोरात्रौदुःखितो
वाक्यमब्रवीत् युधिष्ठिरउवाच कथंहयस्यानयनंकथंयज्ञक्रियाभवेत् ॥ ४१ ॥ सर्वास्वापत्सुनःपातिसर्वदामधु
सूदनः ॥ सदूरेदेवकीपुत्रःकोहितंमेकरिष्यति ॥ ४२ ॥ हानिमग्नोऽस्मिगोविंदगोत्रहिंसार्णवेऽप्लुवे ॥ कथंयज्ञंकरिष्या
मित्वंचेत्रातानजायसे ॥ ४३ ॥ यथालज्जार्णवेमग्नाद्द्रौपदीतारितात्वया ॥ तथातारयमामस्माद्वृजिनान्मधुसूदन ॥
॥ ४४ ॥ एह्येहिकृष्णगोविंददामोदरदयार्णव ॥ त्वंचेत्रातानचास्माकंतर्हिंल्येषविधिश्च्युतः ॥ ४५ ॥ जैमिनिरुवाच
एतावदुक्त्वावचनंपुनःकृष्णकथामृतं ॥ यावत्स्मरतिगोविंदंतावद्द्वारेसमागतः ॥ ४६ ॥ स्वयंसकृष्णोभगवान्सर्वव्या
पीरमापतिः ॥ अब्रवीच्चप्रतीहारंमांनिवेदयभूपतेः ॥ ४७ ॥ समयेनैवराजानोद्रष्टव्याविदुषांमतं ॥ तत्केशववचःश्रु
त्वाद्वारपोवाक्यमब्रवीत् ॥ ४८ ॥ प्रतीहारउवाच सर्वदातवगोविंदसमयोधर्मनंदने ॥ कथितोधर्मराजेनममा
ग्रेसमयस्तव ॥ परापवादनिरताःपरद्रव्यापहारिणः ॥ ४९ ॥ परस्त्रीकामुकायत्रतत्रनावसरस्तव ॥ नायंपरद्रव्यरतो
नापवादीनकामुकः ॥ ५० ॥ तस्माद्विलोकयनृपंकुरुचास्यमनोरथं ॥ अर्जुनंपुरतःकृत्वाभीमसेनसमन्वितः ॥ ५१ ॥
त्वांचिंतयतिगोविंदस्तस्याशांपरिपूरय ॥ जैमिनिरुवाच एवंतुकथ्यमानंतंप्रत्युवाचजनार्दनः ॥ ५२ ॥ राजा
नंयाहिभद्रंतेशासनान्ममसत्वरं ॥ इत्युक्तोवासुदेवेनत्वरितोधर्मनंदनं ॥ ५३ ॥ प्रत्युवाचहसन्वाक्यंगत्वाधर्मन्यवेद
यत् ॥ कृष्णश्चैवागतोद्वारिप्रवेशंकर्तुमिच्छति ॥ तच्छ्रुत्वाभाषितंतस्यधर्मराजस्त्वरान्वितः ॥ ५४ ॥ विहायचासनंभी

मंप्रत्युवाचमहामतिः॥ युधिष्ठिरउवाच भीमब्रूतेप्रतीहारःकृष्णमत्रसमागतं॥ ५५ ॥ अर्धरात्रेमखप्रियार्थंमख
निष्पत्तयेऽथवा॥ त्वमायाहिमयासार्धंयामियत्रसमेप्रियः ॥ ५६ ॥ निर्ययौधर्मराजोऽथभ्रातृभिस्तंहरिंप्रति ॥ ताव
त्तेनापिहरिणाशिरसासनमस्कृतः ॥ ५७॥ समुत्थाप्यकराभ्यांतंमूर्ध्निचाघ्रायपांडवः॥ समालिंग्यस्थितःकृष्णंनेत्रांभः
शिरसिक्षिपन्॥५८॥कृष्णबाह्वंतरेलीनःसतद्दोरंतरेहरिः॥भीमार्जुनौहरिपदेसंलग्नौपुरतोयमौ॥५९॥अर्घ्यादिक्रियया
भ्यर्च्यपांडवाविस्मयंययुः॥ द्रौपदीतंनमस्कृत्यहसंतीवाक्यमब्रवीत् ॥ ६० ॥ द्रौपद्युवाच किमर्थंक्रियतेवीरैर्वि
स्मयःकेशवंप्रति ॥ अर्धरात्रेपुराप्राप्तोयदादुर्वाससोभयं ॥ ६१ ॥ आजगामभयत्रातायुष्मान्समधुसूदनः॥ वस्त्ररूपी
सभामध्येमिषतांवःपुराहरिः ॥ भक्तानामनुकंपार्थंतस्याविर्भावइष्यते ॥ ६२ ॥ यस्मिन्कालेनजननीनपितानचबां
धवाः॥ भर्तारोनभवंतश्श्वगुरवोनपितामहाः॥ ६३ ॥ रक्षितुंमांसमर्थाहितदासंरक्षिताऽमुना ॥ दुर्योधनेनप्रहितोदुर्वा
सामुनिपुंगवः॥ ६४ ॥ शिष्यायुतैःपरिवृतोवनेनिवसतांयदा ॥ तदामेमनसाध्यातोदयासिंधुर्जनार्दनः॥ ६५ ॥ प्रि
यामंकगतांत्यक्त्वावायुवेगःसमागतः ॥ स्थाल्याःकोणेऽवशिष्टंतुशाकपत्रंनराधिप ॥ ६६ ॥ भुक्त्वामुनिगणाःसर्वेनी
तास्तृप्तिंकृपालुना॥ यदायदासतांग्लानिर्जायतेभुविभारत ॥ ६७॥ तदातदास्वयंकृष्णस्त्राताभवतिसंस्मृतः जैमि
निरुवाच इत्थंस्तुतस्तयादेव्यातुतोषनिषसादच ॥ ६८ ॥ ततःपरंधर्मराजोवचनंचेदमब्रवीत् युधिष्ठिरउवाच
अधुनैवस्मृतोऽसित्वंक्लेशितेनमयाहरे ॥ ६९ ॥ सफलंकार्यमेतन्मेभविष्यतिजनार्दन ॥ हयमेधेमतिर्जाताहितंप्रब्रूहि
केशव ॥ ७० ॥ यदियज्ञंप्रतिविभोसमर्थोऽस्मिधरातले ॥ श्रीकृष्णउवाच त्वयाकर्तुंनशक्योऽस्तिसमयेधर्मनं
दन॥ यागोऽयंसहसाभूमौवीराणांतपतामिह॥ ७१ ॥ भीममंत्रेणराजेंद्रक्रियतेशोभनामतिः ॥ नायंजानातिवक्त्राशी
कंचिन्मंत्रंतथामतिं॥ ७२ ॥ स्थूलोदरःपरंमंदोजायतेनात्रसंशयः॥ विवर्णाराक्षसीभार्याविद्यतेऽस्यगृहेसदा ॥ ७३ ॥
तयाहृतामतिश्चास्यतस्माद्वेत्तिनपांडवः॥ ईदृशस्याल्पबुद्धेश्चभवान्मंत्रंकरोतिचेत्॥ ७४ ॥ तर्हिजातःपरोयागोमंत्री
यस्यवृकोदरः॥ व्यंगांगहीनाबधिराःकुयोनिपुरताश्चये ॥ ७५ ॥ तेषांमंत्रोल्पसुखदःप्रोक्तःकविभिरेवच ॥ कामुकानां

जडानांचस्त्रीजितानांतथैवच ॥ ७६ ॥ श्वशुरस्यगृहेनित्यंजामाताकर्मकारकः ॥ तस्यापिनभवेन्मंत्रःकार्यसिद्धौकदाचन ॥ ७७ ॥ भीमोवेत्तिजरासंधंहिडिंबंबकमेवच ॥ सांप्रतंयेतुसंजाताःक्षत्रियाःसुमहाबलाः ॥ ७८ ॥ येनदृष्टाराजसूयेभीमसेनादिभिर्नृपाः ॥ धर्मिष्ठाःसुमहावीर्यावदान्याश्चजितेंद्रियाः ॥ ७९ ॥ तान्नजानातिभीमोऽसौसुबहून्बलदर्पितान् ॥ अर्जुनेनप्रतिज्ञातंजयद्रथवधंप्रति ॥ ८० ॥ अनामंत्र्यमयासार्धंतत्साहसतरंमहत् ॥ अधुनापिमहाराजभीमसेनबलेनच ॥ ८१ ॥ कथंयास्यसियज्ञस्यपारंपांडवभूमिप ॥ यज्ञेऽस्मिंश्चमहीपालतत्साहसतरंमम ॥ कथंसंपाल्यतेघोटोदिक्षुसर्वासुभारत ॥ ८२ ॥ सर्वत्रपरिगंताऽसौदेवगंधर्वमानवान् ॥ तेऽपिवीराविजेतव्याधारयंतिचयेहयं ॥ ८३ ॥ असिपत्रव्रतंकार्यंप्रथमंदीक्षितेनहि ॥ पुरारामेणरक्षार्थंतुरगस्यमहाबलः ॥ ८४ ॥ नियुक्तोभरतोवीरोबद्धःसचहयान्वितः ॥ वीरेणसुरथेनैवपुरींशुक्तिमतींप्रति ॥ ८५ ॥ पश्चात्सराघवेणापिमोचितःपौरुषेणसः ॥ हयंतेपांडवःपार्थःपालयिष्यतिमत्सखा ॥ ८६ ॥ कस्त्वामत्रस्थितंत्राताकस्तुमोचयिताऽर्जुनं ॥ गृहीतंतत्रकेनापिवीरेणहयरक्षकं ॥ ॥ ८७ ॥ एषमेसंशयस्तीव्रोजायतेधर्मनंदन ॥ ८८ ॥ इत्याश्वमेधिकेपर्वणिजैमिनिकृतेश्रीकृष्णोक्तिश्रवणंनामद्वितीयोऽध्यायः ॥ २ ॥ ॥ ७ ॥ ॥ ७ ॥ जैमिनिरुवाच वासुदेवस्यवाक्यानिश्रुत्वाभीमोऽब्रवीद्वचः ॥ मेघगंभीरयावाचाप्रहसन्निवकेशवं ॥ १ ॥ भीमउवाच रम्योऽयंसमयःश्लाघ्यःसहसावीरपूजितः ॥ धर्मराजेनवैकृष्णकर्तुंशक्योमहाक्रतुः ॥ २ ॥ प्रत्युत्तरंमयादत्तंत्वांविचिंत्यजनार्दन ॥ सत्यंस्थूलोदरादेवजायंतेमतिवर्जिताः ॥ ॥ ३ ॥ त्वयोदितंचबह्वाशीमतिहीनश्चजायते ॥ एतत्सर्वंत्वच्छरीरेमयैवचनिरीक्षितं ॥ ४ ॥ तवोदरेविश्वमिदंभातिसर्वंचराचरं ॥ स्थूलोदरःकस्त्वदन्योबह्वाशीकस्त्वाधिकः ॥ ५ ॥ ब्रह्मादयःसुराःसर्वेसरितःसागरादयः ॥ सर्वाधरादिशश्चैवकिन्नमातितवोदरे ॥ ६ ॥ त्वत्तःस्थूलोदरःकश्चिन्नभूतोनभविष्यति ॥ सभवान्मामकंभोज्यमुदरंचजनार्दन ॥ ७ ॥ शंसन्लज्जांनचाप्नोषित्वंवैमांभाषसेम्रृषा ॥ कस्तुजांबवतींभार्यांवानरींमाधवंविना ॥ ८ ॥ कुरुतेरुक्मिणींप्राप्यगुणज्ञःखलुकेशवः ॥ वराहमत्स्यकूर्माणांयोनिःप्रियतमातव ॥ ९ ॥ वामनस्त्वंपुराजातस्तस्माद्बकंप्रभाषसे ॥ लज्जाश्रय

स्तेसततंकामः पुत्रपदंगतः ॥ १० ॥ स्त्रीजितोनत्वदन्योऽस्तिदेवानांत्वंमहातरुं ॥ पारिजातंसमुत्पाव्यस्त्रीनिमित्तमिहानयेः
॥ ११ ॥ क्षीराब्धौसततंवासःश्वशुरस्यगृहेतव ॥ एतेरम्यगुणाःप्रोक्ताबहवोऽन्येपितैरलं ॥ १२ ॥ कस्माद्दूषयसेयज्ञंभी
षयन्वैनराधिपं ॥ येहताःक्षत्रियाःपूर्वंजरासंधमुखामया॥१३॥भवंतंपुरतःकृत्वातथैवारीन्जयामहे ॥ बाहुभ्यामुद्धरेचो
र्वींविकिरन्सर्वपर्वतान् ॥ १४ ॥ कारयिष्याम्यश्वमेधंनान्यथानृपचिंतितं ॥ आगमिष्यतिमेकृष्णःकरिष्यतिचमत्प्रियं ॥
॥ १५ ॥ इत्थंविचिंत्यचास्माभिःसमागत्यान्यथाकथं ॥ करोषिदेवकीपुत्रसफलोऽस्तुतवाश्रयः ॥ १६ ॥ पिपासयापीड्य
मानोबहुकालेनचातकः ॥ मेघस्योदयमुद्ग्रीवःसाभिलाषंनिरीक्षते ॥ १७ ॥ तादृशस्यगलेवृष्टिंखदिरांगारपूरितां ॥ यदिपा
तयतेमेघस्तेनकिंक्रियतेतदा ॥ १८ ॥ पंकेमग्नांहिगांत्रातुंप्राप्तोनाथःसुहर्षिता ॥ धेनुर्भवतिगोविंदसचतांचेन्निमज्जये
त् ॥ १९ ॥ तयाकस्यैवपुरतःकथनीयंजनार्दन ॥ अस्माकमपिसावस्थात्वामाश्रित्यात्रदृश्यते ॥ २० ॥ जैमिनिरुवाच
भीमस्यवचनंश्रुत्वाप्रत्युवाचजनार्दनः ॥ हर्षेणमहतायुक्तस्तेजःसंवर्धयन्निव ॥ २१ ॥ श्रीकृष्णउवाच धन्योऽसिभीम
भद्रंतेदीयतांपरिरंभणं ॥ त्वद्वाक्येनामुनावीरसंतुष्टंममानसं ॥ २२ ॥ एकंपृच्छामिराजानंकिमर्थंभयविह्वलः ॥ करोतिह
यमेधंहिघातयित्वारणेकुरून् ॥ २३ ॥ द्रोणंभीष्मंतथाकर्णंसुहृत्संबंधिबांधवान् ॥ मन्यतेपातकंजातमात्मनस्तुकलेवरे ॥
॥ २४ ॥ प्रददातुचतत्सर्वंमत्करेकिल्बिषंनृपः ॥ नाशयिष्येऽखिलंपापंपूतस्तिष्ठतुधर्मजः ॥ २५ ॥ भीमउवाच त्वत्करे
चार्पितंदेवस्वल्पंतद्बहुलंभवेत् ॥ वस्तुजातंनृपोवेत्तिनददातिहिदुष्कृतं ॥ २६ ॥ यज्ञजंसुकृतंहस्तेतवदास्यतिपांडवः ॥ अहं
तत्रगमिष्यामितुरगार्थंरमापते ॥ २७ ॥ भवान्रक्षतुराजानंयावदागमनंमम ॥ सुरक्षितेनृपेचैवसफलाःसर्वसिद्धयः ॥
॥ २८ ॥ धर्माभवंतिदेवेशसत्यमेतद्ब्रवीमिते ॥ सुकृतेनविनाजीवानराजंतेकथंचन ॥ २९ ॥ सर्वंसुकृतिजंपुण्यंभवान्गृह्णा
तुनःकरात् ॥ फलार्थीनैवराजाऽसौनचाहंदेवकीसुत ॥ ३० ॥ हरिंविनानतेलोकावैकुंठप्रमुखाहिनः ॥ प्रियाभवंतिसुखदा
संगतिश्चास्तुतेसदा ॥ ३१ ॥ जैमिनिरुवाच ततोयुधिष्ठिरःप्रीतोबभूवजनमेजय ॥ बुभुजेकृष्णसहितःसुष्वापभवनेसु
खं ॥ ३२ ॥ प्रभातसमयेजातेभीमःकर्णात्मजस्तथा ॥ मेघवर्णोमहाबाहुस्त्रयस्तेनिर्गतामुदा ॥ ३३ ॥ कुंतींयुधिष्ठिरंकृष्णं

नमस्कृत्यतथाऽपरान् ॥ ददौकुंतीमोदकांस्तान्पाथेयान्पांडवायसा ॥ ३४ ॥ जननीकरसंस्पृष्टांस्तत्सःप्राश्यवृकोदरः ॥ मोदकैस्त्वन्यथातृप्तिर्जायतेनकथंचन ॥ ३५ ॥ तथाऽन्यान्मोदकान्भीमोमेघवर्णकरेददौ ॥ समालिंग्यार्जुनंतत्रइदंवचनमब्रवीत् ॥ ३६ ॥ पार्थपालयराजानंब्राह्मणान्प्रतिपालय ॥ प्राप्तंमांमंदिरंविद्धिगृहीत्वातुरगंप्रति ॥ ३७ ॥ प्रसन्नंकेशवंपश्यन्संतुष्टंममानसं ॥ सहायौचापिल्हषितावुद्योगंप्रतिपांडव ॥ ३८ ॥ स्मरणाद्वासुदेवस्यलयंगच्छंत्युपद्रवाः ॥ पातकानियथापार्थविद्रवंतितथाऽहिताः ॥ ३९ ॥ यौवनाश्वंसतुरगंप्राप्तंविद्धिससैनिकं ॥ प्रसादात्केशवस्यास्यसंशयोमेनविद्यते ॥ ४० ॥ जैमिनिरुवाच एतावदुक्त्वावचनंपुरींभद्रावतींप्रति ॥ ययौताभ्यांयुतोधीमान्पदातिःप्राङ्मुखस्तदा ॥ ४१ ॥ लंघयित्वासविषयान्तृतीयेऽहनितांपुरीं ॥ प्राप्तःकतिपयैर्वीरैःपुरींरम्यांकुरूद्वह ॥ ४२ ॥ ददर्शपर्वतारूढोयौवनाश्वेनपालितां ॥ काननानांसहस्रैस्तुसमंतात्परिवारितां ॥ ४३ ॥ संपूर्णसरसैर्युक्तांभूषितांनगरींशुभां ॥ यूपैर्नलभ्यतेमार्गोहोमधूमैर्नदृश्यते ॥ ४४ ॥ नबहिःश्रूयतेशब्दोवेदघोषैर्धनुःस्वनैः ॥ नगर्यास्तोरणैरम्यैःप्रासादैर्मंडपैर्मठैः ॥ ॥ ४५ ॥ सत्रैस्त्रयस्तेसंतुष्टाःप्राकारैःपरिखादिभिः ॥ ददर्शभीमसेनोवैवनंचैवद्रुमैर्युतं ॥ ४६ ॥ फलितायत्ररंभास्ताःस्वफलैर्भांतिभूरिशः ॥ नम्राःफलातिभारेणसुगुणैःसज्जनाइव ॥ ४७ ॥ सुवृत्तैःसरलादीर्घानारिकेलद्रुमाःफलैः ॥ दृश्यंतेबहुलायत्रवंशाःसत्पुरुषैरिव ॥ ४८ ॥ रक्षंतिस्वफलैर्नित्यंनरवाक्यानिसर्वदा ॥ सर्वकार्याणिकुर्वंतितत्रवैक्रमुकद्रुमाः ॥ ॥ ४९ ॥ सकंटकैःफलैर्नित्यंपनसाःपरत्नये ॥ स्थिताःसर्वांगजैस्तत्रदृष्टाभीमेनभारत ॥ ५० ॥ अनंतत्वंगताव्रक्षाःखर्जूराणांसहस्रशः ॥ फलैःसंकुचितैरेवनृणांतापापहारिणः ॥ ५१ ॥ विदीर्णैर्यत्रदाडिंब्यःस्वफलैःशुकसंयुतैः ॥ बीजपूरैःसरागैस्तैःकुर्वंतिहिहितंजने ॥ ५२ ॥ रसालाःकोकिलैर्लुब्धैःसारंगैश्चशिखंडिभिः ॥ सेव्यंतेमाधवस्येवगुणाःसद्भिर्निरंतरं ॥ ॥ ५३ ॥ पंचधैवत्वचाऽत्यंतांफलानिकरमर्दिनां ॥ प्रयच्छंतिरुचिंरम्यांनामानीवहरेर्गतिं ॥ ५४ ॥ वहतांजलयंत्राणामुदकंसरसीगतं ॥ प्रीणातिविविधान्वृक्षानतिथीनातिथेयवत् ॥ ५५ ॥ बीजपूरकनारिंगजंबीरामलकद्रुमाः ॥ जंबूर्निवकदंबाश्चबादामाक्रोडकावने ॥ ५६ ॥ चिंचिणीबदरीशालापुष्पिताशोकचंपकाः ॥ नागकेसरपुन्नागाबकुलाःपाटलाः

शुभाः ॥ ५७ ॥ चिंचिरीकाःशुकाबर्हिसारिकारुतनादिताः ॥ सुवर्णकेतकीजातीयुवतीमोगरादयः ॥ ५८ ॥ शतपत्री
सुपत्रीचकर्णिकाश्चापिपुष्पिताः ॥ विलोक्यभीमःसंतुष्टोवनंसुरभिपादपं ॥ ५९ ॥ वीरायकर्णपुत्रायदर्शयित्वामहद्व
नं ॥ नगरींचसुरम्यांतांवाजिपानंसरःशुभं ॥ ६० ॥ रत्नालयंरौप्यशिलाबद्धंशीतजलंशिवं ॥ नानासत्वसमाकीर्णंकेश
वस्येवमानसं ॥ ६१ ॥ अब्रवीद्वृषकेतुंतंकिंकर्त्तव्यंमयाऽधुना ॥ मध्याह्नेतुरगस्यात्रभविष्यतिसमागमः ॥ ६२ ॥ रक्ष्य
माणःसुबलिभिर्वीरैःसंग्रामकोविदैः ॥ नमुंचंतिहयंवीराःकृपणाःस्वधनंयथा ॥ ६३ ॥ त्रयोवयंपर्वतेऽस्मिन्लतावृक्ष
समाकुले ॥ तावत्तिष्ठामहेसर्वेयावद्धयसमागमः ॥ ६४ ॥ पाल्यमानोऽपितुरगोग्रहीष्यामोनसंशयः ॥ अहमादौगमि
ष्यामिरणमध्येमहाबलः ॥ ६५ ॥ मत्पृष्ठपालकौवीरौभवंतौभवतांप्रभू ॥ एवंमंत्रस्तुसुखदोभविष्यतियशप्रदः ॥
॥ ६६ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेभीमवाक्यंनामतृतीयोऽध्यायः ॥ ३ ॥ ॥ छ ॥ ॥ छ ॥
जैमिनिरुवाच भीमस्यवचनंश्रुत्वाप्रत्युवाचसकर्णजः ॥ अक्षौहिणीनांदशकंश्रुयतेचास्यभूपतेः ॥ १ ॥ तन्मध्येहय
रक्षार्थमागमिष्यंतिकेचन ॥ त्वद्वाहुबलमाश्रित्यनभवंतिरणेजनाः ॥ २ ॥ गंगातटमिवासाद्यपातकानांगणान्नृणां ॥ वि
नाशंचैवगच्छंतितथाभीमतवाहिताः ॥ ३ ॥ कालकूटंविषंतावत्परितापेनदारुणं ॥ रुद्रस्यपुरतोनैवयावद्भवतिसंगतं
॥ ४ ॥ कामुकाविषयैस्तावद्बाध्यंतेप्राणिनोभुवि ॥ यावद्वस्तुविचारेणसंगतानभवंतिते ॥ ५ ॥ गमनागमनंतावद्देहिना
मिहजायते ॥ स्मरणंवासुदेवस्ययावत्तेषांनरोचते ॥ ६ ॥ पितॄणांबंधनंतावन्नरकेपतनंतथा ॥ नयावत्कुलजःपुत्रोगया
पिंडप्रदोभवेत् ॥ ७ ॥ धर्मराजनिमित्तंचकृष्णप्रीत्यैवृकोदर ॥ तुरगग्रहणेनूनंसिद्धिरत्रविलोक्यते ॥ ८ ॥ एतेपश्यगजाः
प्राप्ताःसमदामधुपैर्वृताः ॥ करेणवश्चकरभाःकज्जलस्येवपर्वताः ॥ ९ ॥ जलपानंनकुर्वंतिनिर्मलंकलुषंजलं ॥ उन्मज्जं
तिनिमज्जंतिमहामात्रैरधिष्ठिताः ॥ १० ॥ प्रीताःप्रेमजलैःस्त्रीणांकामुकाःपुरुषाइव ॥ जलेनयेनजीवंतिसरागंकुर्वतेच
तत् ॥ ११ ॥ सिंदूरेणातिरागेणस्वकपोलच्युतेनच ॥ नागकुंभान्दानहीनान्मधुपानलिनीवने ॥ १२ ॥ प्रविष्टास्तान्परित्य
ज्यमलिनेषुनसौहृदं ॥ मृणालानिमरालाश्चगृह्णंतिकृपयान्विताः ॥ १३ ॥ षट्पदेभ्यःप्रयच्छंतिभूतसाम्यंगताइव ॥ उ

च्छलंतिजलेमत्स्याधनंप्राप्ययथाऽधनाः ॥ १४ ॥ चक्रवाकाश्चक्रवाक्यःसंगताःप्रेमपूरिताः ॥ दृश्यंतेऽस्मिन्हिसरसि
भीमसेनमहाबल ॥ १५ ॥ अतःपरंहितुरगाःसमागच्छंतिसत्वराः ॥ गोक्षीरहिमवर्णाश्चरक्ष्यमाणामहारथैः ॥ १६ ॥ रे
णुःसमुत्थितोभूरिःपश्यपांडववाजिभिः ॥ वादित्राणांतथाघोषःपताकागगनंगताः ॥ १७ ॥ धूयंतेचमहाबाहोकालजि
ह्वायथास्थिताः ॥ यौवनाश्वोनृपःप्राप्तोभविष्यतिनसंशयः ॥ १८ ॥ वीराणांपश्यधीराणांमंडलानिसहस्रशः ॥ ध्वजाग्रे
विद्यतेगृध्रःकस्यतंचनविद्महे ॥ १९ ॥ शुकोभातिध्वजस्थोऽपिरौरवीतिचदुंदुभिः ॥ एनंहिबहवोयांतिवीरारणविशारदाः
॥ २० ॥ एवंविलोक्यतेयत्रतत्रवीरसमागमः जैमिनिरुवाच इत्थंवदतिवीरेतुवृषकेतौमहाबले ॥ २१ ॥ तुरगाज
लपानार्थंयौवनाश्वस्यमारिष ॥ मध्याह्नेतत्रसंप्राप्तानानावर्णाःसहस्रशः ॥ २२ ॥ त्रिभिस्त्रिभिस्तेविधृतादशधुवकमं
डिताः ॥ मंदुरैर्बलिभिश्चित्रगतयःशिक्षिताश्चये ॥ २३ ॥ धाराभिःपंचभिर्युक्ताश्चलत्प्रोथाःसुकंधराः ॥ मुखेभ्योनिःस
रंतीवदृश्यतेखुरसंततिः ॥ २४ ॥ द्विजाननेभ्योहियथानिर्यातिपदपद्धतिः ॥ मायूरींतैत्तिरींमौष्ट्रींकुर्वंतोगतिमुत्तमां ॥
॥ २५ ॥ नाकुलींगतिमास्थायसमायांतिमहत्सरः ॥ आकंठविनिमग्नास्तेपपुस्तोयंसनिःस्वनं ॥ २६ ॥ आगतानिर्गता
श्चान्येदृष्टाभीमेनभारत ॥ वृषकेतुंप्रत्युवाचभीमोवचनमुत्तमं ॥ २७ ॥ भीमउवाच प्राप्ताहयाश्चबहवःसहयोनै
ववीक्ष्यते ॥ यन्निमित्तमिहप्राप्तावंयतावत्रयोजनाः ॥ २८ ॥ किंवानृपगृहेबद्धःसजलंपरिपास्यति ॥ हरिंविनानैवगतिर्ध
र्मराजस्यमंदिरे ॥ २९ ॥ अस्माकंविद्यतेतातभवान्जानातिनेतरः ॥ अपुत्राणांयथालोकाभवंतिनसुखप्रदाः ॥ ३० ॥
अदातॄणांयथाकामाब्रह्मचर्यवतांयथा ॥ बंधूनांचयथासंगोजितस्त्रीणांविलोक्यते ॥ ३१ ॥ नृपतीनाममंत्राणांचिरंराज्यं
नसुस्थिरं ॥ नयशःपुण्यहीनानांनसुखंपरिवादिनां ॥ ३२ ॥ नमोक्षोभक्तिहीनानांविष्णोरमिततेजसः ॥ वैभवंहियथा
नृणामनाराध्यचशंकरं ॥ ३३ ॥ तथाहयंविनाऽस्माकंगमनंनगजाह्वये ॥ भीमस्यवचनंश्रुत्वायावद्वदतिकर्णजः ॥ ३४ ॥
तावत्सतुरगःप्राप्तोरथिभिःपरिवारितः ॥ महागजैश्चसमदैःसादिभिःपत्तिभिस्तथा ॥ ३५ ॥ चामरैर्वीज्यमानस्तुसबलो
बद्धचामरः ॥ श्वेतातपत्रैःसंच्छन्नःक्षुद्रघंटाभिरन्वितः ॥ ३६ ॥ चंदनेनसुगंधेनकुंकुमेनापिचर्चितः ॥ तरुणीकरचिन्हा

निधारयन्स्वतनौहयः ॥ ३७ ॥ धृतमाल्योविचित्रांगोमालाभिश्चविभूषितः ॥ उभाभ्यांसंगृहीतश्चजयशब्दैःसुमंगलैः
॥ ३८ ॥ कृष्णागुरुमुखैर्धूपैर्धूप्यमानःपुरोगमैः ॥ स्पृशतेनखुराग्रैश्चधरणींबहुवल्लभां ॥ ३९ ॥ नानावादित्रनादेनवीरा
णांगर्जितेनच ॥ हयहेषेणनागानांबृंहितेनबभौहयः ॥ ४० ॥ भाविदर्शनपुण्येनश्रीकृष्णस्यनसंशयः ॥ पूज्यतेतुरगोना
नाधूपैर्दीपैःसुमंगलैः ॥ ४१ ॥ तंविलोक्यतथारूपंरक्षितंसुमहारथैः ॥ बालस्तद्ग्रहणेबुद्धिंसचक्रेभीमनंदनः ॥ ४२ ॥ उत्सु
कंतंतथालोक्यभीमसेनोऽब्रवीत्सुतं ॥ भीमसेनउवाच किंचिकीर्षसिवत्सत्वंब्रूहिसत्यंममाग्रतः ॥ ४३ ॥ उवाचभी
मंतरसामेघवर्णोऽथराक्षसः ॥ मेघवर्णउवाच त्वयाज्ञप्तोभीमसेनतुरगंपर्वतोपरि ॥ ४४ ॥ गृहीत्वावत्सवद्वीरति
ष्ठामीतिमतिर्मम ॥ सर्वेषांपश्यतांवीरवीराणांगणनानमे ॥ ४५ ॥ तंहरिंप्रसमीक्ष्याथवायुजंसमयाचत ॥ अनुज्ञांदेहि
मेस्वामिन्यौवनाश्वंसपुत्रकं ॥ ४६ ॥ बध्वानयामिपश्यत्वंवृषकेतुश्चकर्णजः ॥ अथवाक्षात्रधर्मेणयुद्धेजित्वामहारिपुम्
॥ ४७ ॥ तुरंगमानयिष्यामिसंभूतोयद्यहंत्वया ॥ स्वभृत्येविद्यमानेकिंस्वामीयुध्यतिमारिष ॥ ३८ ॥ आनीयाहंचतुरगं
करिष्येवृक्षसंयुतं ॥ एतावदुक्त्वावचनंप्रययौराक्षसस्तदा ॥ ४९ ॥ भूधरात्खंसमुत्पत्यमायांकुर्वन्सराक्षसीं ॥ अंधकार
स्तदात्यासीत्कालमेघइवोदितः ॥ ५० ॥ स्फुरंतिविद्युतोऽजस्रंस्फूर्जथुश्चमुहुर्मुहुः ॥ तन्मध्येसिंहनादंचसचकारपुनःपु
नः ॥ ५१ ॥ व्याकुलाश्चदिशःसर्वानप्राज्ञायतकिंचन ॥ देवासुरमनुष्याणांमहद्भयमुपाविशत् ॥ ५२ ॥ मेघनादस्यरूपे
णव्याप्तंतद्व्योममंडलं ॥ विमानानिचसर्वाणिभ्रमंतिस्मइतस्ततः ॥ ५३ ॥ एतस्मिन्नंतरेदेवःकश्चिदागत्यसत्वरः ॥ उ
वाचशक्रमासीनंसभामध्येतिदुःखितः ॥ ५४ ॥ देवउवाच भोभोस्वामिन्नजानीषेत्यात्मनश्चशुभाशुभं ॥ दैत्यः
कश्चिदिहागत्यकुरुतेलोकयातनां ॥ ५५ ॥ मायांविकुरुतेऽत्यंतंलोकक्षयचिकीर्षया ॥ तंत्वंजहिमहाबाहोलोकानांरक्ष
कोत्यसि ॥ ५६ ॥ इतिश्रुत्वामहेंद्रोऽसौरोषात्प्रस्फुरिताधरः ॥ उवाचसकलान्देवान्जानीध्वंकोऽयमागतः ॥ ५७ ॥ समा
गत्यप्रपश्यंतिदेवादूरस्थितास्तमतं ॥ दूतस्तुतैःसमाहूतःपृच्छगत्वाचकोभवान् ॥ ५८ ॥ सदूतस्तत्रगत्वावैपृष्टवान्मेघवर्ण
कं देवदूतउवाच कस्त्वंवीरसमायातःसत्यंब्रूहिममाग्रतः ॥ ५९ ॥ त्वयिदृष्टेमहावीरदेवानांभयमाविशत् ॥ दूतो

हंप्रेषितस्तैस्तुकिंतवात्रचिकीर्षितं ॥ ६० ॥ मेघवर्णउवाच नभेतव्यंसुरैःक्वापिनाम्नाऽहंमेघवर्णकः ॥ भीमस्यपौत्रोहैडिंबिर्यज्ञसाहाय्यकारकः ॥ ६१ ॥ हयंग्रहीष्येराज्ञोऽहंयौवनाश्वस्यभोसुर ॥ संभ्रमस्तुतदर्थंमेधर्मयज्ञार्थसिद्धये ॥ ॥ ६२ ॥ इतिश्रुत्वासदूतस्तुहर्षनिर्भरमानसः ॥ इंद्रायसर्ववृत्तांतंधर्मराजार्थमुत्तमं ॥ ६३ ॥ कथयामासहृष्टास्तेदेवाइंद्रादयस्तदा ॥ अपश्यन्कौतुकंतत्रमेघवर्णस्यसंयुगे ॥ ६४ ॥ मेघवर्णोऽपितंदृष्ट्वाहयंचांबरमाश्रितः ॥ जिहीर्षुराव्रजत्तत्रयत्रासौयज्ञियोहयः ॥ ६५ ॥ मोहयित्वातुतान्सर्वान्भूमौपात्याथवायुना ॥ रजउत्धूयचबलात्सैनिकाभयविह्वलाः ॥ ॥ ६६ ॥ केचिद्गृहीतशस्त्रास्तेकेप्यधावन्नितस्ततः ॥ एवंतुव्याकुलीकृत्यशिलावर्षेणवायुना ॥ ६७ ॥ सिंहनादंप्रकुर्वाणोहरिंतंजगृहेमुदा ॥ खमुत्पतंतंददृशुर्नीलमेघाकृतिंजनाः ॥ ६८ ॥ कुंडलांगदकेयूरमुकुटाद्यैर्विराजितं ॥ कोऽयंकोऽयंकुतश्चायंछिंधिभिंधीतिवादिनः ॥ ६९ ॥ इतिजल्पंतितेवीरावीक्षंतःखंसमाश्रितं ॥ साश्वंव्रजंतंतंदेवाःपुष्पवृष्ट्यासिषेविरे ॥ ॥ ७० ॥ हैडिंबेकृतकृत्योऽसौधर्मराजोऽनुजैःसह ॥ त्वादृशोयस्यपौत्रोऽभूद्धर्मसाहाय्यहेतवे ॥ ७१ ॥ इतिस्तुत्वातुतंदेवाजग्मुस्तेस्वमथालयं ॥ मेघनादोऽपिहंसंतंगृहीत्वाशीघ्रमागमत् ॥ ७२ ॥ आकाशस्थंसमालोक्यसाश्वंतौहर्षपूरितौ ॥ सिंहनादंप्रकुर्वंतौवीक्षंतौचमुहुर्मुहुः ॥ ७३ ॥ अत्रांतरेमहानासीद्गतेहंसेरवस्तदा ॥ यौवनाश्वबलेतस्मिन्नन्योऽन्यंजघ्नुरुद्धटाः ॥ ७४ ॥ गत्वातेकथयामासूराज्ञेवृत्तांतमादितः ॥ तच्छ्रुत्वासहसाराजापुत्रैःसहसमागतः ॥ ७५ ॥ गतंहंसंतुतंश्रुत्वादुःखक्रोधसमन्वितः ॥ उवाचकेननीतोऽयंहंसोप्यल्पायुषामम ॥ ७६ ॥ सदेवानपिनेष्यामिमानवान्यमसादनं ॥ इत्युक्त्वासहसाराजाक्रोधेनव्याकुलीकृतः ॥ ७७ ॥ आजुहावरथान्दिव्यान्नाम्नाकालांतकोपमान् ॥ आयातास्तेरथाःशीघ्रंनमस्कृत्यचतंप्रभुं ॥ ७८ ॥ आदेशोदीयतांस्वामिन्कोऽद्यप्राणैर्वियोज्यतां राजोवाच वियन्नीतोहरिर्वीराःशीघ्रंधावतमाचिरं ॥ ७९ ॥ इत्युक्ताःसहसोत्पत्यसहस्राणांचतुष्टयं ॥ तरसागगनेतंतुरुरुधुर्मुमुचुःशरान् ॥ ८० ॥ मेघनादस्तुतान्वीरान्प्रहसन्वाक्यमब्रवीत् मेघनादउवाच यमलोकेहिगंतव्यंभवद्भिर्नात्रसंशयः ॥ ८१ ॥ इत्युक्त्वातान्जघानाशुतलमुष्टिभिराशुगान् ॥ शिलामादायतान्सर्वान्पोथयामासराक्षसः ॥ ८२ ॥ तेहताभीमकर्माणःकायंत्यक्त्वा

दिवंगताः ॥ शापान्मनुष्यजन्मानःप्राप्तास्तेवैसुरालयं ॥ ८३ ॥ सतान्निर्मथ्यसंग्रामेयत्रतौवृषपांडवौ ॥ विहाय
सातत्रगंतुंमेघवर्णःप्रचक्रमे ॥ ८४ ॥ सैनिकाश्चापरेराज्ञोयुद्धायैवमनोदधुः ॥ हाहाकारोमहानासीत्संगृहीतेहयेतदा ॥
॥ ८५ ॥ गृहीतस्तुरगोयेनतंगृहीतेतिवादिनः ॥ क्वगतःकेननीतोऽसौकुतोयास्यतिनःपुरः ॥ ८६ ॥ नूनमात्मविनाशायज
हारतुरगंहियः ॥ अमर्त्यमपिनेष्यामोमृत्युलोकंनसंशयः ॥ ८७ ॥ जैमिनिरुवाच एवंब्रुवंतस्तेसर्वेगगनेराक्षसे
नहि ॥ नीयमानंचददृशुर्हरिंकोपसमन्विताः ॥ ८८ ॥ मुमुचुःशरवर्षाणिरुरुधुस्तेदिशोदश ॥ बाणैर्व्याप्यनभःसर्वंपातयं
तिस्मराक्षसं ॥ ८९ ॥ एतस्मिन्नेवकालेतुवृषकेतुर्महाबलः ॥ उवाचभीमंप्रहसन्प्राप्तोऽसौमेघवर्णकः ॥ ९० ॥ वृषकेतु
रुवाच धन्योऽसौराक्षसोभीमश्लाघ्यंकर्मामुनाकृतं ॥ गृहीत्वातुरगंप्राप्तःसकथंपात्यतेपरैः ॥ ९१ ॥ एतान्पश्यरणेप्रा
प्तान्वीरान्रणविशारदान् ॥ धारयामिसमक्षंतेपातयिष्येनसंशयः ॥ ९२ ॥ एतावदुक्त्वावचनंगृहीत्वापरमंधनुः ॥ पदा
तिःप्रययौधन्वीभीमसेनस्यपश्यतः ॥ ९३ ॥ पिनाकपाणिर्भगवान्यथादैत्यगणांस्तथा ॥ अधुनाचरणेवीरास्तिष्ठध्वमि
तिचाब्रवीत् ॥ ९४ ॥ निवर्त्तध्वंवृथाप्राणान्मात्यजध्वंममांतिके ॥ तेतुश्रुत्वावचस्तस्यविस्मयोत्फुल्ललोचनाः ॥ ९५ ॥
कोऽयंकस्यात्मजोवीरःकिंवाज्ञापयतिस्वयं ॥ अस्माकंपुरतःस्थित्वासमाह्वयतिकालवत् ॥ ९६ ॥ प्रब्रुवंतोवचश्चैवंपु
नस्तेरुरुधुस्तदा ॥ तंकर्णपुत्रंसमरेऽवर्षयंस्तेयथाघनाः ॥ ९७ ॥ सतान्बाणगणैर्घोरैःपातयित्वाधरातले ॥ ननादसिंहव
द्वीरःसिंहस्कंधोमहाभुजः ॥ ९८ ॥ महारथाःशरैश्छिन्नानदृश्यंतेनराधिप ॥ गजाविदारिताबाणैःपतिताधरणीतले ॥
॥ ९९ ॥ सादिनःपत्तयःसर्वेविनष्टाःशतशोरणे ॥ तानिसैन्यानिभग्नानितस्मात्कर्णात्मजात्तदा ॥ १०० ॥ स्मरणाद्वासु
देवस्यपातकानीवसर्वशः ॥ तत्रकेचित्पुरींप्राप्ताःकथयंतिहिवैक्षयं ॥ १०१ ॥ हयोनीतःपरैराजन्नयुतंविदलीकृतं ॥ वी
राणांरणधीराणांयौवनाश्वंनृपंप्रति ॥ १०२ ॥ जैमिनिरुवाच यौवनाश्वोमहाबाहुर्विस्मयंपरमंगतः ॥ तच्छ्रुत्वा
भाषितंतेषांमहाकोपेनपूरितः ॥ १०३ ॥ निर्ययौस्वबलेनैवनिखिलेनजनाधिपः ॥ पप्रच्छकतितेप्राप्ताःसंतिवीराःकिय
द्बलं ॥ १०४ ॥ ऊचुस्तेपित्रयोदृष्टाश्चतुर्थोनसमागतः ॥ एकेनगगनेराजन्नीतःसतुरगस्तव ॥ १०५ ॥ यूनापरेणसैन्यंतुपा

तितंचापरःस्थितः॥ यथात्ववैष्णवःपुत्रःस्वकुलंनिरयेऽशुचौ ॥ १०६ ॥ यौवनाश्वउवाच त्रयोदेवाश्चतेनूनंगृह्णंतितुरगंमम॥ नमानुषैःशक्यतेऽसौहयोनेतुंकथंचन॥ १०७॥ नयंतिमानुषाहंसंयदितेनैवमानुषाः॥ रणयज्ञेहितान्देवांस्तोषयिष्येऽहमद्यवै ॥ १०८॥ जैमिनिरुवाच इत्युक्त्वाप्रययौराजासैन्येनमहतावृतः ॥ प्रथमंराजशार्दूलस्तंददर्शवृकोदरं॥ ९ ॥ वृषध्वजंस्थितंयुद्धेविलोक्यत्द्दर्षितोऽभवत् ॥ धन्योऽसौबालकश्चैकोवीक्ष्यतेमांसमागतं॥ १० ॥ नभयंविद्यतेचास्यमृगराडिवलक्ष्यते॥ मृत्योर्भयंनकुरुतेयथायोगीतथाशिशुः ॥ ११ ॥ तस्मात्सर्वैर्ममैतस्यपश्यंतुबलमुत्तमं जैमिनिरुवाच तंतथाभाषमाणंतुससैन्यंहिसमागतं ॥ १२ ॥ निरीक्ष्यभीमस्तरसायोद्धुंप्रायाद्गदान्वितः ॥ वारयन्कर्णपुत्रंचपातयन्निवतद्बलं ॥ १३॥ प्रत्युवाचतदाभीमंवृषकेतुर्मुदावचः ॥ त्रैलोक्यंयदिसंप्राप्तंसंग्रामेकुंतिनंदन॥ १४॥ तदातवभवेद्युद्धंस्वल्पंसैन्यंचमामकं॥ सेनेयंतुवृतातातप्रथमंपुत्रकेणते ॥ १५॥ मयाभीममहायुद्धेवर्जनीयात्वयाऽद्यसा॥ इमांनिर्मथ्यसकलांयशःपैत्रंतुतेकरे ॥ १६ ॥ समुत्पाद्यप्रदास्यामिमात्वंक्रीडयमारिष ॥ नस्थिरःसर्वदादेहस्तारुण्यंचंचलंतथा॥ १७॥ स्थिरारमानकस्यापिदृश्यतेमंदिरेविभो ॥ तस्माद्यशःस्थिरंकार्यंप्राणिभिर्भूतलेऽखिले॥ १८॥ विपरीतःपरोधर्मःकविभिर्भाषितःक्षितौ॥ परसेनामतिप्रौढांनानामुखविलोकिनीं॥ १९॥ निर्मथ्ययेनरायांतिप्राप्नुयुस्तेयशःस्थिरं॥ वधूस्तेममसेनास्त्रीसभावंमांनिरीक्षते ॥ २० ॥ कर्तुंचसुक्षतंवक्षःशस्त्ररूपैर्नखैर्दृढं ॥ सेनामुखंममुखेसंगतंपश्यपांडव॥ २१॥ भवंतंश्वशुरंवीक्ष्यविमुखाहिभविष्यति ॥ पताकापल्लववृतंनमुखंदर्शयिष्यति॥ ॥ २२॥ तस्मात्त्वयाचस्थातव्यंयावद्भवतिसंगतं ॥ ममाद्यसंगरेतातसेनायास्तावदेवहि ॥ २३॥ भीमसेनउवाच भवान्प्रयातुप्रथमंसेनामेनांविलासिनीं ॥ वधूजितंयदावीक्ष्येत्वांतुपुत्रकसंगरे ॥ २४ ॥ तदावधूंशासयिष्येगदादंडेनदूरतः ॥शासिताहिवधूःपुत्रसफलातेभविष्यति ॥ २५ ॥ गुरुभिःशास्यतेनैवस्नुषायदिधरातले ॥ तस्यादुर्वृत्तभावेनतेषांहिपतनंध्रुवं॥ २६॥ एतत्समीक्ष्यगंतव्यंत्वयावीरमहाचमूं ॥ पदातिस्त्वंरथस्यास्तेपरेप्रामाहिकर्णज ॥ २७॥ एकाकिनंप्रेरयितुंनक्षमोऽस्मिमहाबल॥ जैमिनिरुवाच॥ एतस्मिन्नंतरेराजन्वृषकेतुरुदारधीः॥२८॥ भीमंप्रदक्षिणी

कृत्यनिर्ययौसचमूंप्रति ॥ कामीवारुणनेत्रोऽयमबलांवरवर्णिनीं ॥ २९ ॥ श्रीखंडघनसारेणकटदानेनवासितां ॥ विभेदवाहिनींमध्येगजकुंभपयोधरां ॥ ३० ॥ बाणैस्तीक्ष्णैर्महाबाहुर्वीक्षमाणःपितामहं ॥ वीरान्पातयतेरोषान्नरोषस्तस्यशाम्यति ३१ ॥ मद्बाणैःपातितावीरारणमध्येविदारिताः ॥ शत्रुतांनैवमुंचंतिकिंकर्त्तव्यमितोमया ॥ ३२ ॥ एवंसंचिंतयानोऽपिपुनःशत्रून्व्यपोथयत् ॥ चंदनागुरुगंधीनिरणेराज्ञांमुखानिसः ॥ ३३ ॥ विच्छिन्नानीवपद्मानिनिरीक्ष्यसमरेहसन् ॥ एतानिजलहीनानिनिम्लायंतिममाग्रतः ॥ ३४ ॥ मत्वाबिभेदराजेंद्ररणेगजघटाःपुनः ॥ मौक्तिकानिसुवृत्तानिगजकुंभच्युतानिच ॥ ३५ ॥ शूरकंठेषुचिक्षेपमंडनानिसकर्णजः ॥ तंतथासमरेवीरंसंहरंतंनिजंबलं ॥ ॥ ३६ ॥ यौवनाश्वोगजारूढःसमागत्येदमब्रवीत् यौवनाश्वउवाच रथंगृहाणवीरत्वंमयादत्तंसमारुह ॥ ३७ ॥ भूमिस्थेनसमंयुद्धंनप्रशंसंतिसूरयः ॥ परदेशात्पुरंप्राप्तंबालंश्रमसमन्वितं ॥ ३८ ॥ योधितंबहुभिःसार्धंविरथंयोधयेकथं ॥ तवनामनजानामिनगोत्रंजनकंचते ॥ ३९ ॥ विष्णोरिवजगत्पूज्यंनवेद्मिकुलनिर्णयं ॥ तस्मात्प्रब्रूहिसमरेयथायुद्धंकरोमिते ॥ ४० ॥ धन्यस्त्वमपरोधन्यस्त्वत्तोनास्तीतिमेमतिः वृषकेतुरुवाच कुलंकश्यपसंभूतंमामकंरविभासितं ॥ ४१ ॥ पृथिव्यांनापरोदातायंविनाजनकःसमे ॥ सभामध्येद्रौपदीचक्लिश्यतीयेनवीक्षिता ॥ ४२ धर्मादयोनगणितादुर्योधनहितैषिणा ॥ विनानतंस्थितोयस्तुतस्यपुत्रंनिबोधमां ॥ ४३ ॥ अर्जुनेनैवनीतोऽसौपरमंपदमव्ययं ॥ कर्णःपितामेसंग्रामेवृषकेतुरहंस्थितः ॥ ४४ ॥ युधिष्ठिरस्ययज्ञार्थंतुरगोनीयतेमया ॥ नरथंचत्वयादत्तंप्रतिगृह्णामिसंगरे ॥ ४५ ॥ युद्धेजितंतुगृह्णंतिनदत्तंवैनराधिप ॥ ४६ ॥ इत्याश्वमेधिकेपर्वणिजैमिनिकृतेयौवनाश्ववृषकेतुवाक्यवर्णनंनामचतुर्थोऽध्यायः ॥ ४ ॥ ॥ ७ ॥ ॥ ७ ॥

यौवनाश्वउवाच धन्योऽसिकर्णपुत्रत्वंप्रथमंप्रहराशुमां ॥ बालंचपलमालोक्यतस्मान्नप्रहरामिते ॥ १ ॥ वृषकेतुरुवाच बहुपुत्रोऽसिराजेंद्रमत्तोवृद्धतरोभवान् ॥ कृष्णदर्शनहीनोऽसिनसमोमद्बलेनवै ॥ २ ॥ त्वच्छरीरेमहाराजविद्यतेनबलंक्वचित् ॥ अहंतावद्युवाराजन्भवान्वृद्धतरोमम ॥ ३ ॥ जैमिनिरुवाच तच्छ्रुत्वावचनंतस्यनृप

तिर्दशभिः शरैः ॥ताडयामासहृदयेवृषकेतुंहसन्निव॥४॥सताञ्छरांस्त्रिधाचक्रेनृपकोदंडनिर्गतान्॥ बाणेनैकेनतरसा
छित्वातंत्रिभिरार्दयत्॥५॥ तस्यबाणानृपंविध्वाप्रविष्टाधरणीतलं ॥ पूर्वजाःकूटसाक्ष्यंहिब्रुवंतोयांत्यधोयथा ॥६ ॥
अर्धचंद्रेणचिच्छेदकोदंडंनृपतेःपुनः॥ सगुणंचातपत्रंचचामरव्यजनानिसः॥ ७ ॥ चक्रवाकेनतीक्ष्णेनछिद्यंतेप्रीति
जागुणाः॥ यथाचैकेनबालस्यबाणेनैकेनतत्तथा॥८॥ निखिलंभूपतेस्तत्रपातितंधनुरादिकं ॥ सोऽन्यत्कार्मुकमादा
यसज्जंकृत्वामहाबलः॥ ९ ॥ विव्याधकर्णजंषष्ट्याशराणांनतपर्वणां॥ तेतस्यहृदयंभित्वापपुःशोणितमाहवे ॥ १० ॥
जीवनंभानुकिरणाःपिबंतितरसायथा॥ तथासभिन्नहृदयोबहुभिःपरिवारितः ॥ ११ ॥ चकारयुद्धंसुमहन्नृपतिंपरि
पीडयन् ॥ चतुर्भिस्तुरगांस्तस्यशरैर्निन्येयमक्षयम्॥ १२ ॥सारथेश्चशिरःकायात्पातयामासभूतले॥ अदृश्यंनृपतिं
चक्रेयोधानांपश्यतामपि॥ १३ ॥ हतोराजेतिशब्दोऽभूत्तस्मिन्युद्धेतथाविधे॥ बाणांधकारेचकृतेकर्णपुत्रेणलीलया
॥१४॥पितामहस्यस्वस्यैवनाशंयुधिरिपोःपुरः॥ लज्जितःसंदधेघोरंपावकास्त्रंसमंत्रकं॥१५॥ प्रकाशमकरोत्तेनवह्नि
नान्नृपसत्तम ॥ वारुणेनाथराजाऽपिशमयामासपावकं ॥ १६ ॥ पवनास्त्रेणबलवान्कर्णपुत्रोऽपिवारुणं ॥ विध्वं
सयित्वाव्यनदन्महानादंरणांगणे ॥ १७ ॥ यौवनाश्वस्तदाक्रुद्धोदृष्ट्वाऽमानुषपौरुषं॥ रथमन्यंसमारुह्यपर्वतास्त्रेणसं
हरन्॥ १८ ॥मारुतास्त्रंचराजेंद्रकर्णपुत्रमपीडयत्॥ शिलाःसहस्रधाकाशादपतन्भुविभासुराः॥ १९ ॥ तस्योपरिश
रास्तीक्ष्णाःपतितान्नृपहस्ततः ॥ शरैर्नदृश्यतेवीरःसंग्रामेलोमहर्षणे॥ २० ॥ तंवीक्ष्यकुपितोभीमःपुत्रंमोचयितुंययौ ॥
तंविलोक्यरणेप्राप्तंभीमंकर्णात्मजस्त्वरन्॥ २१ ॥ प्रमथ्यशरवृष्टिंतांनृपमुक्तांहसन्निव ॥ पर्वतास्त्रंचचक्रेणविनाश्य
व्यचरद्रणे॥२२॥ यौवनाश्वेनवीरेणतदस्त्रंचवृथाकृतं॥भल्लेनहृदयंतस्यभिन्नंतेनमहात्मना॥ २३॥ मूर्छितोनिपपातो
र्व्यांवृषकेतुर्महाबलः॥ कर्णपुत्रेचपतितेभीमःकोपसमन्वितः॥ २४॥ चिंतयित्वास्वहृदयेकिंवदिष्यामिधर्मजं ॥ कुंतीं
कृष्णंचपार्थंतंविनाकर्णसुतंगतः॥२५॥एतस्मिन्नेवकालेतुगृहीत्वामहतींगदां॥तद्बलंपोथयामासवेगाद्रुद्रइवाहरत्॥
॥२६॥गजकुंभान्सगदयाविदार्यचबहून्क्षणात्॥ रथानश्वानपिनरान्पातयामासभूतले॥२७॥ जानुभ्यांभीमसेनस्य

पवनस्तुसमुत्थितः ॥ भ्रामितास्तेनमातंगागगनेसरथाहयाः ॥ २८ ॥ नराभ्रमंतेराजेंद्रमुक्तकेशायथाऽसुराः ॥ गजाग
जैर्नीयमानाः संप्राप्तावसुधातले ॥ २९ ॥ भ्राम्यमाणंचतत्सैन्यमितश्चेतश्चदृश्यते ॥ वासुदेवस्यमाहात्म्यमश्रुत्वाचयथा
जगत् ॥ ३० ॥ ऊर्ध्वपादावस्त्रहीनानानालंकारवर्जिताः ॥ अधोवक्त्राः सरुधिराः शुष्कास्यागजसादिनः ॥ ३१ ॥ राज
पुत्राभिन्नगात्राः स्त्रवंतोरुधिरंमुखात् ॥ गगनाद्भूतलंप्राप्ताः क्षीणपुण्यायथानराः ॥ ३२ ॥ नराश्वगजदेहेभ्यः शोणितौ
घाः सहस्त्रशः ॥ प्रावर्त्ततमहाराजभीमेयुद्ध्यतिभूतले ॥ ३३ ॥ ततोनृपसुतः प्राप्तः सुवेगोनामवीर्यवान् ॥ भीमंयोधयि
तुंक्रोधादिदंवचनमब्रवीत् ॥ ३४ ॥ सुवेगउवाच यौवनाश्वसुतंविद्धिसुवेगंमांमहाबलम् ॥ तिष्ठयुद्धंकुरुमयासार्धं
यास्यसिवैकुतः ॥ ३५ ॥ इत्युक्त्वासरथंत्यक्त्वागृहीत्वामहतींगदां ॥ भीमंजघानगदयामूर्ध्निवक्षस्थलेतदा ॥ ३६ ॥ वृ
कोदरस्तंगदयाजघानसमरेबली ॥ तावन्योऽन्यंगदाभ्यांचजघ्नतुः क्रोधमूर्छितौ ॥ ३७ ॥ ततोभीमः समुत्थाप्यसुवेगं
गगनेक्षिपत् ॥ भ्रामयित्वाशतगुणंनिष्पिपेषधरातले ॥ ३८ ॥ सुवेगः पुनरुत्थायगृहीत्वापवनात्मजं ॥ भूमौममर्दराजें
द्रतदद्भुतमिवाभवत् ॥ ३९ ॥ भीमोगजंगृहीत्वैकंसुवेगोपरिचिक्षिपे ॥ समायांतंगजंतंतुचिक्षेपपवनात्मजे ॥ सगजः
प्रेरितस्ताभ्यांयातायातंचकुर्वते ॥ ४० ॥ मुष्टिभिर्जानुभिर्घोरैः प्रहारैस्तौचजघ्नतुः ॥ उभौतौमर्दितौतत्रपतितौधरणी
तले ॥ ४१ ॥ जैमिनिरुवाच वृषकेतुस्ततोमूर्छांत्यक्त्वाराजानमाहवे ॥ पंचभिस्ताडयामासशरैः सन्नतपर्वभिः ॥
॥ ४२ ॥ तैर्बाणैर्मूर्छितोराजायौवनाश्वोमहाबलः ॥ विसंज्ञंसमरेवीक्ष्यवृषकेतुः समीपगः ॥ ४३ ॥ वस्त्रवातेननृपतिंवी
जयन्वाक्यमब्रवीत् ॥ वृषकेतुरुवाच यत्किंचिद्विद्यतेपुण्यंकृष्णाराधनसंभवं ॥ ४४ ॥ सर्वेणतेनराजासौपुनर्जीव
तुसंगरे ॥ पौरुषंवेत्तिमेकस्तुचेन्नजीवतिपार्थिवः ॥ ४५ ॥ मूर्छांविहायराजाऽपितिष्ठतिष्ठेतिवैपुनः ॥ उत्थायचरणेप्रा
हतंददर्शतथाविधं ॥ ४६ ॥ कर्णपुत्रंसमालिंग्यचेदंवचनमब्रवीत् ॥ यौवनाश्वउवाच प्राणदस्त्वंमदीयोऽसियत्त्व
यापरिभाषितं ॥ ४७ ॥ तच्छ्रुत्वाक्रियतेयुद्धंनर्निंद्योऽस्तिहिमांविना ॥ गृहाणराज्यंसकलंजीवितंवशगंतव ॥ ४८ ॥
त्वत्प्रसादाद्धरिंवीक्ष्येभीमंदर्शयमारिष ॥ मर्त्यैकर्णः सदादातादातृत्वंतस्यदर्शितं ॥ ४९ ॥ त्वयापुत्रेणवीरेणपाल

यित्वाहिमांरणे ॥ त्वमायाहिमयासार्धयत्रतौबलिनौरणे ॥ सुवेगभीमौपतितौमूर्छितावविलक्षितौ ॥ ५० ॥ इत्याश्व
मेधिकेपर्वणिजैमिनिकृतेयौवनाश्वपराजयोनामपंचमोऽध्यायः ॥ ५ ॥ ॥ छ ॥ ॥ छ ॥ जैमिनिरुवाच
ततोबुद्धौमहावीरौयौवनाश्वेनवारितौ ॥ संस्तूयभीमंतरसापुरींप्रावेशयत्स्वकां ॥ १ ॥ मेघवर्णस्तुतुरगंगृहीत्वाभी
मसन्निधौ ॥ स्थितःप्राहहसन्वीरःकिमिदंभाग्याकरितं ॥ २ ॥ चिंतयन्बहुधादेवमनंतंसर्वतोमुखं ॥ ततोनृपःप्र
सन्नात्मावचनंचेदमब्रवीत् ॥ ३ ॥ प्रशंसन्पांडवंवीरंवृषकेतुंचमारिष यौवनाश्वउवाच भीमपश्यकुमारस्यवृष
केतोर्महद्बलं ॥ ४ ॥ संजीवितोऽस्म्यनेनाजौदयायुक्तेनसाधुना ॥ प्राणदेनकथंयुद्धंपुनरेवप्रजायते ॥ ५ ॥ तस्मान्मां
नयभद्रंतेगोविंदंप्रतिपांडव ॥ मदीयंमानसंचाद्यत्वरतेधर्मदर्शने ॥ ६ ॥ यस्यकृष्णेपराभक्तिर्मुक्तेरपिगरीयसी ॥ य
त्किंचिद्विद्यतेवित्तंपुत्रपौत्रादिकंमम ॥ ७ ॥ शरीरमपिराज्यंचसर्वंकृष्णवशंकुरु ॥ गजानांममशुभ्राणामयुतंविद्यते
शुभं ॥ ८ ॥ इदंशिरस्तथावीरधर्मराजार्थमाहवे ॥ पातयिष्यामियज्ञेऽस्मिन्तुरगस्यापिरक्षणे ॥ ९ ॥ शुभ्रेगजेभीम
सेनमयासार्धसमारुह ॥ सुवेगकर्णजावेतौगजेमत्तेसकांचने ॥ १० ॥ आरूढौमत्पुरींरम्यांप्रविशेतांममाज्ञया ॥ नग
रींतुजनायांतुकिंचिच्छोभयितुंपुरः ॥ ११ ॥ पताकाभिर्विचित्राभिश्चंदनोदकशीतलां ॥ प्रभावतीभीमसेनंनीराजय
तुभामिनी ॥ १२ ॥ लाजाभिश्चैवमालाभिर्भावयंतुहिकन्यकाः ॥ एवमादिश्यनृपतिःप्रविवेशसपांडवः ॥ १३ ॥ मेघ
वर्णेनसहितोमुदायुक्तोनराधिपः ॥ राजमंदिरमायांतंभीमंदेवीददर्शसा ॥ १४ ॥ सुवर्णपात्रेदीपंतुकृत्वापंचशिखंशि
वं ॥ कर्पूरपुलकोद्भूतंस्त्रीभिर्युक्तासमाययौ ॥ नीराजयित्वातान्वीरानिदंवचनमब्रवीत् ॥ १५ ॥ प्रभावत्युवाच येन
मेकंठसूत्रंहिसुश्लथंपरिरक्षितं ॥ कर्णजेनाद्यतस्याथकीर्तिःस्थूलाभविष्यति ॥ १६ ॥ जैमिनिरुवाच · जातेनीरा
जनेराजन्नुविष्टावरासने ॥ ततोनानाकथाःकृत्वाभुक्त्वाचशयनंगताः ॥ १७ ॥ प्रभातसमयेजातेकृतकार्योनराधि
पः ॥ उपविष्टःसभामध्येसहभीमेनभारत ॥ १८ ॥ आदिदेशजनंसर्वंपुरस्थंधर्मकोविदः ॥ सर्वेगच्छंतुवैतत्रयत्रतौकृ
ष्णपांडवौ ॥ १९ ॥ यःकश्चिन्मामकेराष्ट्रेचातुर्वर्णोंऽत्यजोऽपिवा ॥ नगच्छेत्कृष्णसान्निध्यंसवध्यश्चोरवन्मया ॥ २० ॥

इत्याघोष्यतदातेनभेरीदुंदुभिनिःस्वनैः ॥ सदाराःपुत्रकैःसाकंसधनास्तुममाज्ञया॥ २१ ॥ निर्यातुद्रौपदींद्रष्टुंरुक्मि
णींचयशस्विनीं॥ प्रभावतीचनारीणामयुतेनविभूषिता ॥ २२ ॥ वधूवृंदेनसयुक्ताधर्मराजपुरंप्रति॥ मदीयोवीण
कश्चायमयुतस्तंभमंडितः ॥ २३ ॥ पश्चिमाशामुपाश्रित्यदीयतांगमनायमे ॥ दुंदुभिस्ताड्यतांघोरोमेघरावोगजो
परि॥ २४ ॥ सुवर्णपूरितायांतुकरभाःशकटावृषाः ॥ बहुनात्रकिमुक्तेनमदीयंवसुयद्भवेत् ॥ २५ ॥ तत्सर्वंकृष्ण
सान्निध्येनीयतामात्मकारिणः ॥ यत्रभागीरथीगंगायज्ञेशोभगवान्हरिः ॥ २६ ॥ संयोगश्चैवसर्वेषांकस्यचित्तंन
तोषयेत् ॥सुदेवंचसमाहूयसंदिदेशनराधिपः ॥ २७ ॥ वसुवृंदेनसंयुक्तोनानासज्जनसंयुतः ॥ त्वमस्माकंपुरेश्रीमा
न्संत्यन्येसधनाजनाः ॥ आत्मनासहतान्सर्वान्धर्मराजपुरंनय ॥ २८ ॥ जैमिनिरुवाच एवंतेनसमादिष्टो
जनंप्राहपुरःस्थितं ॥ भवद्भिर्गम्यतांतत्रयत्रतौकृष्णपांडवौ ॥ २९ ॥ युधिष्ठिरस्याश्वमेधोभविष्यतिसुशोभनः ॥
एवमुक्ताजनाःसर्वेंहृष्टाजाताःसुखान्विताः ॥ ३० ॥ सुदेवोमातरंप्राहराजामांनेतुमिच्छति॥यत्रधर्मसुतोराजायत्र
तौकृष्णपांडवौ॥ ३१ ॥ जननीस्वसुतस्येदंवाक्यमाकर्ण्यचाप्रियं ॥ प्रोवाचवचनंपुत्रंनगंतव्यंकदाचन॥ ३२ ॥ वि
त्तव्ययोनकर्त्तव्योमयिजीवतिपुत्रक ॥ वित्तहीनाप्यहंतातनजीवितुमिहोत्सहे ॥ ३३ ॥ पुत्रउवाच तत्रभागी
रथीगंगानानासंतःसमागताः॥ स्वयंसभगवान्यत्रकृष्णस्तिष्ठतिसाग्रजः ॥ ३४ ॥ युधिष्ठिरस्ययज्ञेऽन्येकृषयोऽपि
समागताः ॥ उत्तिष्ठजननित्वंहिगोविंदंपश्यसाग्रजं ॥ ३५ ॥ वृद्धोवाच मैवंवदसुदेवत्वंनागमिष्याम्यहंपुरं ॥
नदेवोनचधर्मोऽपिश्रुतपूर्वःकदाचन ॥ ३६ ॥ भर्त्रानैवकृतोधर्मोमत्पित्रातुकदाचन ॥ कस्योपदेशात्त्वंपुत्रप्रवृत्तोऽ
सिधनक्षये॥ ३७॥ सर्वंप्रतारणंमन्येयज्ञदानादिकाःक्रियाः॥ अर्थवादोमतोवेदोब्राह्मणालोकवंचकाः॥३८॥ प्राण
व्ययेनयल्लब्धंधनंतत्कोनुनाशयेत् ॥ अस्माकंचकुलेधर्मोनकस्यापिसुखप्रदः॥ ३९ ॥ वृद्धाऽहंसांप्रतंजाताकथंध
र्मंसमाचरे॥ अकृतंनकरिष्यामित्येतत्सत्यंवचोमम ॥ ४० ॥ जैमिनिरुवाच एतच्छ्रुत्वावचस्तस्याःसुदेवोनृप
तिंययौ॥ प्रत्युवाचवचोरम्यंनृपहास्यकरंपरं ॥ ४१ ॥ सुदेवउवाच नायातिजननीदेवमयासहमहाक्रतुं॥ धर्म

राजस्यतंद्रष्टुंनगृहंपरिमुंचति ॥ ४२ ॥ राजातस्यवचःश्रुत्वासमानीयजरद्गवां ॥ प्रोवाचवचनंरम्यंहितंतस्याययथाभवे
त् ॥ ४३ ॥ राजोवाच सर्वेंलोकास्तत्रयांतियत्रतौधर्ममाधवौ ॥ मयैवसहितायाहिकुरुपुण्यंगजाह्वये ॥ ४४ ॥
तत्रतिष्ठतिकृष्णोऽपिरुक्मिणीचवधूवृता ॥ अन्याश्वपावनानार्यस्तत्रमातःसमागताः ॥ ४५ ॥ सतांदर्शनमात्रेण
विलयंयांतिदेहिनां ॥ पातकानिसमग्राणिनात्रकार्याविचारणा ॥ ४६ ॥ वृद्धोवाच नागमिष्यामिराजेंद्रद्रव्यं
ममगमिस्यति ॥ वधूगणश्चमेदुष्टोनाशयिष्यतिमद्गृहं ॥ ४७ ॥ गोधूमाःपरिपक्वामेक्षेत्रेतिष्ठंतिसांप्रतं ॥ नवनीतंचगो
पावैसंक्षयिष्यंतिमामकं ॥ ४८ ॥ दासदासीगणोरौद्रोगमिष्यतियथागतं ॥ मदाधारंगृहमिदंस्थितंराजन्नसंशयः ॥
॥ ४९ ॥ ममकृष्णेनकिंकार्यंनमेधर्मेणसांप्रतं ॥ यथास्वकर्मण्यव्यग्राःकृष्णधर्मादयःस्थिताः ॥ ५० ॥ तथास्वगृहका
र्येषुसावधानाऽस्मिभूमिप ॥ भवान्राज्यंपरित्यज्यवृथागच्छतितत्पुरं ॥ ५१ ॥ बालोऽसिद्रव्यहानिस्तेभविष्यतिनसं
शयः ॥ गताःप्राणावरंमन्येनधनंभूपतेक्वचित् ॥ सर्वलोकस्यसंक्लेशोभविष्यतिनराधिप ॥ ५२ ॥ जैमिनिरुवाच
एवंब्रुवाणांनृपतिर्गृहीत्वातांजरद्गवां ॥ बध्वातत्ररुदंतींचदोलामारोप्यतांययौ ॥ ५३ ॥ प्रहसन्विस्मयन्नेवतृष्णां
गर्हन्पुनःपुनः ॥ भीमायकथयामासचरितंचित्तविभ्रमं ॥ ५४ ॥ तस्याजरद्गवायास्तुततोनागपुरंययौ ॥ आशा
बलवतीभीमकाचिदाश्चर्यशृंखला ॥ ५५ ॥ ययाबद्धाःप्रधावंतिमुक्तास्तिष्ठंतिपंगुवत् ॥ जीर्यंतिजीर्यतःकेशादंता
जीर्यंतिजीर्यतः ॥ ५६ ॥ चक्षुःश्रोत्रेचजीर्येतेतृष्णैकानतुजीर्यते ॥ तृष्णायाःपरमंदुःखंतत्त्यागात्परमंसुखं ॥ ५७ ॥ एता
वदुक्त्वावंचनसभीमंपरितोषयन् ॥ न्यवसत्पंचरात्रंचपश्चाद्वीरोविनिर्ययौ ॥ ५८ ॥ बलेनमहतायुक्तोधर्मराजपुरंप्र
ति ॥ योजनानांस्थिताभूमिर्यत्रविंशतिरेवसः ॥ ५९ ॥ पप्रच्छभीमोराजानमहंयास्येग्रतोनृपं ॥ त्वांनिवेदयितुं
देवसंप्राप्तंबलसंयुतं ॥ ६० ॥ कर्णजस्तवशुश्रूषांकरिष्यतिगतेमयि ॥ एवंनिरूप्यतरसासजगामयुधिष्ठिरं ॥ ६१ ॥
ततोददर्शराजानंभ्रातृभिःपरिवारितं ॥ नमस्कृत्यमहाबुद्धिर्धर्मराजंवृकोदरः ॥ समालिंग्यजनान्सर्वानिदंवचनम
ब्रवीत् ॥ ६२ ॥ भीमउवाच तवप्रसादान्नृपतेवयंकुशलिनःसदा ॥ समायातःसतुरगोयौवनाश्वेनसंयुतः ॥ ६३ ॥

कर्णपुत्रेणसंग्रामेराजासपरितोषितः ॥ बलेनमहताराजासदारःससुहृद्वृतः ॥ ६४ ॥ प्रभावतीतस्यभार्याद्रौपदींद्रष्टु
मागता ॥ महत्यासाश्रियायुक्तास्त्रीसहस्रैर्विलासिनी ॥ ६५ ॥ विष्णुभक्तिर्यथाराजन्शांतिक्षांतियुतानृप ॥ ६६ ॥
इत्याश्वमेधिकेपर्वणिजैमिनीयेभीमागमोनामषष्ठोऽध्यायः ॥ ६ ॥ ॥ ॥ ॥ ॥ जैमिनिरुवाच
समागतंनृपंश्रुत्वाधर्मोवचनमब्रवीत् ॥ भीमसेनंप्रतितदाहर्षेणमहतायुतः ॥ १ ॥ युधिष्ठिरउवाच गच्छत्वं
द्रौपदीपार्श्वेकथयैतद्वृकोदर ॥ यथाकरोतिवैभूषांप्रभावत्याश्चदर्शने ॥ २ ॥ जैमिनिरुवाच जगामभीमसे
नोऽथयत्रसापार्षतात्मजा ॥ विलोक्यभीमंसंप्राप्तंपार्षतीहर्षपूरिता ॥ ३ ॥ तस्थौभीमंशशिमुखीस्वागतंचेतिवादि
नी ॥ ददर्शगात्रंसंभिन्नंनानाशस्त्रैश्चमुष्टिभिः ॥ ४ ॥ ददौनिजासनंदेवीपप्रच्छकुशलंपुनः ॥ वृषकेतुंमेघवर्णंतदा
कुशलिनंसती ॥ ५ ॥ भीमउवाच राजासमागतोदेविसभार्यःससुतःस्वयं ॥ यौवनाश्वोमुदायुक्तःसमृद्धबल
वाहनः ॥ ६ ॥ तस्यभार्याविशालाक्षीस्त्रीसहस्रैःसमन्विता ॥ वीक्षितुंत्वांचमानार्हामिहचायातिसुंदरी ॥ ७ ॥ तस्मा
द्भूषांकुरुशुभेस्वनारीगणसंयुता ॥ सहितास्तत्रवैयांतुसर्वेदेविनृपंप्रति ॥ ८ ॥ कृष्णोदेविकुतोयातस्त्वंविनातवमंड
नं ॥ नपश्यामितथारूपंसंभवेन्ममविस्मयः ॥ ९ ॥ यदिद्वारवतींकृष्णःपरित्यज्यनृपंगतः ॥ भवित्रीतवकाशोभाप्र
भावत्यासहाधुना ॥ १० ॥ वित्तेनमहताचासौपूरितानृपतेःप्रिया ॥ द्रौपद्युवाच अंतर्गृहेनिवसतिगोविंदःकि
लपांडव ॥ सर्वसुमंडनंमत्यंनिर्गच्छामोवृकोदर ॥ ११ ॥ जैमिनिरुवाच ततःकृष्णःसमागत्यसहधर्मात्मजेनवै ॥
यौवनाश्वंभावयितुंसपुत्रंप्रययौमुदा ॥ १२ ॥ चंपकायत्रबहुलाःपुष्पितास्तत्रसंस्थिताः ॥ यौवनाश्वोऽपितुरगंपुरस्कृ
त्यतुकर्णजं ॥ १३ ॥ संमुखंस्थितएवासौवीक्षमाणोनृपागमं ॥ नानावाद्यनिनादेनकंपयन्वसुधातलं ॥ १४ ॥ एतस्मि
न्नेवकालेतुधर्मपुत्रःसमागतः ॥ ददर्शनृपतिंपार्श्वेसर्वसैन्यसमन्वितं ॥ १५ ॥ उत्तीर्यवाहनात्तस्मादालिंग्यवसुधाधि
पं ॥ नमस्कृतःसतेनापियौवनाश्वेनधीमता ॥ १६ ॥ तमुवाचसधर्मात्मायथाभीमाद्योमम ॥ तथात्वमसिराजेंद्रना
त्रकार्याविचारणा ॥ १७ ॥ पश्यकृष्णंमहाबुद्धेसहायंममभूपते ॥ प्रभावतीद्रौपदींचकुंतींपश्यतुसत्वरा ॥ १८ ॥ जै

मिनिरुवाच यौवनाश्वोऽच्युतंकृष्णमनंतंप्रणतोऽब्रवीत् ॥ प्रहृष्टवदनोभूत्वाधर्मपुत्रस्यशृण्वतः ॥ १९ ॥ यौवना
श्वउवाच धन्योऽस्मिदेवतुरगोधन्योऽयंयस्यकारणे ॥ भीमादयस्त्रयोवीराःसंप्राप्तामत्पुरंप्रति ॥ २० ॥ वृषकेतुरयंधन्यो
ममात्मायेनरक्षितः ॥ कृपाविष्टेनमनसायुद्धभूमिगतेनच ॥ २१ ॥ कपार्थस्तेसखाकृष्णवैष्णवानांसदाग्रणीः ॥ येनत्वं
दर्शितोलोकेसर्वपापप्रणाशनः ॥ २२ ॥ जितवान्वैकुरुक्षेत्रेयस्त्वयासहितोरणे ॥ जैमिनिरुवाच प्रभावती
चतांकुंतींपार्षतींचैवसात्वतीं ॥ २३ ॥ समालिंग्यनमस्कृत्यतस्थौहर्षपरायणा ॥ तथाब्रुवंतंनृपतिंनमस्कृत्यार्जुनोऽब्रवी
त् ॥ २४ ॥ अर्जुनउवाच यथायुधिष्ठिरोऽस्माकंतथात्वंहिनराधिप ॥ वृद्धोमान्यश्चसततंदृष्टोदैवात्समाग
तः ॥ २५ ॥ सुवेगोऽपिहितान्सर्वान्नमस्कृत्यजनार्दनं ॥ प्रोवाचवचनंतत्रधर्मराजंमहामतिं ॥ २६ ॥ किंवर्णयामिरा
जेंद्रवृषकेतोर्महात्मनः ॥ महिमानमतीवास्ययत्कृष्णोदर्शितोऽमुना ॥ २७ ॥ विनाकृष्णंहियद्राज्यंशरीरंचतथाधनं ॥
धार्यतेमानवैर्भूपतत्सर्वंप्रेतभूसमं ॥ २८ ॥ अतःपरंहृषीकेशनमोक्ष्येतेपदांबुजं ॥ विसर्जयाशुतुरगंयज्ञार्थंवैनृपस्य
हि ॥ २९ ॥ जैमिनिरुवाच ततोहरिस्तुष्टमनास्तद्वाक्येनचभारत ॥ सहैवसंस्थितंवीरमालिंग्यरविपौत्रकं ॥ ३० ॥
प्रविवेशपुरींकृष्णोधर्मपुत्रेणसंयुतः ॥ उषित्वामासमेकंतुप्रत्युवाचयुधिष्ठिरं ॥ ३१ ॥ श्रीकृष्णउवाच चैत्रीगताम
हाराजपौर्णमासीहव्यष्ठतः ॥ यज्ञस्यावसरोदूरेमासिचैकादशेनृप ॥ ३२ ॥ तस्माद्गच्छामिनगरींद्वारकांयादवाश्रयां ॥
नान्योऽस्तिरक्षकस्तस्यांमांविनापांडुनंदन ॥ ३३ ॥ अतोऽहंत्वरितोयामिपृच्छेत्वांगंतुमुत्सुकः ॥ गतेमयिभविष्यंतिया
दवाहर्षनिर्भराः ॥ ३४ ॥ तावत्त्वंयौवनाश्वेनसहपालयवाजिनं ॥ तवयज्ञेवयंसर्वेत्वश्वमेधेनिमंत्रिताः ॥ ३५ ॥ आग
मिष्यामहेनूनंतथाकार्यंविधीयतां ॥ जैमिनिरुवाच तच्छ्रुत्वावासुदेवस्यवचनंधर्मनंदनः ॥ अनुज्ञांदत्तवांस्तस्मै
ज्ञात्वाकृष्णस्यमानसं ॥ ३६ ॥ केशवेतुगतेराजाव्यासेनहिसमन्वितः ॥ तुरगंपालयामासयौवनाश्वेनचानुजैः ॥ ३७ ॥
सभांचकारयामासमंडपंसमकारयत् ॥ द्वैपायनंततोऽपृच्छन्मरुत्तस्यविचेष्टितं ॥ ३८ ॥ व्यासश्चकथयामासमरुत्त
स्यमहाध्वरं ॥ मरुत्तेनवृतःपूर्वंयज्ञार्थंजीवएवहि ॥ ३९ ॥ इंद्रस्तंवारयामासनयाज्योजीवमानवः ॥ ततोनृपोऽपिसं

वर्त्तनारदादश्टणोन्मुनिं ॥ ४० ॥ प्रार्थयित्वाक्रतुंचक्रेसंवर्त्ताच्छक्रपावकौ ॥ स्तंभयित्वावरंप्राप्यक्रतुंकृत्वाचशो
भनं ॥ ४१ ॥ यथागतंगतोराजापूतःस्नात्वादिवंययौ ॥ जैमिनिरुवाच युधिष्ठिरोऽपिपप्रच्छव्यासंधर्मा
न्पुनःपुनः ॥ यथामतिश्रुतान्सर्वान्कथयामासपावनान् ॥ ४२ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेमरुत्तयज्ञकथनं
नामसप्तमोऽध्यायः ॥ ७ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥ ॥

जैमिनिरुवाच श्रुत्वाव्यासमुखाद्धर्मान्धर्मराजोयुधिष्ठिरः ॥ पप्रच्छचापरान्धर्मान्सर्वलोकहितावहान् ॥ १ ॥ भ
गवन्किन्नरैःकार्यंसंसारभयभीरुभिः ॥ कथमत्रभवेत्कीर्तिःपरत्रचकथंसुखं ॥ २ ॥ वासुदेवःकथंतुष्येत्तत्तद्ब्रूहियथात
थं ॥ व्यासउवाच ब्राह्मणोधर्मशास्त्राणिसम्यक्ज्ञात्वानकुत्सितं ॥ ३ ॥ प्रकरोतिशुभंकर्मचेहकीर्तिंसुखंपरे ॥ परा
पवादाद्भीतश्चपरद्रव्यंपरस्त्रियं ॥ ४ ॥ नकामयेन्नगृह्णातिनश्टणोतिहितद्वचः ॥ क्षत्रियःसर्वधर्मज्ञोदातायुद्धपराय
णः ॥ ५ ॥ आत्मवित्संगरेप्राणान्संमुखस्त्यजतेयदि ॥ संप्राप्नोत्यमलांकीर्त्तिमिहलोकेपरत्रच ॥ ६ ॥ वैश्योधनस
मृद्धस्तुसत्यवादीप्रियातिथिः ॥ शुश्रूषणंगवांकुर्यात्तत्परःप्राणिनांहितं ॥ ७ ॥ प्राप्नोतिविमलांकीर्तिंगतिंकृष्णनिषेव
णात् ॥ शूद्रस्तुसेवतेविप्रान्श्रद्धयानावमन्यते ॥ ८ ॥ यशःपरमवाप्नोतिध्यात्वानारायणंविभुं ॥ विधवायाभवेन्नारी
कामासक्तासुभोगिनी ॥ ९ ॥ गुरुवादकरीदुष्टात्दृष्टापरनरंप्रति ॥ धनयुक्तारागपरासर्पिणीवसपक्षिणी ॥ १० ॥ आ
त्मानंपातयेदाशुपत्यासहमहीपते ॥ तांयःकामयतेमंदोदुष्टात्मासनराधमः ॥ ११ ॥ सोऽपिवैनारकींयोनिंप्राप्नोतीहन
संशयः ॥ सारंडादुर्गतिंयातिशरीरस्यचविक्रयात् ॥ १२ ॥ शुद्धस्नानंचतांबूलंचंदनंचासनानिच ॥ इच्छाभोज्यंतथा
पेयंपतेरिच्छाविहारिणी ॥ १३ ॥ नित्यंधर्मपरायातुगृहकार्यकरीतथा ॥ श्वश्रूश्वशुरयोश्चैवपादवंदनतत्परा ॥ १४ ॥
ज्येष्ठदेवरयोश्चापित्यनुवृत्तिपरायणा ॥ प्राप्नोतिसद्गतिंकीर्तिंमिहलोकेपरत्रच ॥ १५ ॥ प्राक्कर्मयोगजंचिह्नंबिभ्रती
लक्षणंत्विदं ॥ कृष्णवर्णातालुजिह्वांस्वांगुल्यास्पृशतेभुवं ॥ १६ ॥ एतैश्चलक्षणैर्युक्ताभर्तृसंबंधघातिनी ॥ स्वकर्मवश
तस्तेतुतस्यावैसंगतिंगताः ॥ १७ ॥ तयास्थेयंपितुर्गेहेनपरेषांगृहंव्रजेत् ॥ जटिलापंकबहुलाभोजनेलुब्धमानसा ॥ १८ ॥

अनाचारवतीयातुसासुखंनैवविंदति ॥ बालत्वेरक्षतिपितायौवनत्वेनिजःपतिः ॥ १९ ॥ वार्धकेरक्षतेपुत्रोनस्वतंत्रा हियोषितः ॥ स्वतंत्रतायोषितांहिनशुभायोपकल्पते ॥ २० ॥ कृच्छ्रातिकृच्छ्रपाराकैःपरंशोषयतेतनुं ॥ विधवासासुखं जीवेत्परलोकेचमोदते ॥ २१ ॥ नव्रजेत्तीर्थयात्रांहिनकदाचिच्छुभव्रतं ॥ करोतिविधवानारीसागच्छेन्नरकंध्रुवं ॥ २२ ॥ कर्तव्यंतुतयाराजन्शरीरपरिशोषणं ॥ उपवासादिभिर्नित्यंशमःकार्योनसंशयः ॥ २३ ॥ शीलभंगेतुनारीणांदोषास्तु बहवोनृप ॥ स्त्रीणांनैवतुविश्वासःकर्तव्यस्तुकदाचन ॥ २४ ॥ अन्याश्रितान्यचित्तानांविश्वासोनसुखप्रदः ॥ बहुधाह सतेयातुबालंचपरिचुंबति ॥ २५ ॥ दृष्ट्वापुमांसंत्वरिताप्रस्खलंत्यनुधावति ॥ गायंतीसुस्वरंदृष्टाकर्णकंडूयतेकटिं ॥ ॥ २६ ॥ अचैलंमस्तकंस्वंतुहासंचकुरुतेवृथा ॥ ईदृशीयाभवेन्नारीविज्ञेयाबंधकीनरैः ॥ २७ ॥ वृथापरगृहंयातिवृथा पश्यतितंजनं ॥ दूतिकांजननींवेत्तितत्संगेऽतीवलालसा ॥ २८ ॥ मालाकारीनापितीचनटीप्रव्राजिकातथा ॥ फणिव्र ततिपत्राणिविक्रीणातितुयाभुवि ॥ २९ ॥ सैरंध्रीचापिदासीचतथापतिविवर्जिता ॥ सूतिकाधवहीनाचतथाकापालि नीतुया ॥ ईदृशीनांसंगमेनयस्यास्तुष्यतिमानसं ॥ ३० ॥ स्वैरिणीनांतुसाराज्ञीविज्ञेयाधर्मनंदन ॥ तस्माद्रक्षेत्स्त्रियं पार्थदुष्टसंगाद्विशेषतः ॥ ३१ ॥ असूयकोऽथपिशुनोनास्तिकोधूर्तकोनरः ॥ समीपेसंस्थितोराज्ञांप्रजानांदुर्लभंसुखं ॥ ॥ ३२ ॥ प्रजाःपालयभद्रंतेतासुनष्टासुनश्यति ॥ नाचरंतितुयेधर्मान्नृपतेब्राह्मणादयः ॥ ३३ ॥ नचिंतयंतिदेवेशंदेव कीनंदनंहरिं ॥ नास्तिकास्तेनराज्ञेयाःसर्वधर्मबहिष्कृताः ॥ ३४ ॥ एतैःसहासनंस्पर्शंमनसाऽपीहनाचरेत् ॥ आराधयं तिदेवेशंप्राणिनांमुक्तिदंहरिं ॥ देवतुल्याश्चतेज्ञेयाश्चांडालोऽपिहरेःप्रियः ॥ ३५ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीये व्यासवाक्यंनामाष्टमोऽध्यायः ॥ ८ ॥ ॥ ॥ ॥ ॥ युधिष्ठिरउवाच कथंलक्ष्मीःस्थिरातातप्रा णिनांजायतेगृहे ॥ गोविंदेनसहावासःकथंजायेततद्वद ॥ १ ॥ व्यासउवाच शृणुवत्सप्रवक्ष्यामियथालक्ष्मीःस्थि राभवेत् ॥ सत्यंशौचंविशेषेणप्राणिनांशिवचिंतनं ॥ २ ॥ तत्रस्थिरायतेलक्ष्मीस्तत्रनारायणोहरिः ॥ मातरंपितरंपुत्रो भ्रातरंज्येष्ठमेवच ॥ ३ ॥ मन्यतेबांधवगणंतत्रलक्ष्मीःस्थिरायते ॥ भार्यापतिपरायत्रपतिःक्रोधवशोनचेत् ॥ ४ ॥ कृतं

जानातियोमानीकूटसाक्षंनयोवदेत् ॥ श्राद्धंनवंचयेद्यस्तुवित्तशाठ्येनपैतृकं ॥ ५ ॥ श्रद्धावान्कुरुतेकर्मदत्वादानंनयो
वदेत् ॥ कृत्वाशूरत्वमाजौहिनभवेद्योविकत्थनः ॥ ६ ॥ परस्त्रियंहिवंदेतमातृतुल्यांमहीपते ॥ आरामकारकश्चैववापी
कूपमठादिकृत् ॥ ७ ॥ तडागसत्रप्रासादविप्रमंदिरकारकः ॥ कन्यादानंचयोदद्यात्सदातीर्थावगाहकः ॥ ८ ॥ सदादा
नपरोतीतःपापाच्चैवनरोत्तमः ॥ एवंविधंनरंपार्थरमासंश्रयतेभुवि ॥ ९ ॥ दुष्टात्मानंत्यजेल्लक्ष्मीःपिशुनंवृषलीपतिं ॥
तथाचद्यूतकर्तारंद्यूतंचतवसुप्रियं ॥ १० ॥ प्रथमंवारितश्चासिसर्वैःपार्थिवबंधुभिः ॥ दुर्योधनादिभिःसार्धंकृतंद्यूतंव
राटकैः ॥ ११ ॥ अक्षैश्चतुर्भिर्भवताक्रीडितंनचशोभनं ॥ जितमित्येवशकुनिःसहताताधमैर्नरैः ॥ १२ ॥ मयातदैववि
ज्ञातंकौरवाणांध्रुवंक्षयः ॥ सत्वंश्रियापरित्यक्तोद्यूतदोषेणभारत ॥ १३ ॥ त्यज्यतेसश्रियानित्यंपरान्नेयस्तुलंपटः ॥ म
दिरापानमत्तोयोमृगयासक्तचेतनः ॥ १४ ॥ साधुनिंदाकरोयस्तुयस्त्वारामादिभंजकः ॥ तस्करःकांचनादीनांधातूनां
चतथानृप ॥ १५ ॥ रसानांचैवधान्यानांपुस्तकस्यापहारकः ॥ तृणकाष्ठसमूहानांफलादीनांनराधिप ॥ १६ ॥ स्तेनोपि
वस्तुजातानांसश्रियात्यज्यतेनरः ॥ अमायांरविसंक्रांतौव्यतीपातेचवैधृतौ ॥ १७ ॥ पितृक्षयाहेतीर्थेयोमैथुनीनरमा
स्पदं ॥ इतितेकथिताधर्माअतऊर्ध्वंनिशामय ॥ १८ ॥ समानयत्वंगोविंदंयथायज्ञःप्रजायते ॥ विनातुवासुदेवंतेनहि
वासःसुखावहः ॥ १९ ॥ जैमिनिरुवाच एतच्छ्रुत्वावचस्तस्यमुनेरमिततेजसः ॥ प्रत्युवाचततोराजाभीमंविन
यतत्परं ॥ २० ॥ युधिष्ठिरउवाच भीमयाहिमहाबाहोकृष्णंप्रतिममाज्ञया ॥ तमानयाशुगोविंदंपुत्रपौत्रसमन्वितं ॥
॥ २१ ॥ यशोदांदेवकींदेवींसत्यभामांचरुक्मिणीं ॥ एतच्छ्रुत्वावचस्तस्यधर्मराजस्यधीमतः ॥ २२ ॥ नमस्कृत्यचतं
भीमोप्रतस्थेद्वारकांप्रति ॥ मार्गेबहुविधान्देशानतिचक्रामसत्वरः ॥ २३ ॥ नानाविधानिरम्याणिनानावृक्षयुतानिच ॥
वनानिसमतिक्रम्यचचारपवनात्मजः ॥ २४ ॥ पर्वतान्विविधान्रम्यान्शिखरैरतिशोभितान् ॥ अतिवेगवतीश्चैवस
रितोविपुलाःपथि ॥ २५ ॥ अतिक्रम्यददर्शासौदूरात्कृष्णपुरींतदा ॥ सुवर्णकलशोपेतांतोरणैरतिशोभितां ॥ २६ ॥ चं
दनोदकसेकेनसिक्तमार्गांतथैवच ॥ हृष्टपुष्टजनोपेतामुग्रसेनेनपालितां ॥ २७ ॥ नानावृक्षसमाकीर्णैर्नानावल्लिविरा

जितैः ॥ क्रीडावनैर्विराजंतींप्राकारैःपरिखावृतां ॥ २८ ॥ अक्रूराद्यायत्रभक्ताःसेवंतेगरुडध्वजं ॥ रुक्मिणीसत्यभा
माद्याःस्त्रियोभगवतश्श्रयाः ॥ २९ ॥ ताःसर्वाभगवत्प्रीत्यायस्यांसेवंतितंहरिं ॥ एवंविधांद्वारकांतांदृष्ट्वाभीमोमहाबलः ॥
॥ ३० ॥ हर्षेणमहतायुक्तोबभूवजनमेजय ॥ द्वारकायाबहिर्देशेमहासरसिशोभने ॥ ३१ ॥ स्नात्वासर्वविधिंकृत्वाप्रवेशा
योपचक्रमे ॥ परद्वारेणसंप्राप्यद्वारवत्यांवृकोदरः ॥ ३२ ॥ यदाप्रवेशंकुरुतेमंदिरेमाधवस्यसः ॥ तदासकुरुतेकृष्णो
भोजनंबहुभिर्वृतः ॥ ३३ ॥ रम्यंतुदेवकीदत्तंपात्रेवैकांचनेशुभे ॥ कचोलानांचतुःषष्टिन्यस्तेसुघटितेहरिः ॥ ३४ ॥ पा
यसंचंद्रसंकाशंसितशर्करयायुतं ॥ भक्तंकुमुदवर्णाभंमुद्गदालिस्तथैवच ॥ ३५ ॥ नानाव्यंजनसंयुक्तंस्तिभिःपंक्तिभिरे
वच ॥ निंबूरसेनसार्द्रेणफलमूलयुतेनच ॥ ३६ ॥ विकृतानिकृतान्येवशतशोभोजनेविभोः ॥ मरीचंपिप्पलीचार्द्ररंभा
शर्करयायुता ॥ ३७ ॥ सितयासहितेनाथदुग्धेनक्वथितेनच ॥ घृतंसितायुतंदेव्यादत्तंप्रीत्यायशोदया ॥ ३८ ॥ पूरिका
श्चतथाक्षीरविकाराश्चप्रसाधिताः ॥ द्राक्षाचशिंशपाचूतकरमर्दकृताःशुभाः ॥ ३९ ॥ मरीचपिप्पलीयुक्ताएलाचंद्रक
संयुताः ॥ क्वथिताःकथिकायस्मिन्भोजनेभूरिशोहरेः ॥ ४० ॥ प्रलेहिकाःकृतायत्रकचोलेरससंयुताः ॥ नानाकुसुम
संमोदयुक्ताःसूदैःकृताहिते ॥ ४१ ॥ मंडकावर्तुलारम्याःसमाःसर्वत्रबिंबवत् ॥ मधुयुक्तेनगव्येनयुक्तेतास्मिन्सुभाज
ने ॥ ४२ ॥ कांचनेतुकचोलेवैस्थितंकांचनसुप्रभं ॥ घृतंसुवासितंप्रीत्यादत्तंदेव्यायशोदया ॥ ४३ ॥ तत्रगोधूमचूर्णेन
चंद्रकेणविलोडितं ॥ घृतंनदृश्यतेतत्रकांचनप्रभयान्वितं ॥ ४४ ॥ सौहालिकाःपूरिकास्तुशतच्छिद्रास्तुवेष्टिकाः ॥ पूपि
कास्तुतथाक्षीरविकारास्तुप्रकाशिकाः ॥ ४५ ॥ मणयःसूत्रसंघाश्चमालतीकुसुमादयः ॥ पर्पटाःकर्बुरारम्यामाषकूष्मां
डसंयुताः ॥ ४६ ॥ वटकान्विविधान्रम्यान्भुंजतेदेवकीसुतः ॥ हिंगुजाजीरमरिचैःपूरितार्द्रेणतेशुभाः ॥ ४७ ॥ शुक्लेन
लवणेनापिशुद्धतैलेनपूरिताः ॥ कुंकुमाभाःस्नेहहीनाःसक्षताइवदुर्जनाः ॥ ४८ ॥ दधिदुग्धयुताःकेचिच्चिंचिणीचूत
संयुताः ॥ द्राक्षारसयुताःकेचित्तथान्येकथिकायुताः ॥ ४९ ॥ राजिकाजलमध्याश्चशुभान्येसितयायुताः ॥ रसैश्चतुर्भि
श्चैवान्येवटकानवधास्थिताः ॥ ५० ॥ वज्रप्रभास्तुकनकाश्चारबीजसुखारिकैः ॥ शकलैर्नारिकेलस्यलवंगशतसंयुतैः ॥

॥ ५१ ॥ घृतक्षीररसितान्यस्ताःकटाहेतुप्रलोडिताः॥ लब्ध्वासितास्तुकृसरंरम्यास्तत्रैवफेनिकाः॥५२॥ पेडारिकास्तुवै
बद्धयःकृताराजन्कवोष्णिकाः॥मोदकास्तत्रसंभूताश्चारबीजभवाःपरे॥५३॥ सितयातुकृताश्चान्येदुग्धाज्येनविनिर्मि
ताः॥ नारिकेलफलैश्चान्येवृक्षनिर्यासनिर्मिताः॥ ५४॥ चणकैश्चशुभाश्चान्येतिलैश्चणकबीजकैः ॥ ईदृशान्मोदकान्
रम्यान्कृष्णस्यार्थेतुभोजने॥ ५५॥ मांसंतुसंस्कृतंसूदैर्मृगवाराहसंभवं॥ शाशिकंरौहिकंचैवचैत्तलंमेषसंभवं॥ ५६॥
मत्स्यमांसंलाविकंचतैत्तिरंरुचिदायकं॥ नानारसयुतंरम्यंबुभुजेदेवकीसुतः॥ ५७॥ अर्शोघ्नंमानिनीकंदंसिंधुवारेंद्र
वाहकं॥ नारिंगंचिंचिणीकंदंकौकुरीफलमेवच॥५८॥ दशारंकर्कटीजातंशुभंनिंबफलंशिवं॥ टिंटाफलंलवंगंच
श्रीफलंनीरकल्ककं॥ ५९ ॥ वल्कलंवंशकारीरंतथाकायफलंनवं ॥ द्राक्षाफलंचूतफलंरम्यंकंटकितंफलं ॥ ६० ॥
धात्रीफलंशुक्तिभवंफलमंबाडकंतथा ॥ रंभाफलंपिप्पलीचमरीचाश्चमनोहराः॥ ६१ ॥ शुद्धसर्षपतैलेनलवणेनच
वेष्टितं॥ तथाराजिकयावित्धंत्रिभिर्वर्षैर्घटेस्थितं॥६२॥भुंजतेभगवान्तत्रदेवकीवाक्यतोषितः॥ समीपस्थारुक्मि
णीतुलक्ष्मणाचारुलोचना॥ ६३ ॥सत्यभामाजांबवतीव्यजनेनसमन्विताः॥चारुनूपुरसंरावारणद्वलयमेखलाः॥
॥६४॥ हारकेयूरशोभिन्यःकृष्णपार्श्वेसुसंस्थिताः ॥ पृथक्पृथक्निरीक्षंत्योवीजयंत्योहसंतिच॥६५ ॥ कथयंत्यः
कथाःकाश्चिन्निरीक्षंत्योजगत्प्रभुं॥ पारिजातभवान्यानिबिभ्रंत्यःकुसुमानिताः॥ ६६ ॥सत्यभामास्मितंकृत्वाकृष्णं
वचनमब्रवीत्॥ सत्यभामोवाच सांप्रतंभोजनंकृष्णसमीचीनंसुशिक्षितं॥ ६७॥ गोपालत्वंपरित्यज्यत
क्रपानंतथोदकं॥ईषन्नघोभवान्भूत्वादुग्धंपक्वंतुयःपुरा॥ ६८॥ पीत्वाचधावसेऽरण्येकालिंदीतीरसंस्थितः॥ गोपा
लानांयदन्नानिहरसेतत्तुविस्मृतं॥ ६९॥ इदानींमानुषंधर्मंजानासिसकलंभवान्॥ धर्मपुत्रस्यसंगत्याविज्ञातंभव
ताखिलं॥ ७०॥ चामरैर्वीज्यतेदिव्यैःपश्यरुक्मिणिवैभवं॥ अस्याश्रयेणमेनाशःकर्मणांसंभविष्यति ॥ ७१ ॥म
त्तोन्यांपद्ममहिषीमात्मानंचसुशोभनं ॥ नमांपश्यतिकल्याणिभुंजानांकर्मणःफलं॥ ७२ ॥ आयामियामिपुरतोन
मांवारयतेहरिः॥ वेदभाषितमाकर्ण्यकृष्णोमेरमतेमनः॥७३॥ तस्मान्मयाऽपिक्रियतेसेवनंसर्वदाक्षितौ॥ देवक्यु

वाच नलज्जसेकथंत्वंतुब्रुवंती केशवंप्रति॥ ७४ ॥ अहंतथाऽस्यजननीवसुदेवोऽस्यवैपिता ॥ उभाभ्यांक्रियतेक
र्मकृष्णतुष्टिकरंपरं॥ ७५ ॥ निखिलोऽयंपुरादेहेविधृतस्तुमयालघुः ॥ अहंकरोम्यस्यकर्मब्रुवतीत्वंनलज्जसे ॥ ७६ ॥
ममोदरेयदाप्राप्तस्तदाप्राप्तंसुबंधनं ॥ वसुदेवेनवीरेणपश्यत्वंकर्मणोगतिं॥ ७७॥ अलक्ष्यलक्षणश्चायंसंवृतःशत्रुसूद
नः॥ तस्मान्माताचास्यपितानभार्याप्राप्नुतेसुखं॥ ७८ ॥ सर्वैस्वकर्मणाभद्रेजीवंत्येवहिमानवाः॥ येभजंतिहरिंकृष्णं
प्राप्नुयुस्तेसुखंशुभे॥ ७९ ॥ सत्यभामोवाच भवत्यासाधुवचनंप्रोक्तंकृष्णस्यसन्निधौ ॥ तत्कथंवैप्रशंसंति
सर्वेविप्राजनार्दनं ॥ ८० ॥ एनंहितावकंपुत्रंविस्मयस्तत्रमेऽपरः॥ कर्मणांनाशकृद्देवोमहतांदेवकीसुतः॥ ८१ ॥ अ
स्मिन्देहेमहत्कष्टंकुर्वाणांवेत्तिमानवः ॥ हृदयेतुधृतःपूर्वंत्वयानैवनिरीक्षितः ॥ ८२ ॥ मयातुधार्यतेभद्रेहृदयेपरिदृ
श्यते॥ तस्मात्तेकर्मणांनाशःक्रियतेअमुनाशुभे॥ ८३ ॥ तस्यास्तद्वचनंश्रुत्वाप्रसन्नवदनोहरिः ॥ यावद्वदतितांदेवीं
तावद्भीमःसमागतः ॥ ८४ ॥ दृष्ट्वातदासमायांतंहृषीकेशोवृकोदरं ॥ वारयामासहितदासैरंध्रीवचनेनतं ॥ ८५ ॥
किंवदिष्यतिभीमोसावितिबुद्ध्यानराधिप॥ कौतुकीभीमवचनश्रवणेसर्वदाहरिः॥ ८६॥ इत्याश्वमेधिकेपर्वणिजैमि
नीयेभीमागमोनामनवमोऽध्यायः ॥ ९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥
जैमिनिरुवाच निवारितंतुकृष्णेनज्ञात्वाऽऽत्मानंवृकोदरः॥ प्रहसन्नब्रवीद्राजन्मेघगंभीरयागिरा॥ १ ॥ भीमउ
वाच मामवज्ञायकृष्णोऽसौभोजनंकुरुतेयदि॥ सैरंध्रिवदद्देशेस्मिन्किंचिकीर्षतिमाधवः॥ २ ॥ मृताकिंदेवकीदे
वीसत्यभामाऽथवामृता ॥ महर्घंकिलधान्यानांमेघोराष्ट्रेनवर्षति ॥ ३ ॥ किंचपुत्रास्तथापौत्राराक्षसेनहताबलात्॥
किंवास्त्रीभिःसहैवायंभोजनंकुरुतेहरिः॥ ४ ॥ जैमिनिरुवाच एवंवदतिभीमेतुकौतुकार्थंमहीपते ॥ कृष्णश्चवा
दयामासफेनिकाचर्वणस्वनं॥ ५॥ पर्पटानांमहच्छब्दस्तत्रकृष्णेनवैकृतः॥ प्रपिबन्कथिकांशब्दंघंटिकाघटनिःस्वनं॥
॥ ६ ॥ कुर्वन्नोष्ठपुटंरम्यंभीमसेनंप्रकोपयन्॥ वृकोदरस्तुतच्छ्रुत्वावाक्यंप्राहहसन्निव ॥ ७॥ तत्कंपिवतियःपूर्वंसांप्रतं
कथितंकथं॥ सूतिकांतांनजानामिययाकंठोऽस्यवर्धितः॥ ८ ॥ नासाच्छेदोवधोन्याय्यःपापिष्ठायास्ततोऽधिकं॥ कि

मंगुष्ठेनजनितोमुसलेनहलेनवा ॥ ९ ॥ नश्टणोतियदाशब्दंपुनरेवाहपांडवः ॥ वटकःकिंगलेलग्नोगदयापोथयाम्यहं॥
॥ १०॥ धिग्धिक्तकर्णौमदीयोऽयंयस्यकंठेमहीधराः ॥ दृश्यंतेप्रलयेनित्यंविशमानानिरर्गलं ॥ ११ ॥ वटकस्यवराक
स्यगणनाकात्रकीर्त्यते ॥ तेनाभ्यासेनगोविंदमाकुटुंबंप्रभक्षय ॥ १२॥ दूरदेशात्समायातंमामाभक्षयमामितः॥ भक्षि
तोनैवसुखदोभविष्यामिहरेतव ॥ १३ ॥ अधोनगमनंमत्थमूर्ध्वंगंताऽस्मितेशिरः ॥ यत्रप्रविष्टेनमयादृश्यतेसचराच
रं॥ १४ ॥ कुत्सयिष्यंतिवैलोकास्त्वामेवपुरुषोत्तमं ॥ आशयापरयाप्राप्तंभक्षमाणंहिपांडवं ॥ १५ ॥ एकाकिनंभीमसे
नंनृपवाक्यप्रणोदितं ॥ किंकरिष्यतिकुंतीसाविनाभीमंरसातले ॥ १६ ॥ तस्मात्पुत्रयुतांकुंतींभक्षयित्वासुखीभव ॥
पालितंधर्मराजेनत्वयाचाद्यनिपातितं ॥ १७ ॥ श्रुत्वातुभगिनीभद्रामन्यतेत्वांतुराक्षसं ॥ कथयिष्यतिकस्मैसाबाला
पुत्रवियोगिनी ॥ १८ ॥ सर्वान्संहरसेत्वंचतवदोषोनजायते॥सर्वान्सृजसिपश्चात्त्वंभीमसेनंतुमासृज ॥ १९ ॥ सृजसे
यदिमांनाथस्वदासंनवथासृज॥ जैमिनिरुवाच एतद्वृकोदरवचःश्रुत्वाविस्मितमानसः॥ २० ॥ उवाचदेवकी
पुत्रोभीमसेनंस्मयन्निव॥ श्रीकृष्णउवाच भीमसेनस्वागतंतेकुशल्यास्तेयुधिष्ठिरः ॥ २१ ॥ मयात्वंसहितोवी
रभोजनंकुरुमानद॥ भीमउवाच तृप्तोऽसिकृष्णपश्चान्मांपरिपृच्छसिसादरं॥ २२ ॥ तृप्तेत्वयिजगन्नाथेपरांतृ
प्तिंगतोस्म्यहं॥ श्रीकृष्णउवाच भुज्यतांभवताभीममयादत्तंमहाबल॥ २३॥ नचमेऽस्तिप्रियंकिंचिद्विनापार्था
द्धनंजयात्॥ नदारानचपुत्रोवानमित्राणिनबांधवाः ॥ २४ ॥ कश्चिद्वान्यःप्रियतमःकुंतीपुत्राद्धनंजयात्॥ एतावदु
क्त्वावचनंगृहीत्वादक्षिणेकरे ॥ २५ ॥ भीमसेनंभोजयित्वासहसैवसमुत्थितः॥ फणिव्रततिपत्राणिफालेयंस्निग्धशा
लयः॥ २६॥ दिव्यचंदनकर्पूरमुखामोदसमन्वितं ॥गृहीत्वाभीमसेनायददौदेवोजनार्दनः ॥ २७॥ उवाचचतदाऽक्रूरंसां
बंजांबवतीसुतं॥प्रद्युम्नमनिरुद्धंचनिशठंशठमेवच ॥ २८॥ उवाचकृतवर्माणंदुंदुभिंताडयाशुवै॥ यथामहाजनःसर्वो
धर्मराजपुरंव्रजेत्॥ २९ ॥ मदाज्ञयावाजिमेधंप्रयांत्वेतेयथासुखं॥ देवकीप्रमुखाश्चैवमातरोममयांतुवै ॥ ३० ॥ रु
क्मिणीसत्यभामाद्याःसर्वावध्वस्तथैवच ॥ एकएवपुरेरामोवसुदेवसमन्वितः ॥ ३१ ॥ पालयन्द्वारकांरम्यांतिष्ठत्वत्रय

थासुखं ॥ अतःपरंधर्मपुत्रोहयमेधंकरिष्यति ॥ ३२ ॥ यत्किंचिद्विद्यतेवित्तंशकटैःकरभैश्चतत् ॥ अश्वैरश्वतरैर्यातुधर्म राजनिकेतनं ॥ ३३ ॥ सुवर्णमणिमाणिक्यरूप्यमुक्ताफलानिच ॥ यत्राहंतत्रदारिद्र्यंकथमेतद्भवेत्क्षमं ॥ ३४ ॥ जैमिनिरुवाच कृतवर्मातदाराजन्समाहत्याथदुंदुभिं ॥ प्रोवाचस्वजनान्सर्वान्कृष्णादेशेनयादवः ॥ ३५ ॥ सर्वाःप्रकृतयश्चैवनिर्गच्छंतुममाज्ञया ॥ श्रुत्वाऽक्रूरवचःसर्वेद्वारकावासिनोजनाः ॥ ३६ ॥ द्रष्टुंतमश्वमेधंचधर्मराजस्य मंदिरे ॥ विनिर्गताद्वारकायागंतुंतन्नागसाह्वयं ॥ ३७ ॥ पुरंकौतुकयुक्तास्तेकृष्णादेशेनभूपते ॥ येयेविनिर्गताराजन् तांस्तांश्चकथयामिते ॥ ३८ ॥ ब्राह्मणावेदनिपुणाःसर्वशास्त्रविशारदाः ॥ धर्मज्ञाःकर्मनिपुणाःशुचयःसमदर्शनाः ॥ ॥ ३९ ॥ भार्यापुत्रयुताःसर्वेशिष्यैर्बहुभिरन्विताः ॥ वैश्याधनसमृद्धाश्चविनिर्यातास्तदाज्ञया ॥ ४० ॥ शूद्राविनिर्गताःसर्वेद्विजसेवारताःस्वयं ॥ कांस्योपजीविनःसर्वेबहुभाजनसंयुताः ॥ ४१ ॥ परीक्षकाश्चरत्नानांमणीनांचैवसर्वशः ॥ मुक्ताफलानांचतथासाधकाःस्वर्णकारकाः ॥ ४२ ॥ गोविंदपुरवासाद्वैसाम्रयोनिर्ययुश्चते ॥ मणीनांजन्मकर्त्तारःपूरकास्त्रपुजीविनः ॥ ४३ ॥ धान्यविक्रयिणश्चैववस्त्रनिर्णेजकास्तथा ॥ पूगीफलयुताश्चान्येवरतांबूलजीविकाः ॥ ॥ ४४ ॥ मालाकारास्तैलकाराःसहयंत्राविनिर्ययुः ॥ तंतुवायास्तथैवान्येवरसूत्रधराश्चये ॥ ४५ ॥ कोष्ठिकाःकर्मनिरतामार्ष्टिकाःक्षौमवाससां ॥ कर्मणोगुरवःसूत्रवर्धकारास्तथैषिकाः ॥ ४६ ॥ आंत्रिकाःशस्त्रकर्त्तारःकुलालाश्चांबुवाहकाः ॥ निर्णेजकाःसरजकानटास्तत्रैवसूचकाः ॥ ४७ ॥ नापिताभित्तिकर्त्तारश्चित्रकर्मरतास्तथा ॥ तथासुराप्रकर्त्तारोध्वनिनश्चर्मजीविनः ॥ ४८ मृगयाजीविनश्चैवगोविंदेनप्रणोदिताः ॥ कुट्टिनीगुरवोवेश्यानानाभावप्रवेदकाः ॥ ४९ ॥ नृपमंडनकर्त्तारोमल्लाभट्टाश्चिकित्सकाः ॥ शैलूषामागधाश्चैवसर्ववर्णोपजीविनः ॥ ५० ॥ तथेंद्रजालकाराश्चकथकाःपाठकाःपरे ॥ तथाजांगलिकाभूपक्षुरकर्मोपजीविनः ॥ ५१ ॥ व्याधाःसपंजराश्चैवकृष्णंसंवाहयंतिये ॥ घटकाश्चांबुवाहाश्चतृणवाहास्तथाऽपरे ॥ ५२ ॥ सैरंध्र्यासंगतादास्यस्तथायेसौविदल्लकाः ॥ सूतिकाःशस्त्रवैद्याश्चजलौकाजीविनश्चये ॥ ५३ ॥ अन्येकृष्णाज्ञयाप्रीताद्वारकायाविनिर्ययुः ॥ निर्गतंबहुधासैन्यंचतुरंगंमहत्तदा ॥ ५४ ॥

नद्दश्यतेतदासूर्योरजसासंवृतंनभः ॥ महारावस्तदात्यासीत्तस्मिन्सैन्येविसर्पति ॥ ५५ ॥ वणिजानांतुशकटैर्नानावी
थिवहैस्तथा ॥ द्वीपिवाहैःपक्षिवाहैर्मार्गोनैवतुलभ्यते ॥ ५६ ॥ शंभल्येकातदावृद्धाप्रहसंतीसखीजनैः ॥ प्रोवाचधावमा
नासावृथाकिंक्रियतेश्रमः ॥ ५७ ॥ अविवेकीहरिश्चायंनधनंसंप्रदास्यति ॥ संतुष्टोहिभवेद्येषांतेषांहरतिवैधनं ॥ ५८ ॥
वृषभेसासमारूढायावद्यातिस्वलीलया ॥ तावत्तस्याश्चवृषभोह्यस्माद्दासेरकंपथि ॥ ५९ ॥ पलायनपरोभूत्वापातया
मासशंभलीं ॥ पतितांतांसमालोक्यप्रहसंतिस्मसैनिकाः ॥ ६० ॥ श्रीकृष्णस्यकृतानिंदासांप्रतंदुष्ट्याऽनया ॥ स्वक
र्मणेयंवृषभात्पतिताधरणीतले ॥ ६१ ॥ नूनमेतत्तुसंभाव्यंपापिनांपतनंभुवि ॥ साचतेषांवचःश्रुत्वाशंभलीपुनरुत्थि
ता ॥ ६२ ॥ कथयंतीशुभंवाक्यंसैनिकान्प्रतिभारत ॥ कृष्णमत्रविलोक्याहंपुनरेववृषस्थिता ॥ ६३ ॥ तस्मान्मूढान
जानंतिस्मरणंकेशवस्यवै ॥ पतितानांपावनंहिनान्यंपश्यामिकेशवात् ॥ ६४ ॥ जैमिनिरुवाच कृष्णस्ततोहयं
शुभ्रंसमारुह्याग्रतोययौ ॥ मध्याह्नसमयेसर्वेदृष्टास्तुस्वपुराद्बहिः ॥ ६५ ॥ कशामादायतत्रैवद्विगुणंदर्शयत्यसौ ॥ धर्मरा
जस्यतंमार्गंयथालोकाव्रजंतिते ॥ ६६ ॥ कोटिकोटिसहस्रैस्तुरथानांदंतिनांतथा ॥ खर्वसंख्यैर्महासैन्यैर्वेष्टितोदेवकी
सुतः ॥ ६७ ॥ भीमसेनयुतोभूपस्वदारपरिवारितः ॥ कृष्णंविनानतिष्ठंतिद्वारकावासिनोजनाः ॥ ६८ ॥ सर्वेविनि
र्गताहर्षात्स्वेच्छयाकौतुकेनतु ॥ मालाकारीहरिंवीक्ष्यहृष्टावचनमब्रवीत् ॥ ६९ ॥ मालाकार्युवाच कथंमध्यं
दिनेकृष्णनिर्गमिष्यंतिमानवाः ॥ सर्वेगच्छंतिदेवेशस्ववस्तुधनजीविनः ॥ ७० ॥ वयमत्रपरंशोच्याःसुमनोभिश्चजी
विनः ॥ त्वदर्थेसंग्रहीतानिसुमनांसिमयाऽच्युत ॥ ७१ ॥ नम्लायंतुचतान्येवममदेयंचमौक्तिकं ॥ छत्रच्छायासमुदि
तंवदनंतवमाधव ॥ ७२ ॥ तापपूर्णाकिथंयामिदेवकृष्णपदानुगा ॥ गुणयुक्तानिमाल्यानिगृहाणत्वंजनार्दन ॥ ७३ ॥
तस्यास्तद्वचनंश्रुत्वाकृष्णःप्रोवाचसस्मितः ॥ श्रीकृष्णउवाच दास्यामिभद्रेसर्वंतेवांछितंमौक्तिकंधनं ॥ ७४ ॥
धर्ममाश्रयमद्वाक्याद्यथातुष्यतिमेमनः ॥ जैमिनिरुवाच एवंवदतिवैयावत्तावत्तैलान्वितापरा ॥ ७५ ॥ उवाचव
चनंदेवश्रूयतांक्रियतांविभो ॥ तैलंनिःसरतेकृष्णभित्वाजीर्णघटंमम ॥ ७६ ॥ व्यथांनकृष्णजानासिमदीयांयंत्रसंभ

वां ॥ अधुनैवसमुत्तीर्यगृहीत्वास्नेहमेवच ॥ ७७ ॥ मार्गोनलभ्यतेनाथशकटैस्तैलपूरितैः ॥ चलितुंनैवशक्नोमितथानी
तिर्विधीयतां ॥ ७८ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेश्रीकृष्णप्रयाणंनामदशमोऽध्यायः ॥ १० ॥ ॥ १० ॥
भीमउवाच कृष्णकृष्णमहाबुद्धेपश्यैतास्तवसुप्रियाः ॥ आतपम्लानवदनाविश्रामययथासुखं ॥ १ ॥ विश्रामंकृतवा
न्कृष्णोत्यदूरेस्वपुरात्ततः ॥ तंभीमसेनःसंप्राहवासुदेवंविनोदकृत् ॥ २ ॥ कृष्णकृष्णमहाबाहोममचेतसिभासते ॥ सर्वा
सांयोषितामासांत्वमेवप्रायशःपतिः ॥ ३ ॥ मालाकारीतैलकारीनापितीशंभलीचसा ॥ त्वामेवखलुजानंतिस्वपतिं
नतथाहृदि ॥ ४ ॥ श्रीकृष्णउवाच भवान्गृह्णातुसततंपौरुषंचेद्दकोदर ॥ स्थूलोदरंभीमसेनंवरंवरयशोभने ॥ ५ ॥
त्वंतुशंभलिगच्छाशुभीमंदंतविवर्जितं ॥ भीमस्तुप्रत्युवाचेदंराक्षसीमेगृहेप्रिया ॥ ६ ॥ वारयिष्यतिमायातुभक्षयिष्य
तितांहिसा ॥ तस्मात्कृष्णगताःसंतुसर्वादंतविवर्जिताः ॥ ७ ॥ कृष्णाभिसक्तचित्तानांसर्वत्रसुखमेवहि ॥ रुक्मिणीप्र
मुखाभार्याःसाध्व्यःकृष्णैकमानसाः ॥ ८ ॥ यत्रनेर्ष्यांकरिष्यंतिप्रीयतांतेनकेशवः ॥ अन्योन्यंचसपत्नीनांक्रोधश्चात्र
नदृश्यते ॥ ९ ॥ यत्रजांबवतीभार्यासेर्ष्यानैवप्रजायते ॥ त्वामाश्रित्यप्रवर्त्ततेयेजनाःसर्वतःसुखं ॥ १० ॥ संभवंतिक
थंभूमौपुनस्तेगतिवर्जिताः ॥ श्रीकृष्णउवाच स्थानभ्रष्टान्जनांश्चैवकर्तातुपवनात्मजः ॥ ११ ॥ तस्माद्याहिभी
मसेनंसमानयममांतिकं ॥ एवंतांतुसमादिश्ययावद्गच्छतिकेशवः ॥ १२ ॥ सूतिकापातितातावत्करभेणातिगामि
ना ॥ साचाहदेवकीबालंसूतिकांमांसमुद्धर ॥ १३ ॥ वसुदेवादयोयेचयादवाःसंतितेऽनघ ॥ तेषांमांसूतिकांविद्धि
त्वन्मातृपरिवंचिता ॥ १४ ॥ देवकीत्वांतुसुषुवेनाहूताऽस्मितदैवतु ॥ आत्मानमात्मनादेवसृजस्येतेचयादवाः ॥ १५ ॥
तथासृजंतिनात्मानंतेनजीवामिमाधव ॥ सूतिकावचनंश्रुत्वाकृष्णःप्राहवृकोदरं ॥ १६ ॥ श्रीकृष्णउवाच
उत्थापयाशुभीमैनांवसुदेवंविलोकय ॥ संप्राप्तंददृशेभीमःसमुत्थाप्यहिसूतिकां ॥ १७ ॥ वसुदेवंनमस्कृत्यकृष्णभीमौ
महामती ॥ बद्धांजलिपुटावग्रेप्रोचतुर्वचनंशुभं ॥ १८ ॥ गच्छामोधर्मराजानंत्वयाज्ञप्तौपरंतप ॥ वसुदेवस्तुतत्रैवप्रा
गात्कृष्णंसमादिशत् ॥ १९ ॥ वसुदेवउवाच गच्छगच्छहृषीकेशमयाज्ञप्तोगजाह्वयं ॥ पुनरागमनंतेऽस्तुकुरु

वाक्यंममाच्युत ॥ २० ॥ येवेदनिरताविप्राःशास्त्राध्ययनतत्पराः ॥ दानंतेभ्यस्त्वयादेयंसदाचारपरेषुच ॥ २१ ॥ पराप
वादविमुखाःशिष्टाचारपरास्तथा ॥ नेतव्याःसहितास्तेवैसमलोष्टाश्मकांचनाः ॥ २२ ॥ नवस्त्रमलिनेदानंनैवाचार
विवर्जिते ॥ देयंत्वयाचराज्ञावैसत्पात्रंपूज्यतेयतः ॥ २३ ॥ क्षत्रियाश्चापिनेतव्यादानधर्मपरायणाः ॥ युद्धेकुशलिनः
शूराःक्षत्रधर्मरतास्तथा ॥ २४ ॥ वृथाभिमानिनोयेचस्त्रीजितादुष्टसंगिनः ॥ विकत्थनाश्चसंत्याज्यास्तथाऽत्मस्तुतिका
रकाः ॥ २५ ॥ परोपतापिनोयेचसदाकामपराजनाः ॥ एवंविधानसंग्राह्याःश्वशुराहृतवृत्तयः ॥ २६ ॥ जामातृजेनवि
त्तेनयेजीवंतिनराधमाः ॥ अपुत्रस्यमृतस्येहयेगृह्णंतिधनंछलात् ॥ २७ ॥ द्यूतकर्मरतानित्यमपरीक्षितकारिणः ॥ गु
र्विणींयेऽभिगच्छंतिसुपर्वविमुखास्तथा ॥ २८ ॥ ऋतुकालंसंत्यजंतियेवैमोहपरायणाः ॥ नारीभिःसहिताश्चैवयेप्र
कुर्वंतिभोजनं ॥ २९ ॥ तथोत्सृजंतियेवीर्यंकुयोनौपापबुद्धयः ॥ परस्त्रियाऽभितृप्यंतेपिशुनाःपापबुद्धयः ॥ ३० ॥ त
थाऽन्येपापिनोयेचयेचसज्जननिंदकाः ॥ महापातकिनोयेचविशुद्धान्दूषयंतिये ॥ ३१ ॥ मासोपवासिनींसाध्वींका
मयानाहिपापिनः ॥ अर्थिनंधनसंपन्नोविमुखंयःकरोतिवै ॥ ३२ ॥ दरिद्रस्तपसाहीनःकातरोबहुजल्पकः ॥ पापिष्ठा
चापियानारीपतिवंचनतत्परा ॥ ३३ ॥ गृहकार्येषुविमुखासत्यशौचविवर्जिता ॥ ननेतव्यात्वयासार्धंकदाचिन्मधुसूद
न ॥ ३४ ॥ जैमिनिरुवाच एवंब्रुवंतंपितरंनमस्कृत्यजनार्दनः ॥ ततःप्रदक्षिणीकृत्यस्फुटंवचनमब्रवीत् ॥ ३५ ॥ श्रीकृष्ण
उवाच सर्वंतातकरिष्यामित्वयोक्तंपरमंहितं ॥ महापातकिनस्त्यक्त्वायाम्यहंतंयुधिष्ठिरं ॥ ३६ ॥ भीमउवाच वसुदेवे
नवृद्धेनयदुक्तंवचनंतव ॥ त्याज्याःसर्वैजनाभूमौतत्साहसतरंमम ॥ ३७ ॥ साधवोयत्रतिष्ठंतितत्रवासश्चतेसदा ॥ कि
मत्रचित्रंगोविंददुष्टेचित्तंनिवेशय ॥ ३८ ॥ उपकारिषुयःसाधुःसाधुत्वेतस्यकोगुणः ॥ अपकारिषुयःसाधुःससाधुः
सद्भिरुच्यते ॥ ३९ ॥ समदृष्टिर्भवाशुत्वंसर्वभूतेषुकेशव ॥ भीमसेनवचःश्रुत्वावसुदेवादयस्तथा ॥ ४० ॥ साधुसाध्वि
तिसंवाच्यनिर्ययुस्तेपुरींप्रति ॥ रामेणसहितोगच्छन्वसुदेवोमहामनाः ॥ ४१ ॥ उवाचवाक्यंगोविंदंविह्वलःस्नेहला
लसः वसुदेवउवाच किंकरोमिहृषीकेशत्वद्वियोगेनजीवितं ॥ ४२ ॥ नसमर्थोधारयितुंयथादशरथःपुरा ॥ स

म्यकृत्यजामिकार्यंचेत्सर्वंनष्टंभविष्यति ॥ ४३ ॥ राज्ञादशरथेनैववियोगाद्राघवस्यहि ॥ शोकभावेनसंत्यक्तंजीवि
तंसुप्रियंभुवि ॥ ४४ ॥ एतावदुक्त्वावचनंपरिष्वज्यात्मजंततः ॥ विससर्जांशुगमनेपरिवारसमन्वितं ॥ ४५ ॥ जैमिनि
रुवाच ततःकृच्छ्रेणमहतावसुदेवःपुरंययौ ॥ भीमेनसहितःकृष्णस्तथांऽतःपुरसंयुतः ॥ ४६ ॥ यावद्गच्छतिमार्गेसौता
वद्दृष्टंमहत्सरः ॥ हंसकारंडवाकीर्णंचक्रवाकोपशोभितं ॥ ४७ ॥ अम्लानपंकजांतत्रदद्दृशेपद्मिनींततः ॥ समाहूयाब्रवीत्त
त्ररुक्मिणींभीष्मकात्मजां ॥ ४८ ॥ वासुदेवउवाच इमांत्वंपश्यसुभगेरविभार्यामनिंदितां ॥ गजैर्गृहीतांमुक्तां
चमरालैर्विंदलीकृतां ॥ ४९ ॥ चंचरीकद्वयवृतांस्त्रीणांचित्तंतुचंचलं ॥ निजंनाथंवंचयित्वारमयंतिपरंजनं ॥ ५० ॥ अ
विलोक्यनिजंकांतंम्लायंतिचनिशागमे ॥ हृदयेकलुषंगृह्यषट्पदंप्रस्वपंतिच ॥ ५१ ॥ नाथागमेप्रहृष्यंतिचित्रंमेयोषि
तांमनः ॥ पद्मिनीनांसंभवस्तुपंकादिहविलोक्यते ॥ ५२ ॥ कलुषंमानसंस्त्रीणांनिदानादेवदृश्यते ॥ चंचलेनपरामृष्टा
दिवाकंपत्यहर्निशं ॥ ५३ ॥ प्राणनाथभयाद्भीतालक्ष्यतेसधनायथा ॥ वासुदेववचःश्रुत्वारुक्मिणीवाक्यमब्रवी
त् ॥ ५४ ॥ स्मितंकृत्वाविशालाक्षीवक्रोक्त्याकेशवंप्रति रुक्मिण्युवाच हरिंजानातिनाथंवैपद्मिनीपद्मलोच
न ॥ ५५ ॥ स्वसुतानागतान्मत्वापुष्णात्येषागृहागतान् ॥ पुत्रपौत्रादिकान्नाथषट्पदादीन्जनार्दन ॥ ५६ ॥ स्तनौरुद्धं
तौपद्मिन्याःपिबेतेभ्रमराविमौ ॥ प्राणनाथसमीपेतुषट्पदौबालकाविव ॥ ५७ ॥ दोषःकश्चात्रगोपालरुचिरंक्रियते
ऽनया ॥ दूरेप्रियंतथावीक्ष्यकुरुतेचंचलंमनः ॥ ५८ ॥ नतुनाथंवंचयतिरममाणापरात्परं ॥ एतत्सतांमतंनाथपद्मिन्याश्च
रितंमहत् ॥ ५९ ॥ कथंनम्लायतेकृष्णनारीनाथःपरांव्रजेत् ॥ रात्रौविरहिणीबालंगृहीत्वापश्यषट्पदं ॥ ६० ॥ नित्यंनि
द्रांचकुरुतेह्येषधर्मःसनातनः ॥ पद्मिनीकुचमादायतमोलिर्विरहाग्निना ॥ ६१ ॥ कुर्वन्कृष्णंमुखंप्राप्यमृतोऽसौषट्प
दोयदि ॥ येकृष्णत्वद्दयादेवतेतिष्ठंतिकथंविभो ॥ ६२ ॥ प्रियोदयेविकसितायदिगोविंदपद्मिनी ॥ जायतेकमलंचा
स्याःसमारोहतिशंकरं ॥ ६३ ॥ विलोक्यनलिनींनाथविस्मितोऽसिवदाधुना ॥ धराहरिपदक्षुण्णासरजाहिपुराऽभव
त् ॥ ६४ ॥ तस्यारजस्तुपतितंजलेहरिपदच्युतं ॥ ततोजलरजोभ्यांहिजातःपंकःकिलाच्युत ॥ ६५ ॥ पंकंविलोक्यनचि

रान्निदानंतुनिरीक्ष्यहि॥ ज्ञायतेतववाक्येनभीमसेनस्यशृण्वतः॥ ६६॥ यथासर्वगतस्त्वंमांनतथावेत्तिकिंभवान्॥
स्त्रियस्तुवक्ष्यःसंत्यन्यामांजानासिदिनेदिने॥ ६७॥ नत्वदन्यंहिपश्यामिचिंतयंतीजनार्दनं ॥ यत्किंचिद्दृश्यतेलोकेत्व
याव्याप्तंविभातिमे॥ ६८॥ जैमिनिरुवाच इतितस्यावचःश्रुत्वाकृष्णस्तोषसमन्वितः॥ समुत्तीर्यहयात्तस्मात्स
माहूयबलाधिपं॥ ६९॥ अब्रवीत्केशवस्तंवैभेरींवादयमाचिरं॥ कृतवर्मातथाचक्रेगोविंदवचनान्नृप॥ ७०॥ रात्रौ
परिजनेनाथसहितोन्यवसद्धरिः॥ कृताह्निकःसप्रभातेसैन्यंनिजमचोदयत्॥ ७१॥ शनैःशनैश्चसंप्राप्तोदेशंधर्मेण
पालितं॥ मार्गेयांतंहरिंवीक्ष्यपामराःपशुपालकाः॥ ७२॥ व्रजौकसश्चपश्यंतिकृष्णंदधिभृतःपरे॥ गोपालावंशहस्ता
श्चगुंजाभूषणभूषिताः॥ ७३॥ वादित्राणिस्वकान्येववादयंतिपुनःपुनः॥ मुख्योस्माकमसौगोपोनंदपुत्रोनसंश
यः॥ ७४॥ इतिब्रुवंतस्तेकृष्णंसमालिंग्यपथिस्थिताः॥ पृच्छंतिचहसंत्यन्येसाट्टहासंमुहुर्नृप॥ ७५॥ दध्योदनंप्रयच्छं
तिप्रणिपातपुरःसरं॥ पश्यकृष्णाद्यमेवंशंवीणामतिमनोरमां॥ ७६॥ गावोमयारक्ष्यमाणादेवयांतिइतस्ततः॥ इ
दानींताःस्वयंप्राप्तास्त्वांविलोक्यातिदुर्धरं॥ ७७॥ भीतायस्ताधुनाव्याघ्रैर्लोभमोहमयैर्हरे॥ मोचितामम गोविंदत्वया
मित्रेणसांप्रतं॥ ७८॥ कथंहयंसमारूढःस्त्रीभिश्चैवसमन्वितः॥ कुतोमणिस्त्वयालब्धःकौस्तुभःकुंजराइमे॥ ७९॥
क्वयासिकृष्णपादांकंकुतोलब्धंत्वयाहृदि॥ तत्रापरोऽब्रवीद्वाक्यंमूढवेत्सिनकेशवं॥ ८०॥ यावद्धृदिपदंलग्नंश्रीवत्संच
द्विजन्मनः॥ तावच्छ्रीमानयंजातःसर्वंचलभतेहरिः॥ ८१॥ जैमिनिरुवाच गोपानांतद्वचःश्रुत्वाप्रहृष्टोभग
वानभूत्॥ सर्वान्संपूज्यचापश्यत्स्त्रियश्चैवसमागताः॥ ८२॥ पात्रहस्ताःसदीपास्ताःकृष्णदर्शनलालसाः॥ सत्वरं
माधवंद्रष्टुमाव्रजंतिनिजाद्गृहात्॥ ८३॥ काचिद्गृहेप्रकुर्वाणामथनंसाप्रधाविता॥ गोमयेनापिलिप्तांगीकाचित्कृ
ष्णंसमागता॥ ८४ एकाकृष्णस्यकेशेस्वांस्रजंचप्रददौनृप॥ सर्वकर्माणिसंत्यज्यकाचित्प्राप्ताहरिंप्रति॥ ८५॥ का
चिद्रजोवतीगोपीचचालकृष्णसन्निधिं॥ अपराप्राहतांयांतींरजःप्रक्षाल्यगम्यतां॥ ८६॥ सरजाचाद्यवैसुभ्रुगच्छ
तीकिन्नलज्जसे॥ गोप्युवाच रजःप्रक्षालितंमूढेनतुतत्परिशाम्यति॥ ८७॥ कर्मणामलिनंगात्रंक्षालितुंनैवश

क्यते ॥ जीवितंक्षपितंगेहेशेषंचकलुषंस्थितं ॥ ८८ ॥ तस्माद्गच्छामिगोविंदंरजसाचावृताधुना ॥ मलिनैर्गम्यतेतत्र
जलंयत्रहिपुष्कलं ॥ ८९ ॥ शिलातलेवापीठेवाक्रियतेमलनाशनं ॥ पादपीठेऽद्यकृष्णस्यमलयुक्तंकलेवरं ॥ विरज
स्कंकरोम्यद्यलज्जांसंत्यज्यसंसदि ॥ ९० ॥ इत्युक्त्वाप्रययौचाथश्रीकृष्णस्यसमीपतः ॥ उवाचकेशवंचान्याप्रहसंतीपुनः
पुनः ॥ ९१ ॥ नवनीतंगृहाणत्वंकर्मणायन्मयाहृतं ॥ यशोदात्वन्मुखेदेवनवनीतंददौपुरा ॥ ९२ ॥ तयादृष्टंजगत्सर्वं
तमहंत्वांविलोकये ॥ तयायथापुरादृष्टंतथाहमवलोकये ॥ ९३ ॥ त्वदन्यःकश्चगोविंदजगदास्येप्रदर्शयेत् ॥ तावच्चा
न्यासमागत्यदृष्ट्वाकृष्णंचहर्षिता ॥ नमस्कृत्यस्थिताराजन्सर्वंविस्मृत्यकर्मजं ॥ ९४ ॥ भयंगोविंदमासाद्यतदद्भुतमि
वाभवत् जैमिनिरुवाच ततःप्राप्तोमहाबुद्धिर्भगवान्देवकीसुतः ॥ ९५ ॥ कालिंदीतीरसान्निध्येयत्ररम्यंमहद्वनं ॥ सं
स्थाप्यवीणकंरम्यंसैन्यंतत्रन्यवेशयत् ॥ सुहृज्जनंसमाहूयवचनंचेदमब्रवीत् ॥ ९६ ॥ श्रीकृष्णउवाच देवकींमा
तरंप्राहयशोदांरुक्मिणीमपि ॥ ९७ ॥ कार्याभवद्भिःकुंत्याश्चपरिचर्यादिनेदिने ॥ भगिनीवसुदेवस्यजननीचार्जुनस्य
च ॥ ९७ ॥ अन्यावृद्धतमाःप्राप्ताःसेवनीयाःप्रयत्नतः ॥ अनुसूयाऽरुंधतीचऋषिभार्याश्चशोभनाः ॥ ९८ ॥ प्रद्युम्नप्रमु
खाःसर्वेंश्रृण्वंतुवचनंमम ॥ धर्मराजस्यचपुरेबहुलोकसमागमे ॥ ९९ ॥ बहुवीरयुतेरम्येयज्ञोत्सवविनोदिते ॥ गुरूणां
चप्रकर्त्तव्यंभवद्भिःपूजनंतथा ॥ १०० ॥ तावत्तेजांसिवीराणांयावत्पार्थोनदृश्यते ॥ सर्वतीर्थानिगर्जंतितावत्पापप्र
णाशने ॥ १ ॥ यावन्नसिंहगेजोवेदृश्यतेगौतमीनदी ॥ प्रद्युम्नेनयथाराष्ट्रेस्थीयतेराजलीलया ॥ २ ॥ तथाऽत्रशक्यते
नैवस्थातुंधर्मपुरेऽधुना ॥ नकदाचिद्भवान्प्राप्तःपुरेहिगजसाह्वये ॥ ३ ॥ यत्रभीमोविद्यमानोमहाबुद्धिःसदाशुचिः ॥ ज
ननीभवतांदेवींपार्षतींभगिनींमम ॥ ४ ॥ संभावयतुयज्ञेऽस्मिन्भामयासहिताशुभा ॥ अयुतेनापिनारीणांसदाति
ष्ठतुसावृता ॥ ५ ॥ दीपहस्तायज्ञकालेभावयंतुचपार्षतीं ॥ अहंतत्रगमिष्यामिप्रथमंधर्मनंदनं ॥ ६ ॥ सत्कर्त्तुंस्वजनंतं
तुयूयंगच्छथपृष्ठतः ॥ एवंसंदिश्यतान्सर्वान्भीमंसंस्थाप्यवीणके ॥ ७ ॥ एकाकीहयमारुह्यप्रययौहस्तिनापुरं ॥ वा
सुदेवोमहाबुद्धिःपरिमेयपुरःसरः ॥ ८ ॥ प्रविशंतंहरिंवीक्ष्यनागरिकोमहाजनः ॥ हर्षेणमहतायुक्तःसंमुखोऽभूज्जना

धिप ॥ ९ ॥ ब्राह्मणायाज्ञिकाःसर्वैवचनंचेदमब्रुवन् ॥ अस्माभिःक्रियतेकर्मभुविस्वर्गेच्छयासदा ॥ १० ॥ अग्निष्टो
मादिभिर्यज्ञैःस्वर्गास्तेहरिणाकृताः ॥ यज्ञभुग्यज्ञकर्त्ताचफलदाताचकर्मणां ॥ ११ ॥ सोयमायातियज्ञेशोऽनेकयज्ञ
फलप्रदः ॥ कथंधूमांधयादृष्ट्यादृश्यतेयज्ञनायकः ॥ १२ ॥ यथाभक्तेनपार्थेनदर्शितोऽयंजनार्दनः ॥ नतथापावकेना
पिबहुसंतर्पितेनच ॥ १३ ॥ कृष्णंनवेत्तिकिंवह्निःसप्तजिह्वोऽपिविश्रुतः ॥ क्षीरंपिबतिवैसाक्षाद्द्विजिह्वःकुरुतेवि
षं ॥ १४ ॥ सप्तजिह्वःकथंकृष्णंदर्शयेत्कृष्णवर्त्मना ॥ तत्राब्रवीद्द्विजःकश्चिन्नदोषःपावकस्यसः ॥ १५ ॥ अस्माकंचा
स्तिदोषोऽयंकर्मादीनामनर्पणात् ॥ ततोऽन्यःप्राहतान्सर्वान्पश्यतांदेवकीसुतः ॥ १६ ॥ यज्ञजंसुकृतंचास्मैकृष्णायाशु
प्रदीयतां ॥ तेनस्वर्गेणकिंकार्यंयस्मात्पतनजंभयं ॥ १७ ॥ निर्भयंविचरिष्यामःसांप्रतंहरिणावयं ॥ जैमिनिरुवाच
एवंब्रुवंतस्तेन्योन्यंनिरीक्ष्ययदुनंदनं ॥ १८ ॥ ऊचुःकृष्णंतदासर्वेयदादेवेनवंदिताः ॥ चराचरस्यदेवत्वंगमनागमना
दिकं ॥ १९ ॥ छिंधिविप्राशिषःप्राप्यस्वस्तितेऽस्तुजगत्पते जैमिनिरुवाच दृष्णिवीरंहिददृशुस्तदासंन्यासि
नोहिते ॥ २० ॥ पादानतंप्रब्रुवाणानमोनारायणेतिच ॥ संन्यासिनऊचुः नारायणस्त्वमात्मानमात्मनाऽसि
नमस्कृतः ॥ २१ ॥ नारायणेतिहिगिराऽस्माभिर्वक्तुंनपार्यते ॥ यतोवाचोनिवर्त्तंतेसभवान्पादयोर्नतः ॥ २२ ॥ वे
दांतवेद्यमभयंप्रत्यक्षंत्वामुपास्महे ॥ द्वेरूपेवासुदेवस्यचलंचाचलमेवच ॥ २३ ॥ चलंसंन्यासिनांरूपमचलंप्रतिमा
दिकं ॥ प्रणवाभ्यासनिरताःप्रणवोऽपिपदांबुजं ॥ २४ ॥ त्वदीयंचिंतयत्येवसदाऽद्यापिनवेत्तितत् श्रीकृष्णउवाच
कर्मफलस्यसंन्यासात्पुष्टंविष्णोःकलेवरं ॥ २५ ॥ भवद्भिर्ध्यानसंयुक्तैर्विश्वरूपमयंकृतं ॥ हंसायथाभवंतश्चतथाकृ
ष्णोऽस्मिभूतले ॥ २६ ॥ आवयोःसंगतिश्चास्तुरम्येधर्मपुरेसदा ॥ जैमिनिरुवाच अनुज्ञातस्ततःकृष्णोराजमा
र्गेजगामसः ॥ २७ ॥ प्रासादस्थाश्चपश्यंतियोषितश्चारुलोचनाः ॥ पण्यांगनाश्चगोविंदंविलोक्येदमथाब्रुवन् ॥ २८ ॥
पण्यांगनाऊचुः कथमायातिगोविंदोगृह्णीतेतिसकृच्छुभः ॥ दाताहिकामुकोधूर्तःकृष्णःकमललोचनः ॥ २९ ॥
पेशलःसबलःश्रीमान्लुब्धःस्त्रीषुनिरंतरं शंभल्युवाच एवंपुराणपुरुषंदृथानारीजनोद्धदि ॥ ३० ॥ धर्त्तुंप्रयत्तं

कुरुतेनायंधर्त्तुंभवेत्क्षमः॥ समुक्तस्तत्कथंमुग्धेमुक्तोधर्तुंनशक्यते॥ ३१ ॥ षोडशस्त्रीसहस्राणियेनभुक्तानिभूतले॥ यू
नापुराघवृद्धेनबहुपुत्रेणकिंफलं॥ ३२ ॥ तथाऽपिकारणंत्वेकंकेशवग्रहणेहिनः ॥ मुक्ताःसर्वाभविष्यामःसकामास्ते
नसंगताः॥ ३३॥ तस्मात्पुराणपुरुषात्परमार्थोहिगृह्यतां ॥ पुमान्युवाऽस्तुवृद्धोवानसंगेसस्पृहावयं ॥ ३४॥ युवती
भिर्नवृद्धाभिर्मोचनीयोजनार्दनः॥ कृष्णाद्वृद्धोनवैकश्चिद्दृश्यतेऽत्रमहाजनः ॥ ३५॥ ब्रूतेमहाजनोमंदःसांप्रतंदेवकी
सुतं॥ जानाम्यहंयथाचास्यचेष्टितंवेत्तिनापरा॥ ३६॥ कुब्जाचकामिनीयेनतथावानरकन्यका॥ स्त्रीसमूहमिमंरम्यं
सकथंपरिहास्यति ॥ ३७॥ जैमिनिरुवाच एवंब्रुवाणासाकृष्णंसर्वाभिःसहिताग्रतः॥ नमस्कृत्यस्थितात्दृष्टादे
वेनापिप्रतोषिता॥ ३८॥ ततःकृष्णस्यपुरतःस्थितोबंदिगणोमहान्॥ तेषांवृद्धतमःप्राहसंस्तुवन्श्रीपतिंमुहुः॥३९॥
बंदिराजउवाच प्राप्तोऽयंदेवकीपुत्रःकृष्णःकंसनिषूदनः ॥ अद्यार्थिनांचसर्वेषांभवदैन्यंगमिष्यति॥ ४० ॥इदंम
मेतिजल्पंतोजनामोहरुजावृताः॥ कृष्णवैद्येनतेसर्वेस्वनामौषधदायिना॥ ४१ ॥ सत्यंवच्मिनसंदेहोभवंतिचनिराम
याः॥व्याधयःकामजाःसर्वेसंक्षयंयांतिचिंतनात्॥४२॥ ब्रह्मायुरितिशब्दोऽयंकथंब्रूमोहरिंप्रति॥नाभिपंकजमध्यात्तु
समुत्पन्नःपितामहः॥ ४३॥ पितापितामहःकोऽस्यवर्ततेतन्नविद्महे॥ नामग्रहणमेवास्यकर्त्तव्यंकिलसिद्धये॥ ४४॥
महिमानंनजानामिनाम्नोऽस्यगदितुंभुविवि॥ नामानिसुबहून्यस्यप्रतापजनितानिच॥ ४५ ॥ नीतंनिगममालोक्य
शंखेनादिझषोऽभवत्॥ मानुषाणांकथंमध्येवर्ण्यतेमीनजन्मतत्॥ ४६ ॥कूर्मःकोलोऽयमभवत्श्रुतंमेतस्यपौरुषम्॥
अर्धकेसरिवेषोऽयंविप्रोभूच्चैववामनः॥ ४७॥ एतानिकिलजन्मानिश्रुत्वाचास्यमहात्मनः॥सर्वसंपत्समायुक्तोभवि
ष्यतिनसंशयः॥ ४८॥ मन्मुखाद्गतदोषस्तुकिंचित्परमुखात्तथा॥ भविष्यतिनसंदेहःकृष्णःकोपंकरिष्यति ॥ ४९ ॥ बं
दिनाममजन्मानिकथितानिजनंप्रति॥ कुरूपाणिध्रुवंमत्वाजिह्वांकिंमेहरिष्यति ॥ ५० ॥ सर्वंहरतिगोविंदःशरीरंमा
नसंमम॥ नामानिकीर्त्तयिष्येऽहंरामरामेतिवैपुनः॥ ५१ ॥ रामनाम्नाऽपिसर्वज्ञःशंकरःकिलतुष्यति ॥ तेननाम्नानकिं
तुष्येद्देवोगोपालमूर्तिमान्॥ ५२ ॥ जैमिनिरुवाच एवंहिचिंत्यमानंतंवारयामासकेशवः॥ प्रददौमुक्तमालां

स्वांतस्मैकंठविलंबिनीं ॥ ५३ ॥ मुक्ताफलानिसर्वैषांदत्वासप्रययौनृप॥ धर्माधिकारिभिर्दृष्टःसर्वैस्तैःपरिवारितः
॥ १५४॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेश्रीकृष्णहस्तिनापुरप्रवेशोनामएकादशोऽध्यायः॥ ११ ॥ ॥ ७॥
जनमेजयउवाच ततःपरंकिमभवत्स्मार्तभाषितमादरं॥ किंजगादसगोविंदस्तन्मेब्रूहितपोधन॥ १॥ जैमिनि
रुवाच शृणुराजेंद्रगोविंदमब्रुवंस्तेचयद्वचः॥ महताचैवहर्षेणधर्मराजपुरेतदा॥ २॥ स्मार्त्ताऊचुः सम्यगा
चारकरणाद्वर्त्तनात्सम्यगेवनः ॥ संप्रायश्चित्तदानाद्धैत्वमस्माभिर्विलोक्यसे ॥ ३ ॥ नृपाज्ञयाजनाःसर्वेधर्ममार्गेनि
योजिताः॥ धर्मसंरक्षणार्थंहित्वयाजन्मकृतंभुवि ॥ ४ ॥ कुर्वंतिपातकंयेचब्रह्महत्यादिकंहरे ॥ ब्रह्महाहेमहारीचसुरा
पोगुरुतल्पगः॥ ५॥ तत्संसर्गीपंचमस्तुमहापातककारकाः॥ त्वन्नामग्रहणादेवपूताःकृष्णभवंतिते॥ ६॥ एतेपृच्छंति
सर्वेऽस्मान्प्रायश्चित्तंहिकीदृशं॥ कृपयादीयतेऽस्माभिस्तेभ्योनामाधिकंनहि ॥ ७॥ पातकेनसमंवीक्ष्यप्रायश्चित्तंप्र
योजयेत् ॥ एतानिपातकान्येवस्वल्पानिहरिनामतः ॥ ८ ॥ द्वादशाब्दमुखंतस्मात्तेषुतेषुसमंभवेत्॥ द्वादशाब्दमुखंकृ
त्वागात्रंतेषांतुतिष्ठति॥ ९ ॥ हरिनामप्रगृह्णंतिनतिष्ठतिकलेवरं॥ नपापानिवसंत्येवतस्मिन्देवजनार्दन ॥ १० ॥ ए
कस्तुसंशयोघोरोनकथंचनगच्छति॥ प्रायश्चित्तप्रदानेनसदास्मच्चित्तसंस्थितः॥ ११ ॥ विष्णोर्नामानियेमूढानस्मरं
तिविमोहिताः॥ तेषामिहात्महंतॄणांप्रायश्चित्तंनविद्महे॥ १२॥ धर्मशास्त्राणिसर्वाणिवीक्षितानिपुनःपुनः॥ प्रायश्चि
त्तानिदृष्टानिसर्वपातकहानितु॥ १३ ॥ नश्रुतंनचदृष्टंहिप्रायश्चित्तंजनार्दन ॥ त्वत्संस्मृतिविहीनानामधमानांकथंचन
॥ १४॥ जैमिनिरुवाच एवंविधंवचःश्रुत्वाप्रसन्नःपरमेश्वरः॥ सहैवतैःप्रयातोऽग्रेदृष्टवान्नर्त्तकीगणान्॥ १५॥प्रव
र्त्तमानान्नृत्येषुकृष्णागमनकांक्षया॥ षड्विधातालकेनाथतत्रस्तेनचकेशवः ॥१६॥ ततोमाधवमालोक्यनर्त्तकीचकरं
विना॥ वल्लीवनंदनेरम्येसुमनोभिरलंकृता॥१७॥ नेत्राभ्यांषट्पदाभ्यांचभ्रममाणापुनःपुनः॥ वंशकीचकनादेनमृदं
गकलनिःस्वनैः॥ तोषयंतीहृषीकेशंमधुरंवाक्यमब्रवीत्॥ १८ नर्त्तक्युवाच मांभ्रमंतींजनावीक्ष्यप्रहसंतिततवाग्र
तः॥ नविंदंतिपरंमूढामद्भमात्तुष्यतेहरिः॥१९॥ किंध्यानंकिंतपस्तीव्रंकिंदानंकिंचतद्व्रतं॥यस्मिन्कृतेनगोविंदोदृश्यतेभु

विचक्षुषा॥ २०॥ध्यानेनयोगिनांनैवलीलयादृश्यतेहरिः॥ संस्थितंमद्गमेणात्रसर्वैंपश्यंतुयोगिनः ॥ २१ ॥ नृत्यतां
गायतांचैवनानावाद्यंप्रकुर्वतां॥ यथासंतुष्यतेदेवोनध्यानाद्यैरितिश्रुतं॥ २२ ॥ एकंसुदर्शनंचक्रंतवहस्तेजनार्दन॥
पश्यमत्पाणिपदयोर्धृतंचक्रचतुष्टयं ॥ २३ ॥ त्वयापादेधृतागंगाकपोलेशिरसामया ॥ अचलस्त्वंहृषीकेशचंचला
ऽस्मिसदाऽवला॥ २४॥ त्वयैकंचाल्यतेकृष्णश्रूयतेब्रह्मगोलकं॥ चाल्यंतेपुरतस्तेऽद्यमयैतेसप्तगोलकाः॥ २५॥ षड्विंश
त्संख्यकाभावास्तवदृष्टेरुदाहृताः॥ क्रियंतेनमयातेऽत्रपश्याम्येकेनकेशवं ॥ २६॥ नेत्राभ्यांकुसुमेकृष्णगृहीतेद्वेमया
भुवः॥ पश्यामित्वांतथैवात्रविस्मयःपरमोहिमे॥ २७॥ श्रीकृष्णउवाच पदानिममगायंतीनृत्यस्वत्वंवरानने॥
नगंतव्यंत्वयाक्कापिस्थातव्यंमद्गृहेसदा॥ २८॥ जैमिनिरुवाच ततःप्रविष्टोभगवान्धर्मराजस्यमंदिरे॥ददर्शधृ
तराष्ट्रेणविदुरेणमहात्मना॥ २९॥ कृपेणसहितंवीरंकुंतीपुत्रंयुधिष्ठिरं॥ नमस्कृत्याथतान्सर्वानुपविष्टोवरासने॥ ३०॥
आलिंग्यपांडवंवीरंमाद्रीपुत्रौतथापरान्॥ नमस्कृतश्चपार्थेनसर्वैस्तैर्जगतःपतिः॥३१॥धर्मराजेनचाघ्रातोमूर्ध्निसंतो
षितोबहु॥ कुंतींहृष्टांचसंवीक्ष्यद्रौपदींसात्वतीमपि॥ युधिष्ठिरोपिसंहृष्टःकृष्णंवचनमब्रवीत् ॥३२॥ धर्मराजउवा
च कुशलंदेवकीपुत्रवसुदेवमुखाजनाः॥ त्वंतुभीमेनचानीतोयज्ञेऽस्मिन्मामकेशुभे॥३३॥ देवकीचयशोदाचरोहि
णीचैवकेशव॥ मातरस्तेनसंप्राप्तानरानार्यश्चमारिष॥ ३४॥ श्रीकृष्णउवाच वसुदेवश्चरामेणसहितःस्थापितः
पुरे॥ अन्येसर्वेंचसंप्राप्तानरानार्यश्चमारिष॥ ३५॥ भीमेनसहिताःसर्वेंसंतिगंगातटेशुभे॥ अहमग्रेचसंप्राप्तस्तवदर्श
नलालसः॥३६॥ धर्मराजउवाच पश्यपार्थयथाकृष्णोब्रूतेप्राप्ताहियादवाः॥ नाथेनानेनहिवयंनूनंधन्यतराः
क्षितौ॥ ३७॥ निर्गच्छामोऽद्यवैतत्रयत्रतेसुहृदःस्थिताः॥ कुंतीचसौबलेयीचद्रौपदीसहिताऽधुना॥ ३८ ॥ देवकींस
न्मुखंयांतुसत्कर्तुंस्वजनंचतं॥ महाजनाश्चसर्वेवैनिर्गच्छंतुममाज्ञया॥ ३९॥ जैमिनिरुवाच एवंसंदिश्यधर्मात्मा
सहकृष्णेननिर्ययौ॥ यौवनाश्वेनवीरेणसबलेनपुराद्बहिः॥ ४०॥ वादित्राणितुसर्वाणिजघ्नुस्तस्मिन्समागमे॥ द्रौप

* यथानेत्रयोःभुवःसकाशात्कुसुमग्रहणमविषयंतथैवतवमन्यक्षत्वमितिभावः

दीकेशवेनाथस्वयंसामंडितापयौ ॥ ४१ ॥ तुरंगंपुरतःकृत्वासमेतंभूरिचामरैः ॥ गायंतिगायकास्तत्रनृत्यंतिकुशलान
टाः ॥ ४२ ॥ बंदिनःप्रतिगर्जंतिस्तुवंतःसूतमागधाः ॥ तस्मिन्बलेप्रचलितेशंखदुंदुभिनादिते ॥ ४३ ॥ चक्रुर्नानाविधा
श्रेष्ठाःसर्वेलोकाश्चहर्षिताः ॥ प्रभावतीद्रष्टुकामादेवकींरुक्मिणीमपि ॥ ४४ ॥ मणिरत्नान्युपादायबंधुभिःसहिताय
यौ ॥ अपरंचायुतंस्त्रीणांनानालंकारभूषितं ॥ ४५ ॥ एतैःपरिवृतोराजासकृष्णःप्राप्तवान्स्वयं ॥ ततस्तेयादवाःसर्वेसे
नांव्यूह्यव्यवस्थिताः ॥ ४६ ॥ देवकीप्रमुखानांहिशिबिकाःसमलंकृताः ॥ सुवर्णमणिसन्नद्धाश्चित्रकौशेयसंवृताः
॥ ४७ ॥ एकातुशिबिकायत्रतत्रनारीशतंनृप ॥ चामरव्यजनेगृह्यहयारूढंप्रसर्पति ॥ ४८ ॥ ततोयुधिष्ठिरःप्रीतोविलोक्य
जननींहरेः ॥ नमस्कृत्यस्थितश्चाग्रेभृत्यवज्जनमेजय ॥ ४९ ॥ भीमोयुधिष्ठिरंवीक्ष्यगजाद्भूमौस्थितंगुरुं ॥ स्ववाहनात्स
मुत्तीर्यपपातनृपपादयोः ॥ ५० ॥ प्रद्युम्नप्रमुखैर्वीरैर्धर्मराजोनमस्कृतः ॥ अर्जुनाद्यैःपांडवैश्चदेवकीसानमस्कृता ॥ ५१ ॥
गृहीत्वावरवासांसियशोदादेवकीतथा ॥ सौबलेयींपृथांतत्रनमस्कृत्यकरेददौ ॥ ५२ ॥ प्रभावत्यान्वितादेवीपार्षती
कृष्णमातरं ॥ नमस्कृत्याखिलंतस्यैवस्तुजातंददौनृप ॥ ५३ ॥ स्त्रियःकृष्णस्ययाःसर्वारुक्मिणीप्रमुखाःशुभाः ॥ तस्थुः
कुंतींपुरस्कृत्यप्रणिपत्यदद्दुर्धनं ॥ ५४ ॥ रुक्मिणीप्रमुखास्तत्रद्रौपदींद्रष्टुमागताः ॥ चंदनंरत्नजातानिवासांसिविवि
धानिच ॥ ५५ ॥ प्रणम्यभामाप्रददौतथासर्वाश्चयोषितः ॥ प्रददुश्चाब्रवीत्सत्याद्रौपदींस्मितपूर्वकं ॥ ५६ ॥ सत्य
भामोवाच कथंत्वयाकृताःपंचवश्याभूमौनिरंतरं ॥ एकोनशक्यतेऽस्माभिर्वशीकर्तुंजगत्पतिः ॥ ५७ ॥ तमेवहि
त्वयामन्येगृहीतंद्रुपदात्मजे ॥ भगिनीभवतीतस्यत्त्वद्दयंतेकथंहरिः ॥ ५८ ॥ नमुंचतिक्षणमपितंविनात्वंनजीवसि ॥
अंतःस्थानेसंवृतानांपंचानामपिसन्निधौ ॥ ५९ ॥ कथंगृह्णासिगोविंदंतमुपायंहिमेवद ॥ ईदृशंकर्मकुर्वाणालज्जसे
नमहाजनात् ॥ ६० ॥ भयंनकुरुषेऽस्मत्तोमान्यसेधर्मकर्तृभिः ॥ द्रौपद्युवाच त्वदीयंमानसंसत्येसपत्नीमधि
गच्छति ॥ ६१ ॥ त्यक्त्वाकृष्णंत्रिलोकेशंज्यायसःकर्मणःफलं ॥ त्वयाऽपमानितःकृष्णःसमागत्यसमाश्रये ॥ ६२ ॥ द
र्शयत्येवसकलमात्मनोहृदिसंभवं ॥ लज्जामदीयाजगतिकृष्णेनैकेनरक्षिता ॥ ६३ ॥ दुर्योधनसभामध्येवस्त्रंदत्वाऽक्ष

यंमम ॥ त्वयानशक्यतेदातुंचैलंकार्पासकादिकं ॥ ६४॥ ममभ्रात्रात्वांप्रतार्यदत्तानिवसनानिमे॥बहूनांपश्यतांदेवि धर्मज्ञःसतथाविधः॥ ६५॥ नारदायत्वयादत्तोमाधवःपतिरात्मनः॥ पारिजातस्तुदेवानांमंडनंयत्पुराहृतं॥ ६६॥ देवद्विजगुरूणांहिवित्तंनैवात्रपंडिताः॥ प्रतिगृह्णंतिसुभगेत्वंगृहीत्वानलज्जसे ॥ ६७॥ नारदंचैवगर्हामिप्रतिगृह्यज नार्दनं॥ प्रदत्तवान्कथंमंदस्तवहस्तेजगत्पतिं॥ ६८॥ कृष्णादभ्यधिकंत्वत्तःकिंलब्धंतेनधीमता॥ ब्राह्मणानांमतिर्य स्मात्पश्चादुत्पद्यतेऽनघे॥ ६९॥ जैमिनिरुवाच एवंविधंब्रुवाणांतांद्रौपदींबाणनंदिनी॥नमस्कृत्यपृथांप्राप्ता नमस्कर्तुंविशांपते ॥ ७० ॥ प्रणिपत्यार्पयामासवासांसिमणिकांचनं॥ उपविष्टावीणकेतुसखीभिःपरिवारिता ॥ ७१ ॥ ततोऽब्रवीत्सत्यभामातुरंगंवीक्षयामहे॥ देवकीसहिताःसर्वाःकौतुकंममविद्यते॥ ७२ ॥ तच्छ्रुत्वाभाषितंत स्याःकृष्णोराजानमब्रवीत्॥ श्रीकृष्णउवाच तुरंगंद्रष्टुकामापिदेवकीवर्त्ततेनृप॥ ७३ ॥ युधिष्ठिरउवाच सर्वेतिष्ठंतुवैवीरारथस्थागजमस्तके॥ सादिनश्चभवंत्वत्रपत्तयःशस्त्रपाणयः॥ ७४॥ यथानारीगणश्चायंहयंपश्यति हर्षितः॥ धौम्यःपूजांकारयतुहृष्यंतुपरमाःस्त्रियः ॥ ७५ ॥ जैमिनिरुवाच सर्वाभिःपूजितश्चाश्वोवीराःसर्वेब लेस्थिताः॥ आरूढायोषितस्तत्रगवाक्षंवीणकस्यतु ॥ ७६ ॥ पश्यंतितुरगंतत्रनृत्यमानंमहीतले॥ तस्मिंश्चसमयेरा जाप्राप्तवाननुशाल्वकः॥७७॥ महतापरिवारेणश्रीमताजनमेजय॥ शाल्वस्यसंस्मरन्वैरंवीक्षमाणोजनार्दनं॥ ७८॥ धर्मराजपुरेदृष्ट्वाहर्षितोऽभूत्सभारत ॥ नृत्यंतंहयमालोक्यजग्राहप्रहसन्निव ॥ ७९ ॥ पृष्ठेसंस्थापयित्वातुगृध्रव्यूहम थाकरोत्॥ सुरथंसचिवंतत्रसमाहूयेदमब्रवीत्॥८०॥ अनुशाल्वउवाच भ्रातामेसौभमारूढःकृष्णेननिहतोज ले॥ शाल्वोनाममहाबाहुःसदेवोत्रविलोक्यते॥ ८१ ॥ सपुत्रपौत्रोयज्ञार्थंसदारःपांडवंप्रति ॥ निमंत्रितोहिसंप्राप्तो माऽद्यगच्छतुकेशवः ॥ ८२ ॥ गृध्रंविलोक्यगरुडःस्थिरःस्थास्यतिसंगरे ॥ इमांमदीयांसेनांहितथापालयमारिष॥ ॥ ८३ ॥ यथा गृद्धामिगोविंदंपार्थंचरथिनांवरं॥ भीमादयश्चयेवीराःप्रद्युम्नसहिताअमी॥ ८४॥ पालयंतिबलंसर्वंध र्मराजस्यपश्यतः॥ तस्मान्मदीयैःसंग्रामेसर्वैरपिनकेशवः॥८५॥ मोचनीयःप्रयत्नेनधारणीयःसबंधुहा॥ यस्यहस्ताद्र

णेकृष्णोगमिष्यतिविलोकितः ॥ ८६ ॥ तंदुष्टंपातयिष्येऽहंयःकृष्णधरणेऽक्षमः ॥ भ्राताबाऽस्तुसुतोवाऽस्तुसुहृन्मित्रं
चवासखा ॥ ८७ ॥ वासुदेवविहीनोयोनमेभ्रातासुहृत्सखा ॥ किंगजैःकिंरथैश्चैवपत्तिभिःकिंहयैरपि ॥ ८८ ॥ येचप
श्यंतिसंग्रामेनगृह्णंतिजनार्दनं ॥ कृत्वातुकुत्सितंकर्मराजवित्तापहारकं ॥ तत्सर्वंक्षमितंमेऽद्ययदितैर्ध्रियतेहरिः ॥ ८९ ॥
सर्वेतिष्ठंतियदिमेभृत्याहिनिखिलाःक्षमाः ॥ नापराधोध्रुवंतेषांयेकृष्णंसंमुखारणे ॥ ९० ॥ योधयंत्यरिभिःसार्धंतेषां
दास्यामहंवसु ॥ नापराधोध्रुवःकार्योमदीयैराजशासनात् ॥ ९१ ॥ भृत्यैस्तैःकृष्णविमुखैर्यथाभवतिमेप्रियं ॥ कुली
नाधर्मकुशलावीरायुद्धपरायणाः ॥ ९२ ॥ दत्वाऽत्मनस्तुसर्वस्वंस्थाप्यायुद्धेमहीभुजा ॥ तेजयंतिरणेशत्रून्राज्ञामिह
यशस्विनः ॥ ९३ ॥ नास्माकंकेशवादन्योविद्यतेसुखनाशनः ॥ तस्मादेकंहिबहवोधारयंतुरमापतिं ॥ ९४ ॥ नदोषश्चात्र
भविताधर्मएषसनातनः ॥ दाताऽयंयाचितानैवविमुखःसम्मुखःसदा ॥ ९५ ॥ शस्त्रपाणिरयंनित्यंसरथोऽपिविहंगमः ॥
अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽयंनिरंतरं ॥ ९६ ॥ कथमेकेनसंग्रामेसंधर्तुंशक्यतेहरिः ॥ कृष्णस्यग्रहणंवेत्तिह्युत्तान
चरणात्मजः ॥ ९७ ॥ सद्दूरेविद्यतेबालःपातालेबलिरेवच ॥ किंचिद्विभीषणोवेत्तिप्रह्लादःसम्यगेवहि ॥ ९८ ॥ ग्रहीतारं
नारदंतुवदंत्यन्येमृषावचः ॥ सत्यभामाऽपितंकृष्णंपरिजानेकरागतं ॥ ९९ ॥ संधर्तुमसमर्थोऽसौनारदोदत्तवान्यतः ॥
नान्यंतस्मादद्यपश्येसमर्थंहरिधारणे ॥ १०० ॥ स्वपौरुषेणगोविंदंधारयिष्येससैनिकं ॥ जैमिनिरुवाच एतावदु
क्त्वावचनंसराजासंस्थितोरणे ॥ १ ॥ गृध्रव्यूहेमहावीर्यःश्वेतच्छत्रोरराजह ॥ बबृंहिरेगजामत्ताहयाःपुष्टाजिहेषिरे ॥ २ ॥
रथाश्चक्रैःप्रणेदुश्चपदाताश्चडिडिंबिरे ॥ दृश्यंतेतस्यतेवीरानानालंकारमंडिताः ॥ ३ ॥ दिव्यांबरधराःसर्वेसंवर्त्तेभास्क
राइव ॥ क्वपार्थःक्वचगोविंदइतिजल्पंतिचेर्ष्यया ॥ रक्षंतस्तुरगंसर्वेपश्यंतःकृष्णवर्त्मच ॥ १०४ ॥ इत्याश्वमेधिकेप
र्वणिजैमिनीयेअनुशाल्वागमनंनामद्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ॥ छ ॥ जैमिनिरुवाच
नीतेहयेकिमभवत्कथंकृष्णेनमोचितः ॥ युद्धार्थंप्रेषिताःकेऽत्रतन्मेब्रूहितपोधन ॥ १ ॥ जैमिनिरुवाच शृणुराजें
द्रवक्ष्यामितदाकृष्णेनयत्कृतं ॥ पांडवानांहयंनीतंविलोक्यहृदिलज्जितः ॥ २ ॥ आरूढःस्वेरथेदिव्येदारुकेणनियंत्रिते ॥

पांचजन्यंपूरयित्वाधर्मराजमथाब्रवीत्॥ ३॥ श्रीकृष्णउवाच अनुशाल्वेनवीरेणतुरगस्तेऽधुनाहृतः ॥ पश्यतांय
दुवीराणांपांडवानांतथाऽग्रतः ॥ ४ ॥ स्त्रियश्चैवात्रपश्यंतिजातामेमहतीत्रपा ॥ भवान्रथस्थःसंग्रामेपश्यत्वत्रकुतूह
लं ॥ ५ ॥ सात्यकिःकृतवर्माचप्रद्युम्नतनयस्तथा ॥ यौवनाश्वोमेघवर्णोमाद्रीपुत्रौतथैवच ॥ ६ ॥ एतेचान्येचबहवस्तव
रक्षंतुमंडलं ॥ अहंवृकोदरःपार्थोप्रद्युम्नःसुजयस्तथा ॥ ७ ॥ वृषकेतुरयंबालःसांबोनिःशठएवच ॥ एतेपरेचतुरगंमोच
यामोमहाबलाः ॥ ८ ॥ कश्चित्करस्थितंवीरोगृह्णातुममवीटकं ॥ जैमिनिरुवाच पुनरेवाब्रवीद्वीरःशृण्वंतुबलि
नोनराः ॥ ९ ॥ समानयतियश्चाश्वंसहिगृह्णातुवीटकं ॥ तेसर्वेकृष्णवचनंश्रुत्वावीरास्तुदारुणं ॥ १० ॥ तस्थुर्विगतसंक
ल्पाश्चिंतयंतःपुनःपुनः ॥ मुहूर्त्तमात्रंकृष्णस्यस्थितःपाणौसवीटकः ॥ ११ ॥ ततःकृष्णसुतःश्रीमान्प्रद्युम्नोहस्तसंस्थितं ॥
जग्राहवीटकंतंतुवचनंचेदमब्रवीत् ॥ १२ ॥ प्रद्युम्नउवाच ॥ आनयिष्यामितुरगंशाल्वसैन्यगतंत्वहं ॥ इत्युक्त्वाप्र
ययौकार्ष्णिःसन्नद्धःस्वरथेनतं ॥ १३ ॥ अनुशाल्वंतृणीकृत्यतस्मिन्वीरसमागमे ॥ पारावतनिभैरश्वैर्मणिकांचनभू
षितैः ॥ १४ ॥ उह्यमानंरथंदिव्यंमीनकेतोःसुतस्यतं ॥ निरीक्ष्यभगवानेवंपुनरेवाब्रवीद्वचः ॥ १५ ॥ श्रीकृष्णउ
वाच ॥ द्वितीयश्चात्रगृह्णातुमत्कराद्वीटकंनरः ॥ प्रद्युम्नसहितोयातुपौरुषंयस्यविद्यते ॥ १६ ॥ जैमिनिरुवाच त
च्छ्रुत्वावासुदेवस्यवचनंवीक्ष्यवीटकं ॥ वृषकेतुरुवाचेदंतच्छृणुष्वविशांपते ॥ १७ ॥ वृषकेतुरुवाच अहमेनंसहा
यार्थंप्रद्युम्नंयामिसंयुगे ॥ अनुशाल्वंमहावीरंगृहीत्वाकृष्णसन्निधौ ॥ १८ ॥ नानयेयदिगोविंदप्रतिज्ञांश्शृणुमेप्रभो ॥
ब्राह्मणीगमनाच्छूद्रोलभतेदारुणांगतिं ॥ १९ ॥ प्राप्नुयांतामहंनूनंमहानरकदायिनीं ॥ श्राद्धभुक्ब्राह्मणोमंदोमैथु
नंकुरुतेयदि ॥ २० ॥ सयांगतिंयातिदेवप्राप्नुयांतामहंध्रुवं ॥ ऋतुकालेतथाभार्यांपरित्यजतिमंदधीः ॥ २१ ॥ तस्या
पिगतिमार्गंतंसोऽहंगच्छेन्नचानये ॥ त्यक्त्वाविष्णुंवासुदेवंयोभजेदन्यदैवतं ॥ २२ ॥ तस्यापियागतिःस्वामिन्सामे
स्याद्दुःखदायिनी ॥ दीयतांवीटकंमह्यंनानृतंममभाषितं ॥ २३ ॥ जैमिनिरुवाच ॥ तांबूलंकर्णपुत्रायमुदितः
प्रददौतदा ॥ प्रययौतंनमस्कृत्यवृषकेतुरुदारधीः ॥ २४ ॥ सहैवकार्ष्णिनायुद्धेदर्शयन्पौरुषंतदा ॥ प्रविश्यसैन्यंतद्घोर

मनुशाल्वेनपालितं ॥ २५॥ शंखंचपूरयामासनामविश्राव्यचात्मनः॥ ततोरणेकृष्णसुतंवृषकेतुसमन्वितं॥ २६॥ ति
ष्ठतिष्ठेतिभाषंतमिदंवचनमब्रवीत्॥ पातयंतंनिजंसैन्यंवीक्ष्यतस्मिन्महाहवे॥ २७॥ अनुशाल्वउवाच कथंभ
वान्संगरेऽस्मिन्त्यक्त्वारम्यांपुरींनिजां॥ प्राप्तोममसमीपेद्यमत्वाशत्रुंहिमांपुनः ॥ २८ ॥ त्वमनंगःपुष्पबाणस्त्रिनेत्र
नयनार्चिषा॥ कृष्णाङ्गदेप्रविष्टोऽसिदग्धःपूर्वंमयाश्रुतं ॥ २९॥ तपस्विनोयत्रसंतियत्रचैवपतिव्रताः ॥ विवेकरहिता
लोकाःपौरुषंतत्रतावकं॥ ३०॥ जैमिनिरुवाच तच्छ्रुत्वावचनंतस्यप्रद्युम्नःपंचभिःशरैः ॥ ताडयामाससह
सारणेशाल्वानुजंबली॥ ३१॥ अनुशाल्वोऽपितान्बाणान्मध्येचिच्छेदवेगतः॥ बाणेनैकेनतद्धृदयंबिभेदास्यत्वरन्निव
॥ ३२॥ सभिन्नहृदयःकार्ष्णिःकश्मलंचाविशन्महत्॥ भ्राम्यमाणःशरेणाजौपतितःकृष्णसन्निधौ ॥ ३३॥ मूर्छितं
वीक्ष्यकृष्णोऽपिप्रद्युम्नंलज्जितोहृदि॥ समुत्तीर्यरथाद्भूमौगृहीत्वानंदनंकरे ॥ ३४॥ ताडयित्वापदापुत्रमिदंवचनमब्र
वीत्॥ क्रोधेनमहतायुक्तोभर्त्सयामासभारत॥ ३५॥ श्रीकृष्णउवाच उत्तिष्ठोत्तिष्ठरेमूढनेयंद्वारवतीपुरी॥ य
त्रत्वयाक्रीड्यतेहिस्थानमेतत्सुदारुणं ॥ ३६॥ मयैतच्चिंतितंनित्यंप्रद्युम्नस्यप्रभावतः ॥ नभयंनत्रपाक्वापिभविष्यति
रणेमम॥ ३७॥ लज्जामयात्रसंप्राप्ताप्राप्तंचापिमहद्भयं ॥ त्वयापुत्रेणदुष्टेनवीराणामत्रपश्यतां ॥ ३८॥ किमर्थंर
क्षितश्चासिबालत्वेशंबरेणहि॥ त्वंदुरात्मन्पुरानीतोगृहान्ममनिशागमे ॥ ३९॥ वनंयाहिपुरींत्यक्त्वामुनिर्भूत्वाफला
न्यद॥ जनमध्येनवैवासस्तवयोग्योभविष्यति॥ ४०॥ निजंशत्रुंहिमुनयस्त्वांनिरीक्ष्यसमागतं ॥ कुशाग्रबुद्धयःसर्वे
करिष्यंतिचभस्मसात्॥ ४१॥ भवान्बाणपुरेयातुतत्रत्यायेमहाजनाः॥ भग्नंसंबंधिनंमत्वापालयिष्यंतिनापरे॥ ४२॥
शिवपूजापरालोकास्त्वांशत्रुंशंकरस्यहि॥ ज्ञात्वातेस्वामिनोवैरंघातयिष्यंतिमेमतिः ॥ ४३॥ गर्भेनगलितश्चासिरु
क्मिण्याजातएवकिं॥ अत्रप्रतिज्ञायामूढनकृताजीवसेकथं॥ ४४॥ करान्ममनगृह्णंतियत्रवीरामहाबलाः॥ पत्राणि
तत्रप्रथमंकथंगृह्णासितानिहि॥ ४५॥ जैमिनिरुवाच एवंवदंतंवसुदेवनंदनंजग्राहभीमोमतिमान्महाबलः॥
सुकोपितंकोपहराणितानिवैजगादभीमोवचनानिमारिष॥ ४६॥ भीमउवाच मैवंवदहृषीकेशप्रद्युम्नंमानि

नंप्रति ॥ नायंभग्नोभयाच्छत्रोर्बाणघातात्समागतः ॥ ४७ ॥ पदासंताडितोबालःक्रोधेनमहतात्वया ॥ पौरुषंहृदये
मत्वामिथ्यादत्तंनिजंपदं ॥ ४८ ॥ जरासंधभयात्कृष्णत्वयात्यक्तंनिजंपुरं ॥ सागरस्यैवतीरेहिपुरीद्वारवतीकृता ॥ ४९ ॥
परदुःखंनजानासिसर्वेषांसुखदोभवान् ॥ कस्मात्पलायसेकृष्णकस्त्वदन्योऽधिकःपुमान् ॥ ५० ॥ तच्छ्रुत्वाभीमसेन
स्यवचनंकेशवोब्रवीत् ॥ श्रीकृष्णउवाच भीमगच्छरणेयोद्धुमनुशाल्वंमहाबलं ॥ मयाऽस्यक्षामितंपश्यकर्ण
पुत्रस्यपौरुषं ॥ ५१ ॥ जैमिनिरुवाच ततोभीमोरणश्लाघीप्रद्युम्नसहितोययौ ॥ पातयामासतत्सैन्यंगदयाक्रो
धमूर्छितः ॥ ५२ ॥ पदातिरेवराजेंद्रविष्णुवाक्यैःप्रणोदितः ॥ गजाभिन्नाद्विधायुद्धेरथाश्वविदलीकृताः ॥ ५३ ॥ हया
हताश्चूर्णितांगानरारोषेणमर्दिताः ॥ गजंजग्राहहस्तेनचिक्षेपगगनेपुनः ॥ ५४ ॥ रथास्तुतुरगैःसार्धंवीराःसारथिभिः
सह ॥ गृहीत्वाभीमसेनेनजीवग्राहंविपोथिताः ॥ ५५ ॥ गजंरथंहयंभीमोगृहीत्वालीलयाकरे ॥ भूमौचिक्षेपरुषितोनि
ष्पिपेषपदापरान् ॥ ५६ ॥ विशीर्णगात्राबहवोमुखाच्छोणितमुद्वमन् ॥ बाहवःपतितारेजुःपंचास्याइवपन्नगाः ॥ ५७ ॥
भीमपादप्रहारेणभिद्यतांशिरसांरवः ॥ भिन्नानामिवभांडानांधरणीचलनेनहि ॥ ५८ ॥ श्रूयतेयादृशोराजन्तस्मि
न्वीरमहाक्षये ॥ ध्वजाःकणकणायंतेवातेनाभ्युत्थितेनहि ॥ ५९ ॥ गजानांरथिनांयुद्धेसादिनांपत्तिनांतथा ॥ मांस
मेकत्रभीमोऽसौपञ्चांसंघट्टयन्ययौ ॥ ६० ॥ तावन्निरीक्षितस्तेनकर्णपुत्रेणपांडवः ॥ अब्रवीद्भीमसेनंतंतोषयन्निव
भारत ॥ ६१ ॥ वृषकेतुरुवाच भीमसेनमहाबुद्धेबालकेनफलंयदि ॥ अनेनसंगृहीतंहिसंग्रामाख्यंपरंतप ॥ ६२ ॥
त्वदन्यःकःपितालौल्यात्स्वयंगृह्णातिबालकात् ॥ अनेनसंगृहीतेननतेतत्तन्निर्भविष्यति ॥ ६३ ॥ ईदृशानांसहस्राणिय
दिप्राप्तानिमारिष ॥ तवाग्रेऽल्पानिमन्येऽहंकिमेकंसंमुखेस्थितं ॥ ६४ ॥ अपकीर्त्तिश्चतेतातभविष्यतिधरातले ॥ पुत्र
हस्तात्फलंचैकंगृहीतंपांडवेनहि ॥ ६५ ॥ वदिष्यंतिजनाश्चैतत्तस्मात्त्याज्यंत्वयाऽधुना ॥ अल्पामिषंभीमसेननगृह्णा
तिचकेसरी ॥ ६६ ॥ क्षुधातुरोगजंहंतिनैवसर्पमुखेस्थितं ॥ महतांपौरुषंलोकेहितंभवतिदेहिनां ॥ ६७ ॥ जैमिनि
रुवाच ततोभीमोऽब्रवीद्वीरंवृषकेतुंमहाबलं ॥ फलंनिष्पीड्यबालस्यपित्राहस्तेप्रदीयते ॥ स्वयमेवरणेवीरयदिगृह्णा

तितत्फलं ॥ ६८ ॥ गृह्णातुयाम्यहंवीरमनुशाल्वंनराधिपं ॥ एतावदुक्त्वावचनमनुशाल्वंसमाययौ ॥ ६९ ॥ अनुशाल्व
स्तमायांतंबाणेनैकेनवक्षसि ॥ ताडयामासवेगेनमूर्छितोनिपपातसः ॥ ७० ॥ मूर्छितंभीममालोक्यकृष्णःकोपस
मन्वितः ॥ स्वयंयोद्धुंययौराजन्तदद्भुतमिवाभवत् ॥ ७१ ॥ दारुकेणरथोनीतःकृष्णस्यगरुडध्वजः ॥ अनुशाल्वस्त
तोवीक्ष्यगोविंदंगरुडध्वजं ॥ ७२ ॥ प्रत्युवाचमहाबाहुस्तिष्ठतिष्ठजनार्दन ॥ त्वयाममहतोबंधुःसौभंमध्येचपाटितं
॥ ७३ ॥ एतस्मिन्समयेपार्श्वेस्थितोऽहंनंदनंदन ॥ पश्यतस्तवगोविंदपुत्रकःपातितोमया ॥ ७४ ॥ द्वितीयःपांडवोभी
मश्चित्रमेतत्प्रदर्शितं ॥ अहंनसंमुखस्त्वांहियस्मान्मेपातितानराः ॥ ७५ ॥ पूर्वजाःकृष्णजानामित्वदीयौपातिताव
मौ ॥ ब्रूतेमहाजनःसर्वःपतनंनकथंचन ॥ ७६ ॥ जायतेसंमुखानांहिकृष्णस्यपुरतःसकृत् ॥ अहंयुवारणगतःपुराणपु
रुषोभवान् ॥ ७७ ॥ कथंस्थास्यसियुद्धेऽस्मिन्समत्वंनैवदृश्यते ॥ मद्बाणैःपंचभिर्भिन्नःक्कगमिष्यसिकेशव ॥ ७८ ॥
पलायितस्यदेवस्यस्थानंवेद्मिसतांमनः ॥ तदेवतावकंदुर्गमन्यैर्जेतुंनशक्यते ॥ ७९ ॥ लोभयंत्रादिभिर्घोरैःप्रपंचादि
पदातिभिः ॥ स्वसंगत्यादर्शयंतिलीनंत्वांहृदयेऽखिलं ॥ ८० ॥ तएवनित्यंगोविंदतवगुणप्रकाशकाः ॥ नतेषांसंगतिं
भूमौकुर्वंत्यत्रविमोहिताः ॥ ८१ ॥ सन्मंत्रवर्जितानूनंराजानस्तेनसंशयः ॥ जैमिनिरुवाच एतावदुक्त्वावचनं
विव्याधतुरगान्शरैः ॥ चतुर्भिस्तेहयाराजन्त्रस्ताभिन्नकलेवराः ॥ ८२ ॥ सदूरमगमद्युद्धात्तस्मिन्कालेविशांपते ॥ न
दृष्टःकेशवस्तेनपुनःप्राहानुशाल्वकः ॥ ८३ ॥ अनुशाल्वउवाच कस्माद्विलोकितःकृष्णोगतश्चादृश्यतांरणे ॥
दुष्कृतंस्वंनपश्यामिनेतरेषामिहाधुना ॥ ८४ ॥ किंवामदीयेराष्ट्रेहिशूद्रोवाब्राह्मणींगतः ॥ उतपित्राऽपिकन्यायाधनंस्वी
कृत्यमंडले ॥ ८५ ॥ मामकेकेनदुष्टेनदत्ताकंन्याधनेनच ॥ अथवारजसायुक्तादुहितानिजमंदिरे ॥ ८६ ॥ विनाविवा
हंविधृताजनकेनाल्पमेधसा ॥ किंवाकोशेमदीयेऽत्रपुत्रहीनस्यपातितं ॥ ८७ ॥ धनंमृतस्यदुर्वृत्तैर्मद्भृत्यैःपापकारि
भिः ॥ अथवाब्राह्मणानांस्वंस्वीकृतंकुत्सितैर्जनैः ॥ ८८ ॥ रजस्वलांप्रियांमूढादिवाकिंसंगतिंगताः ॥ सुस्नाताकैश्चस्वं
त्यक्त्वानिशामध्येतुकामिनी ॥ ८९ ॥ भ्रूणहत्याभवत्येवसकामानांधरातले ॥ षष्ठेनांशेनवैतेषामहंपापेनकेशवं ॥ ९० ॥

दृष्टमत्रनपश्यामिकंपृच्छामिरणेहरिं ॥ मामकंसुकृतंकिंचिद्विद्यतेयदितत्त्वतः ॥ ९१ ॥ तत्तस्मैसंप्रयच्छामियोमेदर्श
यतेहरिं ॥ किंपश्चात्तेनपुण्येनकार्ययेनक्षितौहरिः ॥ ९२ ॥ नदृश्यतेजगन्नाथःसर्वपापापनुत्तये ॥ जैमिनिरुवाच
हंसतीर्थोदकंपीत्वासर्वपापक्षयोभवेत् ॥ ९३ ॥ पूतोयथानरोराजन्हरिंवीक्ष्यतथाभवेत् ॥ एवंवदतिवीरेतुपुनःप्राप्तः
स्वयंहरिः ॥ ९४ ॥ अनुशाल्वंत्रिभिर्बाणैर्जघानसमरेहसन् ॥ बाणेनैकेनानुशाल्वस्तान्शरान्माधवस्यतु ॥ ९५ ॥ म
ध्येचिच्छेदतरसावचनंचेदमब्रवीत् ॥ अनुशाल्वउवाच पश्यमाधवमद्वीर्यंत्रिभिर्विरहितोभवान् ॥ ९६ ॥
मयाकृतोहिसंग्रामेत्वाशुगेनाशुपातिना ॥ मदीयमाशुगंचैकंनभवान्पातितुंक्षमः ॥ ९७ ॥ सहस्वत्वंशरंचैकंस्थिरो
भूत्वामहाहवे ॥ ततोमुमोचनाराचंवासुदेवस्यवक्षसि ॥ ९८ ॥ तेनचास्यप्रहारेणसंतुष्टइवमूर्छितः ॥ दारुकोवीक्ष्यगो
विंदंसंतुष्टंतस्यतेजसा ॥ ९९ ॥ रथंरणादपोवाहयत्रराजायुधिष्ठिरः ॥ हाहाकारोमहानासीत्कृष्णंवीक्ष्यतथाविधं ॥ १०० ॥
पलायितंबलंसर्वंपांडवानांचपश्यतां ॥ हतान्पुत्रान्पितृन्बंधून्सुहृत्संबंधिबांधवान् ॥ १ ॥ उत्सृज्योत्सृज्यगच्छंतिवदंत्येके
परस्परं ॥ पुत्रमांनयसंग्रामात्पिताहंपतितस्तव ॥ २ ॥ पुत्रःप्रोवाचपितरंपलायित्वाजवात्स्थितः ॥ तवश्राद्धंगया
शीर्षेकरिष्यामीतिनिर्गतः ॥ ३ ॥ तावदन्योजनःप्राप्तोभयाद्दैत्यानुशाल्वकात् ॥ ततःसदारुकोधीमान्माधवंवीणकेऽन
यत् ॥ ४ ॥ तंप्राप्तंमूर्छितंदृष्ट्वाहाहाकृत्वाप्रधाविताः ॥ कृष्णस्यनार्यःसकलारुक्मिणीप्रमुखाःकिल ॥ ५ ॥ सत्यभामा
हरिंवीक्ष्यप्रबुद्धंवाक्यमब्रवीत् ॥ सत्यभामोवाच समागतंरणात्पुत्रंप्रद्युम्नंरणकोविदं ॥ ६ ॥ उक्तवानसिरूक्षा
णिबहुदुःखकराणिच ॥ भवान्प्राप्तःकथंयुद्धादनुशाल्वभयार्दितः ॥ ७ ॥ पलायंतेजनाःसर्वेमृत्योर्भीताजगत्पते ॥ स्वयं
गच्छामिकिंनाथचंडीभूत्वामहाहवे ॥ ८ ॥ हंतुंतमनुशाल्वंहियस्माद्भीतःसमागतः ॥ नत्वांछिंदंतिशस्त्राणिनत्वांदहति
पावकः ॥ ९ ॥ कथंपलायितोऽसित्वंकृष्णदेवकिनंदन ॥ त्वयापादप्रहारेणपुत्रोवैताडितोभृशं ॥ वसुदेवस्तुदूरेवैय
स्त्वांताडयतेतथा ॥ १० ॥ यद्गतंगतमेवास्तुशेषंचिंतयकेशव ॥ यथायातिहयोराज्ञअनुशाल्वात्सुधीमतः ॥ ११ ॥ इ
त्याश्वमेधिकेपर्वणिजैमिनीयेसत्यभामावाक्यंनामत्रयोदशोऽध्यायः ॥ १३ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

जैमिनिरुवाच इतितस्यावचःश्रुत्वानिर्ययौभगवान्पुनः ॥ अनुशाल्वंरणेयोद्धुंतस्मिन्कालेजनाधिप ॥ १ ॥ तंवी
क्ष्यचरणेप्राप्तंवृषकेतुर्महाबलः ॥ अनुशाल्वंसमाहूयतिष्ठतिष्ठेतिचाब्रवीत् ॥ २ ॥ जघानसप्तभिर्बाणैर्दैत्यराजंहसन्नि
व ॥ अनुशाल्वोऽपिसंविद्धोदशभिःकर्णनंदनं ॥ ३ ॥ विव्याधहृदयेघोरैःसायकैर्निशितैस्तथा ॥ चतुर्भिस्तुरगानस्यपा
तयामासभूतले ॥ ४ ॥ सारथेश्चशिरःकायात्क्षितौक्षिप्रमपातयत् ॥ विरथंवृषकेतुंतंसमीक्ष्यरविसारथिः ॥ ५ ॥ योजयि
त्वारथंदिव्यंद्वितीयंसमुपागतः ॥ तस्मिन्रथेसमारुह्यपुनःकर्णसुतोबली ॥ ६ ॥ दैत्यराजंशरैस्तीक्ष्णैःसमंताद्व्यकिरद्र
णे ॥ सारथिंपातयित्वाऽस्यहयानपिमहाबलः ॥ जघानसमरेभूपलीलयाप्रहसन्निव ॥ ७ ॥ दैत्यनाथश्चतरसारथस्थंकर्ण
नंदनं ॥ समुत्थाप्यभुजाग्रेणभूमौचिक्षेपकोपतः ॥ ८ ॥ सोऽप्येनंसरथंक्रुद्धोभूमौचिक्षेपकोपतः ॥ गृहीत्वापुनरेवैनंनि
र्ययौकृष्णसन्निधौ ॥ ९ ॥ ददौकृष्णकरेदैत्यंवचःप्राहसुशोभनं ॥ वृषकेतुरुवाच एनंपश्यहृषीकेशतुरगग्रहणेक्ष
मं ॥ १० ॥ त्वत्प्रसादेनसंप्राप्तंप्रतिज्ञासफलाऽस्तुमे ॥ श्रीकृष्णउवाच धन्योसिकर्णपुत्रत्वंभाषितंसफलंकृतं ॥ ११ ॥
अनुशाल्वंकस्त्वदन्योरणादिहसमानयेत् ॥ एवंवदतिगोविंदेप्रबुद्धोदैत्यनायकः ॥ १२ ॥ यादवेंद्रंददर्शाग्रेघनश्यामं
जगत्पतिं ॥ उवाचवचनंवाग्मीकर्णपुत्रंमहामतिं ॥ १३ ॥ जितस्त्वयाऽहंवैवीरपातितःकृष्णपादयोः ॥ नपिताजननी
नैवनगुरुर्नचबांधवाः ॥ १४ ॥ नदेवास्त्वरितंदेवमनंतंदर्शयंतिच ॥ शत्रुणासत्वयाजित्वादर्शितोमधुसूदनः ॥ १५ ॥
येनमेबांधवाःसर्वेगमिताःपरमंपदं ॥ संगतिंतेनसंप्राप्यकृष्णेनममविस्मयः ॥ १६ ॥ जायतेकर्णपुत्राद्यसंतोषश्चशु
भावहः ॥ ययोर्वैरंतयोर्मैत्रीसंजातापौरुषेणते ॥ १७ ॥ प्रभूणांहिप्रभावेनसंगतासंगतंसमं ॥ दृश्यतेशंकरेवीरविषंचै
वामृतंसदा ॥ १८ ॥ दातारोदर्शयंत्येवजगन्नाथपदांबुजं ॥ त्वत्समोनास्तिदाताऽन्यःकाश्यपात्मजनंदन ॥ १९ ॥ वृ
षकेतुरुवाच भवान्कृष्णपदंप्राप्यब्रूतेहिममविस्मयः ॥ संजातःसांप्रतंवीरमूकत्वंयत्रयोगिनः ॥ २० ॥ गच्छंतिशे
षप्रमुखाविलोक्यमधुसूदनं ॥ तवभाषितमाकर्ण्यविस्मयोऽतीवजायते ॥ २१ ॥ अनुशाल्वउवाच वाक्प्रवृ
त्ताहरिंवीक्ष्यमदीयाकर्णनंदन ॥ ध्रुवस्येवामुनादत्तालोकास्तुहरिणाशुभाः ॥ २२ ॥ स्तौमिचात्रहृषीकेशंसमक्षंतव

मारिष ॥ मत्प्रहारेणसंत्यक्त्वाजगामरणमंडलं ॥ २३ ॥ यःपांडवस्यपुरतोविश्वस्तःकुशाखधृग्घरिः ॥ किंपीड्यतेऽस्यशस्त्रे
णविष्णोर्विश्वमयंवपुः ॥ २४ ॥ चतुर्भुजाश्चजायंतेस्मरणाद्यस्यमानवाः ॥ वैनतेयंसमारूढाःशंखचक्रगदाधराः ॥ २५ ॥
सस्वयंजायतेमत्स्यःकूर्मःकोलोनृकेसरी ॥ प्रसादाद्यस्यदेवेंद्रोविविधास्ताःसुरांगनाः ॥ २६ ॥ संप्राप्नोतिस्वयंप्राप्तः
कुब्जिकांगोपवेषधृक् ॥ पुष्णातिकृष्णोविश्वंयोनानारत्नचयेनहि ॥ २७ ॥ सभोक्ताद्रौपदीदत्तंशाकपत्रंनिशागमे ॥
सक्तून्सुदाम्नःस्वल्पांस्तान्संप्राश्यप्राप्तवान्मुदम् ॥ २८ ॥ नंदनादीनिदिव्यानिवनानिप्राप्नुवंतिते ॥ स्वयंहिकृष्णतुलसी
काननेरमतेहरिः ॥ २९ ॥ जैमिनिरुवाच एवंब्रुवंतंनृपतिंसमालिंग्यस्थितोहरिः ॥ गृहीत्वादक्षिणेहस्तेदर्शया
मासधर्मजं ॥ ३० ॥ ततोयुधिष्ठिरंराजानमस्कृत्यस्थितोऽग्रतः ॥ उवाचधर्मराजस्तंसांत्वपूर्वमिदंवचः ॥ ३१ ॥ भीमा
दीनांपंचमस्त्वंबांधवोऽसिममाधुना ॥ यज्ञंपालयमेनित्यंयथाकृष्णेनपाल्यते ॥ ३२ ॥ अनुशाल्वस्ततःसर्वान्भीमसे
नमुखांस्ततः ॥ समालिंग्याब्रवीद्वाक्यंधर्मराजंमहामतिं ॥ ३३ ॥ अनुशाल्वउवाच अहंबाहूशिरश्चैवस्वकीयं
रणमंडले ॥ युधिष्ठिरार्थंकालेनयत्रतत्रप्रपातये ॥ ३४ ॥ एतावदुक्त्वावचनंविरराम सपार्थिवः ॥ ततोविजित्यसर्वांस्ता
न्पार्थिवान्कर्णनंदनः ॥ ३५ ॥ आनयामासतुरगंयत्रराजायुधिष्ठिरः ॥ दृष्टोयुधिष्ठिरःप्राहधन्यस्त्वंकर्णनंदन ॥ ३६ ॥
प्रतिज्ञासफलावीरतवजाताममाग्रतः ॥ अनुशाल्वोऽपिबंधुत्वंगमितःपुण्यसंग्रहात् ॥ ३७ ॥ दिष्ट्यासर्वंसुखाकारंसं
जातंकार्यमद्यमे ॥ युवांकुशलिनौप्राप्तौप्रियौमेकृष्णकर्णजौ ॥ ३८ ॥ एवंप्रशस्यतौवीरौमुदितोधर्मनंदनः ॥ पुरस्कृत्य
हयंवीरैःप्रविवेशगजाह्वयं ॥ ३९ ॥ उपविष्टःसभामध्येसहकृष्णेनसद्द्विजैः ॥ देवकीचयशोदाचकुंतीचैवाथरोहिणी
॥ ४० ॥ रुक्मिणीसत्यभामाचतथैवान्याश्चयोषितः ॥ अरुंधतीचानुसूयापूजयंत्यस्तथाशुभाः ॥ ४१ ॥ परस्परंभाव
यंतिराजानस्तेसमागताः ॥ भोज्यैश्चविविधैःपेयैश्चंदनागुरुधूपितैः ॥ ४२ ॥ वासोभिर्मृदुभिश्चैवरांकवैर्भावसंयुताः ॥
वराश्वगजदानैश्चयज्ञारंभेचमारिष ॥ ४३ ॥ समागतेहृषीकेशेदिनानांविंशतिर्गता ॥ चैत्रीप्राप्तापौर्णमासीदीक्षि
तोऽभूद्युधिष्ठिरः ॥ ४४ ॥ द्रौपदीसहितोरौद्रमसिपत्रव्रतंचरन् ॥ संस्थाप्यतुरगंतत्रपूजयित्वायथाविधि ॥ ४५ ॥ ब्राह्म

णान्वेदसंपन्नान्वित्तेनमहतानृपः॥ गीतवादित्रनादेनब्रह्मघोषैःसुमंगलैः ॥ ४६ ॥ हयंसपत्रंयज्ञार्थेकुंकुमेनाभिचर्चि
तं॥ चंदनेनापिमालाभिर्वरधूपैश्चधूपितं ॥ ४७॥ मुमोचधर्मराजोऽसौतुरंगंबद्धचामरं॥ पालनार्थंहयस्याथप्रेषयामा
सफाल्गुनं ॥ ४८ ॥ सुस्नातंशुभ्रवसनंदूर्वाचंपकनिर्मितां ॥ मालांकंठेप्रोथयित्वादधानंचकिरीटकं ॥ ४९ ॥ गांडीव
हस्तंसोत्साहंछत्रचामरशोभितं ॥ पांडवंप्राहराजासौपार्थपालयवाजिनं ॥ ५० ॥ वासुदेवप्रसादेननिर्विघ्नंतेऽस्तुपां
डव ॥ शिवास्तेसंतुपंथानोजयंप्राप्नुहिभारत ॥ ५१ ॥ कुशलीपुनरागच्छससहायपरिच्छदः ॥ अनाथान्दीनवदना
न्सहृत्तांश्चतथैवच ॥ ५२ ॥ कृतांजलीन्सशरणान्तवास्मीतिचवादिनः ॥ पितृहीनान्बालकान्मारणेपातयमारिष
॥५३॥ततोधनंजयःश्रुत्वाभ्रातुर्ज्येष्ठस्यभाषितं॥नमस्कृत्यचतंप्रायात्कुंतींप्रष्टुंचदेवकीं॥५४॥ प्रणम्यकुंतींतांदेवींदेव
कींकृष्णमातरं॥ अरुंधतींचानुसूयांतथातांरुक्मिणीमपि॥ ५५॥ गांधारींधृतराष्ट्रंचप्रत्युवाचव्रजाम्यहं ॥ भ्रात्रादि
ष्टोरक्षणार्थंहयस्येतिप्रहर्षितः॥ ५६॥ ततोऽर्जुनंपरिष्वज्यकुंतीवचनमब्रवीत् ॥ धर्मराजनिमित्तंहियद्यासिधनंज
य॥ ५७॥ केसहायाश्चतेदत्ताःसैन्यंचविविधंकियत् ॥ दत्तंयुधिष्ठिरेणाद्यतन्मेब्रूहिपरंतप॥ ५८॥ अर्जुनउवाच
कृष्णेननोदितःकार्ष्णिःस्वपुत्रस्तद्बलंस्वकं ॥ समर्पयित्वाप्रोक्तोयोरुक्मिणीनंदनःस्वयं ॥ ५९ ॥ रक्षार्थंपुत्रगच्छत्वम
मादेशाच्चसांप्रतं॥ धनंजयस्यरक्षार्थंममप्राणोहिपांडवः॥ ६० ॥ रक्षितुंतुरगंचैवसम्यक्पालयमांयथा ॥ पित्रास्व
कोयंसर्वस्वंपुत्रहस्तेप्रदीयते॥६१॥ सद्वृत्तोरक्षतेवीरअसद्वृत्तोनपालयेत्॥ तथाकर्णसुतंप्राहदेवकीनंदनोहरिः॥६२॥
सर्वस्वंपुत्रकंसैन्यंतुरगंवृषभध्वज ॥ महासैन्यगतंपाहिमयादिष्टोऽसिभारत ॥ ६३ ॥ अनुशाल्वंसुबलिनंयौवनाश्वं
सपुत्रकं॥ मत्सहायार्थमादिश्यततोऽहंप्रेषितःपृथे॥ ६४॥ त्वयाचिंतानमेकार्याप्रसन्नःकेशवःप्रभुः॥ कुंत्युवाच
वृषकेतुस्त्वयापाल्यःसर्वयुद्धेषुभारत॥ कृतुस्तेसर्वथाशोच्यःसमागच्छेच्चतंविना ॥ ६५॥ लब्ध्वाजयंसमायाहिपाल
यित्वातुरंगमं॥ हरिणामार्यतेजंतुर्हरिणारक्ष्यतेपुनः ॥ ६६ ॥ सर्वदातंहरिंपार्थस्मरञ्जयमवाप्स्यसि ॥ इत्युक्त्वापुत्रकं
कुंतीसाबाष्पंप्रमुमोचह ॥६७॥ ततःपार्थोहरिंवीक्ष्यनमस्कृत्यपुनःपुनः॥ आरुरोहरथंदिव्यंप्रययौसैन्यसंवृतः॥६८॥

नानावादित्रनादेनहोमधूमेनधूपितः॥ रथारूढःकुमारीणांलाजैर्माल्यैःकरच्युतैः ॥ ६९ ॥ संछन्नांगोजयाशीर्भिःपौ
राणांचारुवीक्षितैः॥ मध्याह्नसमयेकृष्णस्तंमुमोचतुरंगमं ॥ ७० ॥ हयोगतोदक्षिणाशांप्रेरितःकृष्णवीक्षणैः॥ वृष
केतुर्जनान्वृद्धान्प्रणम्यस्वगृहंगतः॥ ७१ ॥ एकःपत्नींतदाप्रष्टुंवीक्ष्यवाक्यमुवाचतां॥ वृषकेतुरुवाच एषगच्छा
मिसुभगेपांडवेनान्वितःपुरात् ॥ ७२ ॥ एताःकुंतीमुखानार्यःसेवनीयाःप्रयत्नतः ॥ श्वश्रूणांचैववृद्धानांसेवनात्परमं
फलं॥ ७३॥ सतांसंपूजनादेवलभंतेपरमंस्त्रियः॥ स्मर्त्तव्यावयमप्यत्रभवत्याकिलभामिनि ॥ यस्मात्स्त्रीणांपरोधर्मो
भर्तुःस्मरणमेवच॥ ७४॥ भद्रावत्युवाच मदीयंमानसंत्यक्त्वात्वांकदाचिन्नगच्छति॥ त्वदीयंमानसंत्यक्त्वामां
चेद्गच्छतिगच्छतु॥ ७५॥ त्वंयथावदसेनाथतत्करोमिनचान्यथा॥ स्त्रीणांभर्त्तापरोदेवइतिशास्त्रविनिर्णयः ॥ ७६ ॥
अर्जुनस्यहयोनाथरक्षणीयःप्रयत्नतः ॥ युद्धंहिसंमुखंकार्यंविमुखंनकदाचन ॥ ७७॥ संतिकृष्णस्यनार्यस्तुमंडलेऽ
स्मिन्सुकोविदाः॥ स्मिताननाभविष्यंतिमांविलोक्यतवप्रियां॥ ७८॥ श्रुत्वाभवंतंविमुखंकुत्रापिसुमहद्रणात् ॥ क
यातच्छक्यतेहास्यंश्रोतुंस्त्रीमुखसंभवं ॥ ७९॥ एतासांप्राणनाथोहिविमुखोऽपिहिसंमुखः॥ एतत्संचिंत्यसकलंगम्य
तांकार्यसिद्धये॥ ८० ॥ जैमिनिरुवाच ततःप्रियांकर्णसुतःप्रत्युवाचस्मयन्निव ॥ त्रैलोक्यमपिसंप्राप्तंसंग्रा
मेममसंमुखं॥ ८१ ॥ पांडवार्थेमयाभीरुश्रोष्यसेविदलीकृतं ॥ यदिकर्णसुतश्चायंविमुखोजायतेरणात् ॥ ८२ ॥ वा
सुदेवस्यमाहात्म्यंविफलंसफलंतदा॥ काश्यांहिमरणान्मोक्षोगयायांपिंडदानतः ॥ ८३॥ विपरीतमिदंभाव्यंमाघेवे
णीनिमज्जनात् ॥ प्रियेऽहंयदिसंग्रामेभविष्यामिपराङ्मुखः॥ ८४॥ बिंबाधरंतेवदनंनपश्यामिपुनस्त्वहं ॥ एतावदु
क्त्वावचनंप्रययौबहुभिर्वृतः॥ ८५ ॥ ब्राह्मणांश्चगवांयूथंहोमद्रव्यंचयाज्ञिकं ॥ पुरस्कृत्यतदाराजन्वृषकेतुर्महाबलः
॥ ८६ ॥ कृष्णभीमादयःसर्वेप्रविष्टास्तेगजाह्वयं ॥ अर्जुनस्यहयोराजन्पुरींमाहिष्मतींययौ ॥ ८७॥ नीलध्वजेनवी
रेणरक्षितांदुर्गमंडितां॥ नानाजनपदाकीर्णांनित्योत्सवविलासिनीं ॥ ८८॥ नर्मदाजलपानेनलिंगाकारांहिभारत॥
मदनःकिंशिवाद्भीतःप्रविष्टस्तांविभातिमे॥ ८९ ॥ नराणामपिनारीणांवेषैर्दिव्यैर्मनोरमां ॥ नीलध्वजस्यपुत्रोऽपिर

ममाणस्तुकानने ॥ ९० ॥ स्त्रीसहस्रेणसहितःपुष्पितासुलतासुच ॥ प्रवीरश्चंपकस्याधःस्थितस्तत्रवरासने ॥ ९१ ॥ से
व्यमानस्तुनारीभिर्गौरीभिर्जनमेजय ॥ श्यामाभिर्वरवर्णाभिर्विशालनयनःप्रभुः ॥ ९२ ॥ उवाचवचनंवीरस्तदामद
नमंजरीं ॥ भूषितांरत्नमालाभिर्विचित्राभिर्विशेषतः ॥ ९३ ॥ गृह्णंतुनार्यःसकलालताभ्यःसुमनांसिहि ॥ ततस्तास्त
द्वचःश्रुत्वारणद्वलयभूषिताः ॥ ९४ ॥ सुस्मितास्तानिमाल्यानिजगृहुःकृपयान्विताः ॥ सहिताःप्राणनाथेनगायंत्यःसु
स्वरंमुदा ॥ ९५ ॥ ततःप्रवीरमहिषीवनमध्येतुरंगमं ॥ ददर्शस्वेच्छयाप्राप्तंस्थितंमदनमंजरी ॥ ९६ ॥ भूषितंरत्नमाला
भिर्बद्धपत्रंसुचर्चितं ॥ नारीणांकुंकुमकरैर्माल्यैश्चविविधैरपि ॥ ९७ ॥ अर्जुनस्यहयंवीक्ष्यप्रवीरंवाक्यमब्रवीत् ॥
मदनमंजर्युवाच गोक्षीरवर्णंतुरगंनाथपश्यसमागतं ॥ ९८ ॥ ताम्राधरंरक्तशफंपीतपुच्छंसुकंधरं ॥ कृष्णकर्णंकृष्णने
त्रंमुक्तंकस्यकरादमुं ॥ ९९ ॥ भालेपत्रंसुलिखितंबद्धंवाचयमारिष ॥ नाथधारयमद्वाक्यात्तुरंगंकुरुमेप्रियं ॥ १०० ॥
जैमिनिरुवाच ततःप्रवीरस्तंवीक्ष्यप्रियावाक्येननोदितः ॥ हयंजग्राहकेशेषुमाल्यवत्सुसहर्षितः ॥ १ ॥ वाचयामा
सतत्पत्रंधर्मराजेनयत्कृतं ॥ युधिष्ठिरस्यतुगरंयज्ञार्थेकिलमोचितं ॥ २ ॥ रक्ष्यमाणंतुपार्थेनगृह्णंतुस्वबलान्नृपाः ॥ इति
ज्ञात्वाप्रवीरोथप्रेरयामासतंहयं ॥ ३ ॥ स्त्रियःसर्वाःपुरींधैर्यात्स्थितोयुद्धेस्वयंतदा ॥ सैन्येनमहतातत्रतृणीकृत्यधनं
जयं ॥ ४ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेमाहिष्मतीप्रवेशेतुरगग्रहणंनामचतुर्दशोऽध्यायः ॥ १४ ॥ ॥ छ ॥
जैमिनिरुवाच ततःपार्थस्तुसंप्राप्तोवीक्षमाणस्तुरंगमं ॥ अनुशाल्वेनसहितोरुक्मिणीनंदनेनच ॥ १ ॥ यौवनाश्वेनरा
जेंद्रकर्णपुत्रेणधीमता ॥ सर्वेषामग्रतःप्राप्तोवृषकेतुर्महाबलः ॥ २ ॥ ददर्शाग्रेप्रवीरंहिस्वसैन्यंव्यूहसंस्थितं ॥ तिष्ठतिष्ठे
तिभाषंतंगृहीत्वावरकार्मुकं ॥ ३ ॥ नीलध्वजस्यपुत्रेणप्रवीरेणमहाहयः ॥ पुरींप्रवेशितःकोपान्मोचयत्वद्यपांडवः ॥
॥ ४ ॥ प्रवीरंतत्रप्रोवाचकर्णपुत्रःसमागतः ॥ प्रथमंयोधयत्वंमांपश्चात्पार्थंधनंजयं ॥ ५ ॥ प्रवीरःपंचभिर्बाणैर्विव्याध
वृषभध्वजं ॥ चतुर्भिश्चतुरोवाहान्बाणेनैकेनसारथिं ॥ ६ ॥ सप्तभिःकर्णपुत्रस्तंनिजघानहसन्निव ॥ शुकपिच्छनिभान

* अज्ञातेरजसिश्यामासंप्राप्तेवरवर्णिनी ॥ अप्रसूताभवेद्गौरीप्रसूताचैकदैवसा ॥ १ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

स्यहयान्निन्येयमक्षयं॥ ७॥ चतुर्भिःसायकैःकोपात्सिंहनादमथाकरोत्॥ प्रवीरःकर्णिनाकर्णेकर्णपुत्रमताडयत्॥
॥ ८॥ तेनबाणेनमूर्च्छांहिवृषकेतूरणेययौ॥ बाणेनैकेनानुशाल्वस्तेनविद्धःप्रतापिना॥ ९॥ अनुशाल्वशरैर्घोरैःप्रवीरो
नैवदृश्यते॥ ह्यहाकारोमहानासीत्तयोर्वीरसमागमे॥ १०॥ नीलध्वजोऽथसंप्राप्तःपावकेनसमन्वितः॥ अक्षौहिणीभि
स्तिसृभिर्वेष्टितःसंगरंप्रति॥ ११॥ मोचयामासतंपुत्रमनुशाल्ववशंगतं॥ ससर्वान्परिविव्याधदशभिर्दशभिःशरैः॥
॥ १२॥ जैमिनिरुवाच नीलध्वजोजघानाशुतदद्भुतमिवाभवत्॥ तेनविद्धंबलंवीक्ष्यसव्यसाचीरुषान्वितः॥
नीलध्वजंसमासाद्यतिष्ठतिष्ठेतिचाब्रवीत्॥ १३॥ जघानपंचभिर्बाणैरणेमाहिष्मतीपतिं॥ सोऽप्यर्जुनस्यतान्बाणांश्चि
च्छेदतरसाहसन्॥ १४॥ छिन्नान्शरान्स्वकान्दृष्ट्वापार्थश्चक्रेऽतिपौरुषं॥ सरथंसध्वजंसाश्वंससूतंसबलंरणे॥ १५॥
अदृश्यंबाणसाहस्रैर्नीलकेतुंतदाकरोत्॥यमदूतंशुभैस्तोत्रैर्विष्णोरिवभयंकरं॥ १६॥करोतिवैष्णवःकोपान्मूर्छितंमदग
र्वितं॥ ततोमूर्छांविहायाशुपुनरेवोत्थितस्तदा॥ १७॥ नामगर्जितमालोक्यजनंदूतगणोयथा॥ जामातरंपावकंहिसं
दधेकोपपूरितः॥ १८॥ नीलध्वजकरान्मुक्तःपावकोऽप्यदहच्चमूं॥ विशालैरर्चिभिर्दग्धाःपलायंतेमहाजनाः॥ १९॥
तुरगारथिनोराजन्पत्तयःशस्त्रवर्जिताः॥ करभाश्ववृषादग्धाभारंत्यक्त्वावनंगताः॥ २० वामीगणाश्वशकटाःपूरिताध
नसंचयैः॥ चामराणिचदह्यंतेछत्राणिकवचानिच॥ २१॥ मेदोधातुंसमासाद्यपुनरेवप्रदीप्यते॥ कृष्णवर्त्माक्षयेप्रा
प्तेभूतानांचयथाऽभवत्॥ २२॥ तथापार्थबलंसर्वंसमंताद्बुभुजेरणे॥ ततोऽर्जुनोरणश्लाघीवारुणास्त्रंसमादधे॥ २३॥
मुमुचेवह्निनाशायनशांतस्तेनपावकः॥ अर्जुनःप्रत्युवाचाथपावकंपरिदीपितं॥ २४॥ अर्जुनउवाच त्वमेव
सर्वदेवानांमुखंतुभ्यंनमोऽग्नये॥ त्वत्प्रीतयेवाजिमेधंप्रकरोतियुधिष्ठिरः॥ २५॥ त्वयादत्तंहिगांडीवंरथोदिव्यस्तथै
वच॥ परमंसौहृदंदिव्यंसर्वदाक्रियतेविभो॥ २६॥ बलंहतंहयोनीतस्त्वमतीवप्रदीप्यसे॥ किंकरोमिभवान्प्रीतिंपरि
त्यज्यप्रवर्त्तते॥ २७॥ जनमेजयउवाच कथंजामातरंवह्निंलब्धवान्समहीपतिः॥ काचकन्यापावकायदत्ताते
नमहात्मना॥ २८॥ एतत्सर्वंसमाचक्ष्वमयापृष्टोऽसिजैमिने॥ कौतुकंवर्त्ततेस्माकंश्रुत्वापार्थबलंहतं॥ २९॥ जै

मिनिरुवाच नीलध्वजस्यमहिषीज्वालानाम्नीसुमध्यमा॥ स्वाहांकन्यांप्रसूतासासुंदरींधर्मतत्परां॥ ३०॥ सर्वलक्ष
णसंपन्नांकुमारींलोकसुंदरीं ॥ वर्धमानांपितृगृहेसुंदरींबंधुपूजितां ॥ ३१ ॥ अतीवरूपसंपन्नांत्रैलोक्यस्यापिमोहि
नीं॥ नीलध्वजस्तुतांवीक्ष्यकालेनकियतासुतां॥ ३२॥ कस्मैप्रदेयाकन्येयमितिचिंतापरोऽभवत्॥ पप्रच्छतांचारुने
त्रांभर्त्ताकस्तवरोचते ॥ ३३ ॥ राजानोराजपुत्राश्चसंतिपुत्रिसहस्रशः ॥ पदृस्थान्पश्यवीरांस्तांस्ततोब्रूहिस्ववल्लभं
॥ ३४॥ स्वाहातंप्रत्युवाचाथपितरंलज्जितासती॥ स्वाहोवाच नमानुषंकामयेऽहंलोलुपंमोहवेष्टितं ॥ ३५ ॥ दे
ववर्यंवरंतातममयोग्यंविचिंतय॥ नीलध्वजउवाच देवराजंमहाबाहुंवरंवरयशोभने॥ ३६ ॥ आगमिष्यति
लोकेऽस्मिन्मानुषीकामुकःस्वयं॥ मत्तेगजेसमारूढःशक्रःसोऽनंतलोचनः॥ ३७॥ पितुर्वाक्यंसमाकर्ण्यस्वाहावचनम
ब्रवीत्॥ स्वाहोवाच इंद्रंनकामयेतातसर्वदोषस्यकारणं ॥ ३८॥ परोदयंनसहतेतपसादानकारितं॥ देवराजो
गौतमस्यप्रियांकामयतेयदि ॥ ३९॥ अनुजःकेशवोयेनकृतःकातंहिकामयेत् ॥ लघीयांसंजगन्नाथंविष्णुंचक्रेऽति
मोहितः॥ ४० पदंयस्मान्महत्प्राप्तंकृतघ्नःकिलवासवः॥ मानुषायेमयात्यक्तास्तत्रमेकारणंशृणु ॥ ४१ ॥ स्त्रीणांशरीरं
समलंप्रथमंतातजायते॥ एकंनरंपतिंप्राप्यद्वितीयंकुरुतेऽत्रया॥ सायातिनरकंघोरंशीलभंगान्मयाश्रुतं ॥ ४२॥ मृ
तेभर्त्तरिगात्रस्यस्पर्शंपश्चात्करोतियः॥ सपावकोदेवमुखंभर्त्तामेतातरोचते॥ ४३ ॥ नान्यंदेवंनासुरंवाकिन्नरंवाम
होरगं॥ वरयामिवरंलोकेविनातंहव्यवाहनं ॥ ४४ ॥ यद्यायातिस्वयंवह्निरर्थयिष्यतिमामिह ॥ तन्मांतातमहाबुद्धेत
स्मैत्वंदातुमर्हसि॥ ४५॥ जैमिनिरुवाच एवंविधंवचःश्रुत्वास्वाहाप्रोक्तंसुभाषितं॥ नीलध्वजस्तदाहृष्टोविस्मि
तोऽभून्महाबलः॥ ४६॥ प्रहसंत्यःस्त्रियोराजन्परुषंवाक्यमब्रुवन्॥ किमिदंभाषसेबालेविपरीतंनृपंप्रति ॥ ४७॥ व
ह्निवरंकथंब्रूषेदाहकंसर्वभक्षकं ॥ तथाहिकृष्णवर्त्मानंमेषवाहनमातुरं ॥ ४८ ॥ सप्तजिह्वंधूम्रमुखंहाकष्टंसंस्थितंत्वि
दं॥ स्त्रीणांचित्तंकुरूपेहियातिमंदजनेतथा॥ ४९ ॥ उच्चान्नीचंगतागंगापावनीयाजगत्त्रये ॥ स्वाहातेषांसमाकर्ण्यव
चनानित्वरान्विता ॥ ५० ॥ स्नातासाशुभ्रवसनास्थापयित्वाहुताशनं ॥ ब्राह्मणैःसहितानित्यंध्यायंत्युपवनेस्थिता

॥ ५१ ॥ अगुरुंचंदनंविप्राघृतंरम्यंचपायसं॥ शर्करामिक्षुखंडांश्चक्षौद्रंद्राक्षास्तथातिलान् ॥ ५२ ॥ कर्पूरंवरतांबूलं
लवंगंजातिजंफलं॥ रंभाफलानिजुहुवुस्तयावह्नौप्रणोदिताः॥ ५३॥ मुक्तामालांगृत्यबालारणद्वलयनूपुरा॥ सखीप
रिवृतास्वाहाशुश्रूषंतीहुताशनं ॥ ५४॥ ततःकालेनमहतानारदेनप्रबोधितः ॥ पावकोविप्ररूपेणप्राप्तोनीलध्वजंप्र
ति॥ ५५॥ विप्रंपूजितमेवादौदत्वाऽर्घस्वासनेस्थितं॥ पप्रच्छसादरंराजाकुतःप्राप्तोऽसिवैमुने ॥ ५६ ॥ आदेशोदी
यतांमत्यंकिमाज्ञप्तःकरोम्यहं॥ विप्रउवाच कन्यार्थिनंविद्धिराजन्विप्रंशांडिल्यगोत्रजं ॥५७॥ त्वद्गृहेविद्यते
बालामत्यंतांदेहिकन्यकां॥ राजोवाच नमानुषंवरयतेपावकेसस्पृहासुता॥ ५८ ॥अन्यांकन्यांप्रयच्छामिय
दितेरोचतेद्विज॥ विप्रउवाच मांविद्धिपावकंराजन्विप्रवेषेणसंस्थितं॥५९॥स्वाहासत्येनगुरुणासंतुष्टंकामपूरितं॥
जैमिनिरुवाच एतत्तस्यवचःश्रुत्वासस्मेरवदनोजनः॥६०॥प्रत्युवाचाथनृपतिंतत्रस्थंविस्मितोऽपिसन्॥कन्यानि
मित्तंविप्रोऽसौजायतेयदिपावकः॥६१॥विनापावकनाथेनस्वाहादेयानकस्यचित् ॥सचिवःकिंनजानातिविप्रंसम्य
क्परीक्षितुं॥ ६२ ॥ प्रधानउवाच नजानीमोवयंसर्वेभवंतंपावकंस्थितं ॥ आत्मानंदर्शयविभोरम्यंपावकरू
पिणं॥ ६३॥ ततोविप्रमुखादग्निर्ज्वालामालीविनिर्गतः॥ कूर्चंहिसचिवस्यापिददाहकुपितस्तदा ॥ ६३ ॥ प्रधानेद
ह्यमानेचसर्वेलोकाश्चकंपिरे॥ राजातंशमयामासवह्निसूक्तेनतत्क्षणात्॥ ६५॥ एतस्मिन्नंतरेराजन्विनोदःसुमहा
नभूत्॥ मातृष्वसाथकन्यायाराजानंवाक्यमब्रवीत्॥ ६६ नदातव्यात्वयाकन्याब्राह्मणायकथंचन ॥ इंद्रजालिकव
द्वह्निंदर्शयत्येवभूसुरः॥ ६७॥ राजातांप्रत्युवाचाथशालिकांप्रहसन्निव॥ स्वगृहंनयभद्रंतेममजामातरंशुभे ॥ ६८ ॥
परीक्षयविशालाक्षिविप्रोवापावकोऽपिवा॥ ततोगृहंगतादेवीब्राह्मणेनसमन्विता ॥ ६९ ॥ प्रत्युवाचपरीक्षांमेदेहि
विप्रसनातनीं॥ अग्निर्ददाहकुपितोमंदिरंवरचित्रितं॥ ७० ॥ तस्याश्चगोपुरंरम्यंवासोरत्नविचित्रितं ॥ तिष्ठतिष्ठेति
वचनंजगादचधनंजयः ॥ ७१ ॥ प्रच्छादनंचतस्याश्चपट्टवस्त्रंसुशोभनं ॥ दह्यमानंपरित्यज्यनग्नासाप्राद्रवद्भृशं
॥ ७२॥ कोलाहलश्चतत्रैवसंजातोहिनरेश्वर॥ दुद्रुवुश्चजनाःसर्वेतत्रवह्निभयार्दिताः ॥ ७३ ॥ साप्राप्ताराजभवनंरु

दंतीसुस्वरंतदा ॥ नृपवारयतंवह्निंज्वालयंतंगृहान्मम ॥ ७४ ॥ राजोवाच परीक्षितस्त्वयाभद्रेकालेनाल्पेनपाव
कः ॥ क्षणंप्रतीक्षविप्रस्यपरीक्षालभ्यतेयथा ॥ ७५ ॥ शालिकोवाच त्वयासाधुकृतंराजन्जामातातवतिष्ठतु ॥
एतस्मिन्नंतरेराजासमाहूयविभावसुं ॥ ७६ ॥ समयंवह्निनाचक्रेनगंतव्यंहिमत्पुरात् ॥ ततःकन्यांप्रदास्यामियदितेरो
चतेविभो ॥ ७७ ॥ आगमिष्यंतियेराष्ट्रेमदीयेतेत्वयारणे ॥ दाहनीयाःशत्रवस्तुमयाज्ञप्तेनपावक ॥ ७८ ॥ ततःप्रधानो
नृपतिंप्राहकिंक्रियतेत्वया ॥ गृहेजामातरंवह्निंसर्वदापरिरक्षसि ॥ ७९ ॥ स्वाहांगृहीत्वाव्रजतुयथास्थानंनराधिप ॥ प्र
धानवचनंश्रुत्वाराजावचनमब्रवीत् ॥ ८० ॥ यावन्नगृहजामाताजायतेममपावकः ॥ तावदेवमहत्तेजोदृश्यतेऽस्य
नसंशयः ॥ ८१ ॥ जामातरिगृहेजातेक्षीणतेजाभविष्यति ॥ तथाऽपिपुररक्षार्थंसंश्रयामिधनंजयं ॥ ८२ ॥ प्रदत्ताऽ
स्मैमयाकन्यास्वाहासचिवसांप्रतं ॥ जैमिनिरुवाच ततोददौनिजांकन्यांसुलग्नेसोग्नयेतदा ॥ ८३ ॥ जाते
पाणिग्रहेवह्निःस्थितोराजगृहेसुखं ॥ तंवह्निंसंदधेराजास्वजामातरमाहवे ॥ ८४ ॥ कारणंकथितंसर्वंयत्पृष्टोऽहंजना
धिप ॥ जनमेजयमहाबुद्धेशृणुचाग्रेकथानकं ॥ ८५ ॥ अर्जुनस्यवचःश्रुत्वापुनर्वह्निःप्रदीपितः ॥ चिंतयामासपार्थो
ऽपितथानारायणास्त्रकं ॥ ८६ ॥ ततोनारायणास्त्रंतत्संधितंवीक्ष्यपावकः ॥ शांतिंजगामपार्थस्यपुरतःस्थितवान
सौ ॥ ८७ ॥ उवाचतत्रबीभत्सुंस्वकीयंकारणंचतत् ॥ दंडस्तुपातितःपार्थतवोपरिमयाऽधुना ॥ ८८ ॥ अश्वमेधेननृप
तिंकरोषियदिपावनं ॥ समीपेपुंडरीकाक्षेस्थितेतवधनंजय ॥ ८९ ॥ नयागोनैवदेवावामंत्रास्तेहरिणाविना ॥ समर्थाः
पावनंकर्त्तुंविश्वासस्तेनमाधवे ॥ ९० ॥ क्षीरार्णवंभवान्प्राप्यकिमजांदोग्धुमिच्छति ॥ परित्यज्योदितंसूर्यंखद्योतंकां
क्षतेकथं ॥ ९१ ॥ सखाऽसिममवीरत्वंनकृतघ्नोऽस्मितेऽर्जुन ॥ सैन्यंमयासमासाद्यत्वदीयंपातितंरणे ॥ ९२ ॥ नाराय
णास्त्रंप्रथमंसंधत्सेयदिपांडव ॥ नतेसैन्यंमयाग्रस्तंजायतेऽत्रकथंचन ॥ ९३ ॥ संसारतापहीनास्तेयेस्मरंतिजनार्दनं ॥
तस्मात्तवबलंसर्वंपुनस्तिष्ठतुदंशितं ॥ ९४ ॥ प्रयुज्यमांगतोराजास्वगृहंतन्निबोधये ॥ यथानयेत्सतुरगंसंबद्धंमंदुरोद
रे ॥ ९५ ॥ एतावदुक्त्वावचनंक्षमयित्वाधनंजयं ॥ नीलध्वजसमीपेऽग्निर्गत्वासंस्थितवानयं ॥ ९६ ॥ समागतंवीक्ष्य

हुताशनंतंप्रोवाचराजामदगर्वितोऽसौ ॥ दग्धंबलंतस्यधनंजयस्यत्वयाविभोसाधुकृतंरणेऽद्य ॥ ९७ ॥ नवेत्तिपार्थो ममबाहुवीर्यंबलात्तुरंगंकिमसौविनेता ॥ जामातरंचापिभवंतमीड्यंविजित्यवैयास्यतिमंदबुद्धिः ॥ ९८ ॥ जैमिनिरुवाच एवंनृपस्यवचनंनिशम्योर्जितमाहवात् ॥ प्रत्युवाचहसन्वह्निस्तंहर्षात्प्रत्यषेधयत् ॥ ९९ ॥ केनास्यशक्यतेसैन्यंदग्धुंचपरिपातितुं ॥ सर्वपापहरोदेवोयस्यचेतसितिष्ठति ॥ १०० ॥ उत्तिष्ठनरशार्दूलपरिशामयपांडवं ॥ दीयतामस्यतुरगोयथाभद्रंभवेत्तव ॥ १ ॥ कोऽहंधनंजयस्याग्रेहरिमित्रस्यधन्विनः ॥ खांडवंपूरितंबाणैर्यस्यवज्रपतेर्वनं ॥ २ ॥ गृहजामातृभावेनविस्मृतंसौहृदंमया ॥ जैमिनिरुवाच ततोनीलध्वजोराजामत्वातद्वचनंहितं ॥ ३ ॥ स्वांप्रियांप्राहतुरगोत्यर्जुनस्यार्प्यतेमया ॥ ज्वालोवाच किमर्थंदीयतेहंसःसतिसैन्येभयानके ॥ ४ ॥ पुत्राःपौत्राश्चसुहृदोविद्यंतेतवबांधवाः ॥ भवानृशूरतरोनित्यंवित्तंकोशेनमातिते ॥ ५ ॥ क्षत्रियोऽसिविशेषेणनित्यंनृणांनजीवितं ॥ अद्यवाऽब्दशतांतेवाम्तृत्युर्वैप्राणिनांध्रुवः ॥ ६ ॥ पराक्रमःप्रकर्त्तव्योनदेयोऽश्वःकथंचन ॥ प्रियावचनमाकर्ण्यत्यक्तबुद्धीरणेययौ ॥ ७ ॥ पुनःससैन्यकोत्कृष्टःकर्णहंतारमाहवे ॥ ततोऽर्जुनोनृपंवीक्ष्यकोपादश्रूण्यमोचयत् ॥ ८ ॥ जघानतीक्ष्णैर्नाराचैस्तस्यसैन्यमनेकधा ॥ बाणैःसंछादयामासतदद्भुतमिवाभवत् ॥ ९ ॥ पुत्रास्तस्यहतायुद्धेभ्रातरश्चमहाबलाः ॥ नृपस्यचरथोभग्नःसारथिश्चनिपातितः ॥ १० ॥ पार्थेनतरसायुद्धेस्मरतापूर्वकारितं ॥ नीलध्वजश्चपतितोमूर्छितःस्यंदनोपरि ॥ ११ ॥ सारथिस्तमपोवाहकश्मलेनावृतंरणात् ॥ ततोरात्रिःसमभवद्गृहंप्राप्तोनराधिपः ॥ १२ ॥ ज्वालांप्राहाथकुपितोभर्त्सयन्निवभारत ॥ नीलध्वजउवाच त्वयादुष्टामतिर्दत्ताययामेसुहृदोहताः ॥ १३ ॥ गच्छवातिष्ठदुष्टेत्वंप्रयच्छामितुरंगमं ॥ इत्युक्त्वावचनंराजागृहीत्वायज्ञवाजिनं ॥ १४ ॥ प्रधानेनान्वितःशीघ्रंरत्नान्यादायभूरिशः ॥ कांचनंस्त्रीसहस्रंचवस्त्राणिविविधानिच ॥ १५ ॥ प्रययौयत्रपार्थोऽसौनमस्कृत्यव्यवस्थितः ॥ पार्थंचक्षमयामासवचनंचेदमब्रवीत् ॥ १६ ॥ पार्थपार्थमहाबाहोकिंकरोमितवप्रियं ॥ अर्जुनस्तंप्रत्युवाचवीरस्त्वमसिभूपते ॥ हयंपालयवर्षेऽस्मिन्मामकंसहितोमया ॥ १७ ॥ जैमिनिरुवाच ततःपार्थस्यतुरगोनिर्गतोदक्षिणामुखः ॥

नीलध्वजेनसहितःपार्थःपश्चाज्जगामसः॥ १८ ॥ ज्वालाजगामकुपिताचोल्मुकस्यपुरंहिसा ॥ भ्रातुःपार्श्वेसमागत्य तस्मिन्देशेपटच्चरे ॥ रुदंतीतंनमस्कृत्यरोषादिदमभाषत॥ १९॥ ज्वालोवाच अर्जुनेनगृहंदग्धंमदीयंस्वेनतेज सा॥ भर्त्ताजितोहताःपुत्रादेवराभासुरंबलं॥ २०॥ विध्वस्तंचहयोनीतोराजाचाग्रेसरःकृतः ॥ तंचेत्पातयसेवीरमन्नि मित्तंधनंजयं॥ २१ ॥ तदात्वंमेसुहृद्भ्रातानान्यथाश्रुप्रमार्जनं॥ जैमिनिरुवाच उल्मुकोदूतवाक्येनज्ञात्वाज्वाला विचेष्टितं॥ २२॥ प्रत्युवाचाथभगिनींशमयन्निवभारत॥ अत्रतिष्ठपुरेभद्रेतावकंविद्धिमंडलं ॥ २३॥ कालेनकिय तामातःकरिष्येसुप्रियंतव॥ कुपिताप्राहराजानंकथमद्यनगच्छसि॥ २४ ॥ उल्मुकःकुपितस्तत्रज्वालांवचनमब्रवी त्॥ यथास्वकीयंभवनंनाशितंममतत्समं॥ २५॥ कर्तुमिच्छसिदुष्टेत्वंगच्छशीघ्रंगृहादितः॥ निर्गतातद्वचःश्रुत्वागंगा तीरेसमागता॥ २६॥ नौकांसमारुह्यतटेगच्छंतीवाक्यमब्रवीत्॥ ज्वालोवाच मदीयेवामचरणेलग्नंगंगाज लंत्विदं॥ २७॥ पातकंसांप्रतंजातमंबुस्पर्शान्नसंशयः॥ तच्छ्रुत्वाभाषितंतस्याःसमीपस्थाःसुकोपिताः ॥ २८॥ कि मिदंभाषसेदुष्टेनौकामाश्रित्यदारुणं ॥ सर्वपापक्षयकरंतोयंवेत्सिनमोहिता ॥ २९ ॥ यस्यांमज्जनमात्रेणमहापात किनोऽपिये ॥ विहायपापसंघातंविष्णुलोकंव्रजंतिते ॥ ३० ॥ गंगेतिनाममात्रेणननरोनारकीभवेत् ॥ ततोगंगाज लात्तस्मादाविरासीत्सुमंगला ॥ ३१ ॥ उवाचवचनंतांहिकिमिदंगदितंत्वया॥ ज्वालोवाच अपुत्रेशृणुमेवा क्यंत्वयापुत्राजलेहताः॥ ३२॥सप्तपूर्वंशांतनुनाप्रार्थितःकामजित्सुतः॥सपार्थेनहतोबाणैःपुरस्कृत्यशिखंडिनं॥३३॥ तस्मात्पुत्रविहीनायाजलमत्रप्रदूषितं॥ गंगाततोऽर्जुनंक्रुद्धाश्रुत्वातद्वचनंमहत् ॥ ३४ ॥ शशापषष्ठेमासेतंपतत्वांपा र्थमस्तकं॥ सादुष्टापतितावह्नौबाणोभूत्वाभयानकः ॥ ३५ ॥ बभ्रुवाहनतूणेहिविवेशार्जुनमृत्यवे ॥ ३६॥ इत्याश्व मेधिकेपर्वणिजैमिनीयेफाल्गुनशापोनामपंचदशोऽध्यायः ॥ १५ ॥ ॥ ७॥ ॥ ७॥ ॥ ७॥

जैमिनिरुवाच नीलध्वजस्यनगरादग्रतःप्रययौहयः॥हरिर्हरिपदालंबीहरिमुद्वीक्षयन्मुदा॥ १ ॥अनेकार्जुनसंबाधं सहदेवंधराभृतं॥ विवेशविंध्यंराजेंद्रसहयःपृष्ठतोऽर्जुनः॥ २॥सैन्यंपश्चाद्ययौवृक्षांश्चूर्णयन्नर्जुनस्यतु॥ विषमोऽपिस

मोमार्गः सैन्यागमनतोऽभवत् ॥ ३ ॥ वनस्थादेवतास्तत्रवनस्थंहरिसेवकं ॥ ददृशुर्वनराज्यस्ताअर्जुनंचहयंशुभं ॥ ४ ॥
ततोहयःशिलांदृष्ट्वामहतींयोजनायतीं ॥ स्वांगंघर्षितुमारेभेतस्यांद्रुपदिविस्मितः ॥ ५ ॥ पुराहरिःशिलामंघ्रिस्पर्शा
त्स्त्रीत्वमुपानयत् ॥ इतिमत्वाहरिर्मंदःपस्पर्शद्रुपदंतदा ॥ ६ ॥ वज्रलेपत्वमापन्नश्चलितुंनशशाकह ॥ नामसाधर्म्यतःके
पिगच्छंतिसमतांहरेः ॥ ७ ॥ आराधनादृतेऽप्येवंभवंतिजडदेहिनः ॥ जडीभूतंसमालोक्यतंहरिंहरिसेवकाः ॥ ८ ॥ साट्ट
हासंजगर्जुस्तेजहसुःकेऽपिसैनिकाः ॥ संघर्षणसुखाह्लीनःकिमश्वइतरेब्रुवन् ॥ ९ ॥ केऽपिगत्वाऽर्जुनस्यापिकथयंति
हयोम्तः ॥ शिलासंघट्टमासाद्यहयमेधोऽभवत्स्वयं ॥ १० ॥ तच्छ्रुत्वावचनंतेषामर्जुनःकृष्णतामगात् ॥ प्रद्युम्नसहित
स्तत्रहयंदृष्ट्वातथाविधम् ॥ ११ ॥ विसिस्मायततोवीरोमम्लेपंकजवन्निशि ॥ उवाचभीमावरजोमोच्यतांमोच्यता
मिति ॥ १२ ॥ प्रदुद्रुवुःकशाःस्थूलागृहीत्वाऽताडयन्बलात् ॥ मुष्टिभिर्जानुभिःक्रुद्धानराश्चार्जुननोदिताः ॥ १३ ॥ ॥ ना
श्वःपृथक्बभूवाथवैष्णवोविष्णुसेवनात् ॥ तदातेप्रेरिताश्चाराअर्जुनेनमहात्मना ॥ १४ ॥ प्रष्टुंकेयंशिलाकिंस्विदिति
तेत्वरितामुनीन् ॥ ददृशुश्चाश्रमंरम्यंहरित्पत्रद्रुमाकुलं ॥ १५ ॥ शालैस्तालैस्तमालैश्चकर्णिकारैःसुशोभनैः ॥ रसालैर्ब
कुलैश्चैवनारिकेरैःसकेसरैः ॥ १६ ॥ सरसीभिर्विचित्राभिरनेकाभिरलंकृतं ॥ निर्बाधाःपशवोयत्रव्याघ्रागोभिःसमा
कुलाः ॥ १७ ॥ मार्जारमुखदंष्ट्रासुकंडूयंत्याखवस्तनुं ॥ सर्पाःसर्पारिभिर्युक्तानवैरंयत्रकुर्वते ॥ १८ ॥ मत्स्यानलंमहामत्स्या
नवैभक्षंतिबालकान् ॥ उलूकाःकाकवृंदेनविक्रीडंत्यभयादिने ॥ १९ ॥ अन्येचपशवःक्रूराःसौम्यसत्वैःसमागताः ॥
क्रूपेस्तस्यप्रभावेणसौभरेर्विश्रुतौजसः ॥ २० ॥ तमाश्रमंसमालोक्यदृग्भिस्तंसौभरिंमुनिं ॥ अर्जुनायसमाचख्युश्चा
रास्तेहर्षनिर्भराः ॥ २१ ॥ जैमिनिरुवाच ततोऽर्जुनोमहाबाहुर्यौवनाश्वोवृषध्वजः ॥ सात्यकिःकृष्णपुत्रश्चपंचैते
तंमुनिंययुः ॥ २२ ॥ अद्राक्षुस्तेसौभरिंतंतपस्विनमुपस्थितं ॥ अध्यापयंतंशिष्यांश्चऋक्सामयजुषीसदा ॥ २३ ॥ वे
दांतादीनिशास्त्राणिपाठयंतमृषीन्बहून् ॥ अर्जुनस्तंनमस्कृत्यतान्मुनीनब्रवीद्वचः ॥ २४ ॥ अर्जुनउवाच तप
स्विन्धर्मराजस्यभ्राताऽहंहयमेधिकं ॥ हरिंरक्षन्समायातःसोऽश्वोद्रुपदितस्थिवान् ॥ २५ ॥ अस्माभिर्निहताःशूराबां

धवाःकुरवोरणे ॥ तत्पापनाशनार्थंहिमखआरब्धएषनः ॥ २६ ॥ तस्मादपिवयंपापान्मुच्यामोद्दषदोहयः ॥ तमुपायंवद
विभोसौभरेऽस्याश्वकारणं ॥ २७ ॥ जैमिनिरुवाच ततोमुनिःसौभरिरस्यवाक्यंश्रुत्वाजहासाखिलशास्त्रकर्त्ता ॥
शृण्मोऽर्जुनंकृष्णमुखेनगीतांवाचंसभग्नांत्वद्दिधारयंतं ॥ २८ ॥ निशम्यतांबंधुजनामयातेहताइतिव्यर्थमवीवद
स्त्वं ॥ वृथाऽश्वमेधश्रमएषवोऽयंसाक्षाद्धरिस्तिष्ठतितन्नवेत्सि ॥ २९ ॥ वृथाभ्रमोवरीवर्त्तिकुरवोयुधिपातिताः ॥ केन
कोहन्यतेहंताकस्यहिंस्योऽपिकस्यकः ॥ ३० ॥ इतियोवक्तिवक्ताकोयस्मादेतत्तमाश्रये ॥ अर्जुनउवाच तदश्रा
विमयाविप्रकुरुक्षेत्रेहरेर्वचः ॥ ३१ ॥ दूरंकृत्वाधर्मराजंतस्मान्नत्वद्दिसंस्थितं ॥ भ्रमोऽयंमेयथागच्छेत्तथाकुरुमहा
मते ॥ तावद्देहनृणांमोहोयावन्नोसाधुसंगतिः ॥ ३२ ॥ सौभरिरुवाच संसारोऽयंहरेर्मायासमुद्राःसरितस्तथा ॥
पर्वतावृक्षगुल्मादिलताःसर्वंचराचरं ॥ ३३ ॥ यद्दृश्यंतदनित्यंस्यात्सनित्योमधुसूदनः ॥ तंध्यायन्जगतांनाथमश्वमे
धशतैर्वृथा ॥ ३४ ॥ पृष्ठतस्त्वंहरिंकृत्वाप्राकृतंहरिमग्रतः ॥ कृत्वायदागतस्तस्माज्ज्ञानमूढःप्रशंससे ॥ ३५ ॥ कल्पवृक्षं
समुत्सृज्यएरंडंचकिलेच्छसि ॥ चिंतामणिंसमासाद्यकाचांस्त्वंपरिवांछसि ॥ ३६ ॥ संसारेऽस्मिन्नसारेहिदेहवान्जा
यतेनरः ॥ तस्मिन्देहेचकिंसारंपूयास्त्रकृश्लेष्मगंधिनि ॥ ३७ ॥ पृथ्व्यप्तेजोवायुखानिगूढास्थित्वगस्रग्दृशः ॥ प्राणा
दिदशकोशाश्चपंचभ्यःसंभवंतिहि ॥ ततोदेहश्चभवतिसव्यसाचिन्स्वरूपतः ॥ ३८ ॥ आख्यास्यतेदेहस्थितिंतुपार्थसु
रूपतांप्राप्तमप्यस्थिरंस्यात् ॥ तस्मिन्सुरूपःपुरुषःपुराणःप्रविश्यलीलांकुरुतेजनार्दनः ॥ ३९ ॥ तेनापिप्रेरितायूयम
श्वमेधंप्रकुर्वते ॥ कुरुध्वंतस्यविष्णोर्हिमायाकर्त्रीनिधर्मराट् ॥ ४० ॥ अर्जुनउवाच युष्मत्प्रसादान्मायानोगमि
ष्यतिनसंशयः ॥ शिलायाःकारणंब्रूहिविस्तरेणाथसौभरे ॥ ४१ ॥ सौभरिरुवाच शृणुपार्थमहाबाहोशिलेयंब्रा
ह्मणीपुरा ॥ आसीदुद्दालकमुनेर्भार्याचंडीतिविश्रुता ॥ ४२ ॥ विवाहसमयेविप्रैर्भर्तृवाक्यंसदाकुरु ॥ इत्थंसद्भिश्चचंडी
सानियुक्तापावकांतिके ॥ ४३ ॥ साबालभावात्प्रोवाचभर्तृवाक्यंकदाचन ॥ नकरिष्यामिभोविप्राःसत्यंसत्यंवदा
मिवः ॥ ४४ ॥ तस्यावचनमाकर्ण्यविप्राःप्रोचुर्महोत्सवे ॥ विप्राऊचुः विस्मयोऽत्रनकर्त्तव्यःकन्यावक्तीदृशंव

चः ॥ ४५ ॥ उद्दालकोऽपितांचंडीमानयत्स्वेनिवेशने ॥ बालत्वान्नप्रयुक्तासागृहकर्मणिमानद ॥ ४६ ॥ अग्निहोत्रस्य शुश्रूषांकुरुतेसस्वयंमुनिः ॥ दिनैःकतिपयैरेवप्रौढांतामवलोक्यसः ॥ ४७ ॥ प्रोवाचकुरुभद्रंतेशुश्रूषांकृष्णवर्त्मनः ॥ पुत्रास्त्वभविष्यंतिवीर्यवंतोबहुश्रुताः ॥ ४८ ॥ तच्छ्रुत्वावचनंतस्यकोपादरुणलोचना ॥ नकरिष्येऽग्निशुश्रूषांपुत्रैः किंमेप्रयोजनं ॥ ४९ ॥ सएवंब्राह्मणःक्षिप्रंकमंडलुमयाचत ॥ तंकमंडलुमादायकराभ्यांधरणीतले ॥ ५० ॥ आस्फो टयामासततोब्राह्मणोविस्मितोऽभवत् ॥ रात्रौसशयनेतिष्ठन्नेकाकीवाक्यमब्रवीत् ॥ ५१ ॥ उद्दालकउवाच त्वां नवक्ष्येकिंचिदहंमाशेथादूरतोमम ॥ गृहाद्विनिष्क्रम्यबलाद्बहिश्चंडीस्थिताऽभवत् ॥ ५२ ॥ उद्दालकोब्राह्मणपुंगवोसौ चंड्यातयाविह्वलतांजगाम ॥ किंचिन्नसंध्यादिककर्मकर्त्तुंशशाकपर्वस्वपितर्पणादि ॥ ५३ ॥ एकदातद्गृहंप्राप्तःकौंडि न्योमुनिसत्तमः ॥ तीर्थयात्राप्रसंगेनशिष्यैःपरिवृतःशुभैः ॥ ५४ ॥ उद्दालकोऽर्घदानेनपूजयामासतंमुनिं ॥ पूजितः सुखमासीनःकौंडिन्योमुनिरब्रवीत् ॥ ५५ ॥ कौंडिन्यउवाच कस्मात्कृशोऽसिभोविप्रचिंतयाप्रवृतोऽसिकिं ॥ पु त्राःकियंतःकन्याश्चतवसंतितपोधन ॥ ५६ ॥ उद्दालकउवाच नमेपुत्रानमेकन्याजायामेदुष्टभाषिणी ॥ यद्यद्वदामितां दुष्टांतत्तन्नैवकरोतिसा ॥ तयामेनप्रकर्त्तव्यंवचनंकल्पकोटिभिः ॥ ५७ ॥ परंपित्र्यंश्राद्धमस्तिकरणीयंततोभृशं ॥ कृशश्चितापरोब्रह्मन्शाधिमांस्त्रीवशंगतं ॥ तदालपितमाकर्ण्यप्रहसन्नब्रवीन्मुनिः ॥ ५८ ॥ कर्णेलगित्वाशनकैर्विपरी तंवचोवद ॥ माऽग्नेःशुश्रूषणंकार्षीर्मादामत्स्यंकमंडलुं ॥ ५९ ॥ इत्यादिवचनंब्रूयास्त्वमुद्दालकतांस्त्रियं ॥ इतोद्वियोज नंतीर्थंगौतमेनाभिपालितं ॥ ६० ॥ तद्गत्वात्रागमिष्यामिश्राद्धमारभ्यतामिति ॥ तद्वचोमृतमापीयचंडींवाक्यमथाब्र वीत् ॥ ६१ ॥ उद्दालकउवाच प्रातरेष्यतिकौंडिन्योगृहान्निष्कासयामितं ॥ तस्मैभोजनवस्त्रादिनदास्येऽहंकदा चन ॥ ६२ ॥ चंड्युवाच तंभोजयेचार्चयेऽहंवस्त्रैःपुष्पैःसुशोभनैः ॥ यदाप्रोवाचसाचंडीहर्षितोऽभून्मुनिस्तदा ॥ ६३ ॥ अनयैवपरंबुद्ध्याश्राद्धंकर्त्तापरेऽहनि ॥ इतिमत्वासमालोच्यरात्रौजायांततोऽब्रवीत् ॥ दूराद्दूरेत्वयाचंडिशयनंकार्य मद्यवै ॥ ६४ ॥ इत्युक्तासातदाचंडीशय्यामेकामुवाससा ॥ पुनःप्रोवाचविप्रोसौहर्षाविष्टमनास्तदा ॥ भविताश्वःपितुः

श्राद्धंकरिष्येऽहंनचंडिके ॥ चंड्युवाच प्रभातेतेपितुःश्राद्धंकरिष्येऽहंयथोचितं ॥ श्वशुरस्ययथातृप्तिर्भविष्यति सुखान्विता ॥ ६५ ॥ उद्दालकउवाच नरात्रौब्राह्मणमहंगच्छाम्यामंत्रितुंक्वचित् ॥ काणंखंजंश्यामदंतंकुब्जंवि प्रंनिमंत्रये ॥ ६६ ॥ मूर्खंसूचकमप्रीतंवेदहीनमवैष्णवं ॥ व्यंगंद्यूतरतंनष्टंसरोगंवृषलीपतिं ॥ ६७ ॥ चंड्युवाच अहंद्विजो त्तमान्विप्रान्वेदशास्त्रपरायणान् ॥ कुलीनान्संमतान्पुत्रपौत्रभार्यासमन्वितान् ॥ ६८ ॥ आमंत्रयित्वाऽद्यनिशिप्रभा तेतान्समानये ॥ नत्वदीयंवचस्तथ्यंकरिष्यामिकदाचन ॥ ६९ ॥ उद्दालकउवाच यदिश्राद्धंहठादेवक्रियतेचंडि मंदिरे ॥ मदीयंवाक्यमुल्लंघ्यतन्नमेसुखदायकं ॥ ७० ॥ अश्राद्धीयानिधान्यानितान्येवाहंसमानये ॥ श्रद्धयारहितंश्रा द्धंकरिष्येचंडिनान्यथा ॥ ७१ ॥ चणकानाहरिष्यामिकोद्रवान्वर्त्तुलानपि ॥ मसूरान्राजमाषांश्चकुलित्थानाढकीः पुनः ॥ ७२ ॥ यावनालांश्चनिष्पावान्वरटांश्चमठानपि ॥ खर्जूरकांश्चित्रपत्रान्श्राद्धेशाकंचकुत्सितं ॥ ७३ ॥ वृंता कंगृंजरंचैवचिल्लीकोशातकीफलं ॥ कूष्मांडकंकलिंगंचपिंडींपिंडालकंतथा ॥ ७४ ॥ अलाबुवर्त्तुलंझिंटीतंदुलीयंचपल्ल वं ॥ चंड्युवाच गोधूमांस्तंदुलान्मुद्गान्माषांश्चैवमनोरमान् ॥ ७५ ॥ आनीयाहंकरिष्यामिपायसंमंडकानपि ॥ मो दकान्फेणिकारम्याभक्तंकुमुदसन्निभं ॥ ७६ ॥ गव्यंघृतंतथाक्षीरंसितारंभाफलानिच ॥ सहकाररसंस्वादुप्रियांशिख रिणींगृहे ॥ ७७ ॥ कालेचकुतुपेश्राद्धंश्रद्धायुक्तंसवस्त्रकं ॥ सदक्षिणंपूतशाकैर्धेनुदानेनसंयुतं ॥ ७८ ॥ इतिचंडीवचःश्रु त्वामुनिःप्रोवाचतांप्रियां ॥ उद्दालकउवाच प्रसभंक्रियतेश्राद्धंपितृणांतत्रमेऽहितं ॥ ७९ ॥ अहंनीलीमयंवस्त्रं परिधास्येसुशोभने ॥ दुष्टतैलेनदीपांश्चकर्त्तास्म्यसुकृतेच्छया ॥ ८० ॥ चंड्युवाच मनोरमंगृहंकुर्यातिलतैलेनदीप कान् ॥ मयाकृतान्शुचीन्वस्त्रैस्तादृशैःपरिवर्जितं ॥ ८१ ॥ जैमिनिरुवाच ततोविप्रःप्रसन्नात्माचेतसानबहिः स्थितः ॥ तयाबुद्ध्यापितुःश्राद्धंसर्वंचक्रेनराधिप ॥ ८२ ॥ यावद्भुक्ताद्विजाःसर्वेयावद्दत्तंधनंतथा ॥ वस्त्रादिकंस्वयंभु क्तःसाचंडीचतथानृप ॥ ८३ ॥ तावद्ब्राह्म्यागमेमोहादिदंवचनमब्रवीत् ॥ उद्दालकउवाच गृहीत्वाचंडिपुटकंपिं डांतांजाह्नवीजले ॥ ८४ ॥ सुपूजितंपातयाशुश्रुत्वासागोमयावटे ॥ पिंडांश्चिक्षेपवेगेनसमुनिःकोपपूरितः ॥ ८५ ॥

तांशशापशिलादुष्टेभविष्यसिममाज्ञया ॥ चिरकालंहयस्यांगंस्पृष्ट्वामुक्ताभविष्यसि ॥ ८६ ॥ यज्ञार्थंभ्रममाणस्य
सेयंपार्थमहाशिला ॥ इमांमोचयभद्रंतेकरस्पर्शान्महाबल ॥ ८७ ॥ कृतंपार्थेनतत्सर्वंमुक्तःसतुरगोययौ ॥ चंडीशाप
भयान्मुक्ताअंगस्पर्शात्तदाहरेः ॥ ८८ ॥ तदाबभूवसाचंडीभर्तुर्वचनकारिणी ॥ उद्दालकोऋषिवरःपत्न्यासहमुमोदह
॥ ८९ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेशिलामोक्षोनामषोडशोऽध्यायः ॥ १६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
जैमिनिरुवाच मुक्तःसतुरगःशीघ्रंप्रययौचंपकांपुरीं ॥ हंसध्वजेनवीरेणपालितांप्रमदामिव ॥ १ ॥ पृष्ठतोऽस्यज
गामाशुकुंतीपुत्रोधनंजयः ॥ वीरैःपरिवृतोघोरैःप्रद्युम्नप्रमुखैर्नरैः ॥ २ ॥ मुक्तामालावृतैर्दिव्यैर्वासोभिर्वेष्टितैःशुभैः ॥
ततोहंसध्वजोराजाश्रुत्वादूतमुखाद्धयं ॥ ३ ॥ प्राप्तंस्वविषयेवीरंपालयंतंतुरंगमं ॥ चिंतयामाससचिवैःसार्धंबंधुभि
रात्मजैः ॥ ४ ॥ हंसध्वजउवाच किंपार्थतुरगंप्राप्तंगृह्णामिस्वबलाद्रणे ॥ व्यूह्यसैन्यंस्वविषयंपालयामिमहाबला
त् ॥ ५ ॥ महालाभश्चभविताद्रक्ष्यतेहरिसेवकः ॥ यत्रार्जुनस्तत्रहरिःस्वयंतिष्ठत्यसंशयं ॥ ६ ॥ नमयावीक्षितःकृष्णोवृ
द्धेनापिस्वचक्षुषा ॥ तस्मान्निर्यांतुमेवीरायुद्धार्थंयाम्यहंरणं ॥ ७ ॥ जैमिनिरुवाच ततोहंसध्वजोराजाऽप्याजगा
ममुदान्वितः ॥ सप्ततिनायकानांसगृहीत्वाप्रमुखेस्थितः ॥ ८ ॥ नायकेनायकेसैन्यंयत्तेनपरिरक्षितं ॥ तच्छृणुष्वमहीपाल
पुष्टंमानधनैःसदा ॥ ९ ॥ गजानांभूरिमत्तानांसहस्राण्येकसप्ततिः ॥ रथानामपिनद्धानांसहस्राण्येकसप्ततिः ॥ १० ॥
हयानामपिरूढानांलक्षंचैवातिभासुरं ॥ पदातीनांसहस्राणियूनांत्रिनवतिर्नव ॥ ११ ॥ सर्वेतेवैष्णवावीराःसदादान
परायणाः ॥ एकपत्नीव्रतयुताःसंमतास्तेप्रियंवदाः ॥ १२ ॥ समागतंजनंक्वापिसेवितुंतंजनाधिपं ॥ दूरदेशादपिप्रा
प्तंराजातंपरिपृच्छति ॥ १३ ॥ एकपत्नीव्रतंतातयदितेविद्यतेऽनघ ॥ ततस्त्वांधारयिष्यामिसत्यमेतद्ब्रवीमिते ॥ १४ ॥
नशौर्यंनकुलीनत्वंनचक्वापिपराक्रमः ॥ स्वदाररसिकंवीरंविष्णुभक्तिसमन्वितं ॥ १५ ॥ वासयामिगृहेराष्ट्रेतथाऽन्येऽ
पिहिसैनिकाः ॥ अनंगवेगंस्वांतेयेधारयंतिमहाबलाः ॥ १६ ॥ जैमिनिरुवाच प्रददातिधनंभूरिस्वभृत्येभ्यो
यथोचितं ॥ सुमतिःसुगतिस्तुष्टःश्रद्धालुस्तस्यनायकाः ॥ १७ ॥ सचिवाःपांतितत्सैन्यंयथाभूतंनृपस्यतु ॥ भ्रातरश्चा

पिबलिनोविदूरथमुखाहिते ॥ १८ ॥ चंद्रसेनश्चंद्रकेतुश्चंद्रदेवोमहाबलः ॥ न्यायवर्तीघनबलोधर्मवाहोतिसुंदरः
॥ १९ ॥ पुत्रास्तस्यापरंपंचसुबलःसुरथःसमः॥ सुदर्शनःपंचमश्चसुधन्वाऽपिमहाबलः॥ एवंविधेनसैन्येनस्थितःपा
र्थबलंप्रति॥ २० ॥ हंसकेतुस्ततःसैन्यंव्यूहयामाससत्वरः ॥ दुंदुभिंताडयामासगजारूढोजगामसः॥ २१ ॥ निर्गच्छं
ततोवीरास्तेनाज्ञप्ताःपुराद्बहिः॥ कश्चित्कवचमादायपूजयामासमारिष॥ २२ ॥ तानिशस्त्राणिचास्त्राणिहुत्वाचैवहु
ताशनं॥ तथाऽन्येनिर्गतावीराःसर्वेतेसमसाहसाः॥ २३ ॥ भोजयित्वाद्विजगणान्पायसेनघृतेनच ॥ निर्ययुस्तेरथैरे
वगजैर्मत्तैस्तथाऽपरे॥ २४॥ हयैरन्येप्रार्थयंतस्तत्रयुद्धंभयानकं ॥ चामरच्छत्रिणःसर्वेसिंहनादंप्रचक्रिरे ॥ २५॥ ते
षांप्रियाःस्थिताःसर्वाःप्रासादमधिकौतुकं ॥ प्रासादस्थाश्चपश्यंत्यःप्रब्रुवंत्यश्चशोभनं ॥ २६ ॥ काचिज्जगादवाक्यं
तुप्रियांतांसुंदरींप्रति॥ सखियुद्धेप्रयात्येषभर्त्तातिकेशवार्जुनौ॥ २७॥ अधरेतवकिंभद्रेकृष्णोयंदृश्यतेव्रणः ॥ तत्कथं
लज्जसेनैवभवतीव्रणदर्शनात् ॥ २८॥ तामुवाचापरातत्रमाधवंनतवाधरः॥ समुच्चरतिदुष्टेऽसौभर्त्तायुक्तंप्रशासति
॥ २९ ॥ एतज्ज्ञातंसुंदरंमेविकीर्णास्तेकथंकचाः ॥ पररंध्रेषुसर्वेषांदृष्टिर्गच्छत्यचेतसां ॥ ३० ॥ धीमतांसुकृतेयातिना
त्रकार्याविचारणा॥ वरंसाधुसमीपेहिकृच्छ्रेणवसतांनृणां॥ ३१ ॥ नराज्यंत्वसतांपार्श्वेधिग्राज्यंहिसतोविना ॥ एत
च्छ्रुत्वावचस्तस्यास्तदासागजगामिनी॥ ३२॥ प्रत्युवाचहसंतीवमूढेकृष्णंनपश्यसि ॥ त्वयामयाऽत्रज्ञातव्यंकिमप्य
स्तिमहारणे॥ ३३॥ ललाटंसव्रणंपश्यहंसगद्गदभाषिणि॥ सर्वत्रभावलाभार्थंनराःकुर्वंतिसुक्षतं॥ ३४ ॥ स्त्रीशरीरमि
दंमूढेतत्त्वंवेत्सिनचात्मनः॥ इमांपृच्छामिसुदतींपरंकौतूहलंहिमे॥ ३५॥ चंदनंवरमाल्यानिवासांसिरुचिराणिच॥ प
रिम्लानानिमंदायाःकिमेतत्कारणंवद॥ ३६॥ सुंदर्युवाच ललाटंसव्रणंमन्येभद्रायाःसखिमंडितं॥ कृष्णेनात्र
पदंदत्तंवदंतिकिलयोगिनः ॥ ३७ ॥ नवक्तव्यंपुनश्चैवंपांडवस्यतुरंगमं ॥ गृहीतुंयांतिकुशलामरालध्वजसैनिकाः
॥३८॥ जैमिनिरुवाच ततोदुंदुभिनादेननिर्गताःक्षत्रियारणे॥ नीतःकटाहस्तैलेनपूरितोराजशासनात्॥ ३९॥
ननिर्गच्छतियःकश्चित्कटाहेतैलपूरिते ॥ पात्यतेज्वलितेघोरेनमापुत्रसहोदराः ॥ ४० ॥ आज्ञाभंगोनरेंद्राणांविप्राणां

मानखंडनं ॥ पृथक्शय्याचनारीणामशस्त्रवधउच्यते ॥ ४१ ॥ आज्ञाभंगंनरेंद्राणांनकरोतिनरःक्वचित् ॥ शंखंपुरोहि
तंचक्रेतेनायंतीव्रशासनः ॥ ४२ ॥ राज्ञःपुरोहितश्चास्यनीतिशास्त्रविशारदः ॥ फलान्यपह्रतान्यासन्भ्रातुस्तेनमहा
त्मना ॥ ४३ ॥ छिन्नंबाहुयुगंस्वंहिसतामाज्ञाविचिंत्यतां ॥ पुरोहितवशाद्राजानीतिज्ञःसर्वदाधरां ॥ ४४ ॥ सम्यक्पा
लयमानोऽसौरणेजेतापरान्स्थितान् ॥ एवंविधंकटाहंतंविलोक्यनृपशासनात् ॥ ४५ ॥ सुधन्वाप्रथमंपुत्रोनिर्ययौनृ
पतिंप्रति ॥ नमस्कृत्याथजननींगृहीत्वापरमंधनुः ॥ ४६ ॥ अवदन्मातरंयुद्धेपार्थंगच्छामियोधितुं ॥ हरिंतमानयिष्या
मिरक्षितंपांडवेनहि ॥ ४७ ॥ मातोवाच गच्छपुत्रहरिंयुद्धेविजित्यममसन्निधौ ॥ हरिंचतुष्पदंत्यक्त्वातंसमान
यमुक्तिदं ॥ ४८ ॥ बहुधानारदःप्राहतस्यकृष्णस्यचेष्टितं ॥ मद्भर्त्राविजितावीराबहवोऽपिरणांगणे ॥ ४९ ॥ नचैकः
कंसहंताऽयंभुविदृष्टःस्वचक्षुषा ॥ रात्रिंदिवाहरिंब्रूतेतंपश्यामितथाकुरु ॥ ५० ॥ बहुधाकुरुतत्कर्मयेनतुष्यतिकेशवः ॥
नत्वयंवशतामेतिदूराद्दूरंपलायते ॥ ५१ ॥ चक्षुर्विषयमापन्नःपश्यभाग्यंमहाबलः ॥ पार्थंधारयभद्रंतेवशगस्तेहरिर्भ
वेत् ॥ ५२ ॥ स्वभक्तंनत्यजत्येषमनाक्पुत्रमयाश्रुतं ॥ यथावनगतंवत्संत्यक्त्वानायातिसौरभी ॥ ५३ ॥ तथाऽपत्सुनकृ
ष्णोऽपिस्वजनंपरिमुंचति ॥ तदग्रेनभयंकार्यंकृष्णाद्भीतोनजीवति ॥ ५४ ॥ प्रहसिष्यंतिमांसर्वेलोकाःसंबंधिनस्तथा ॥
तवभद्रेसुतःकृष्णंनिरीक्ष्यविमुखोऽभवत् ॥ ५५ ॥ तथाविधंनकर्त्तव्यंपुत्रसूचकभाषितं ॥ मयाऽद्यहर्षःक्रियतेपत
नेतवपुत्रक ॥ ५६ ॥ यत्तुलोकविरुद्धंचपुत्रंप्रतिभवेद्वचः ॥ नचेतसिमदीयेऽत्रजायतेलोकभाषितं ॥ ५७ ॥ हरेःकिंसं
मुखःपुत्रपतितःपतितोभवेत् ॥ तेनैवचोद्धृताःसर्वेआत्मनाचैकविंशतिः ॥ ५८ ॥ रोदनंपुत्रताःसर्वाःकुर्वंतुभुवियोषि
तः ॥ यासांपुत्राश्चपौत्राश्चनव्रजंतिहरिंप्रति ॥ ५९ ॥ सुधन्वोवाच सर्वंतेभाषितंमातःकरिष्येहरिमानये ॥ पौरुषंहि
मयाकार्यंजयोदैवेप्रतिष्ठितः ॥ ६० ॥ तवोदरेनसंजातस्तत्रचेत्केशवंप्रभुं ॥ विलोक्यविमुखोभूयांगच्छेयंसद्गतिंनहि
॥ ६१ ॥ जैमिनिरुवाच एतावदुक्त्वावचनंयावद्गच्छतिवीर्यवान् ॥ तावन्नीराजितःसम्यक्कृतयाकुवलयानृप
॥ ६२ ॥ लाजैश्चसुमनोभिश्चगंधैश्चोच्चैःपुनःपुनः ॥ कंठेमालांपातयित्वाभगिनीवाक्यमब्रवीत् ॥ ६३ ॥ कुवलोवाच

योद्धुंधनंजयंयासिसाधुयोधयबांधव ॥ दारुणोममवासोऽयंश्वशुरस्यगृहेसदा ॥ ६३ ॥ ज्येष्ठादयोहसंतीमेदेवराश्च प्रहासिनः ॥ मांतत्रनिवसंतींतुयज्ज्ञगुस्तत्परंशृणु ॥ ६४ ॥ कुवलेजनकस्तेयंमूर्खएवोपलक्ष्यते ॥ ब्रूतेकृष्णंप्रजेष्यामि यथाकाशीश्वरोजितः ॥ ६५ ॥ स्वदेहेननशक्नोतिबलेनसहितःपुरीं ॥ रम्यांद्वारवतींमंदोगंतुंजेतुंतमिच्छति ॥ ६६ ॥ सुधन्वोवाच कुवलेपितृवाक्यंतद्देवराणांचभाषितं ॥ सर्वसत्यंकरिष्यामिसत्येनायुधमालभे ॥ ६७ ॥ नमस्कृत्या त्रभवतींरणेयामिहरिंप्रति ॥ एतावदुक्त्वावचनंबाल्यांकक्ष्यामगात्तदा ॥ ६८ ॥ ततोददर्शतांदेवींचारुनेत्रपयोधरां ॥ अग्रतश्चंदनयुतांसहितांचंद्रकेणतु ॥ ६९ ॥ सांभोजैश्चंपकैःपात्रंकांचनस्यसदीपकं ॥ गृहीत्वासंस्थितातन्वीछन्नंदू र्वाक्षतैरपि ॥ ७० ॥ कर्पूरपुलकोद्भूतैर्दीपैःपंचशिखैर्नवैः ॥ सारणद्वलयाबालाचारुनूपुरमेखला ॥ ७१ ॥ कौशेयंबिभ्र तीशुभ्रंकंचुकींपुष्परागिणीं ॥ मुक्तामालांसुकंठेचमुखरागंतथाऽरुणं ॥ ७२ ॥ अर्चयामासतंवीरंपतिंपतिपरायणा ॥ निरीक्षंतीचभर्त्तारंतदादृष्ट्याऽतिवक्रया ॥ ७३ ॥ तथाविधेनपात्रेणपुनर्नीराजयत्यसौ ॥ नीराजयित्वास्वंकांतंप्रत्यु वाचमनस्विनी ॥ ७४ ॥ प्रभावत्युवाच पश्यामिवदनंनाथकृष्णदर्शनलालसं ॥ तावकंमांपरित्यज्यकुतोयास्य सिवैक्षणं ॥ ७५ ॥ एकपत्नीव्रतंनष्टंतवपश्यामिसांप्रतं ॥ ययावृतोसियांयासिसानतुल्याभवेन्मम ॥ ७६ ॥ सासर्वगा मिनीनाहंसद्भिःकस्मात्प्रवर्ण्यते ॥ पितागच्छतियामेवपुत्रस्तामेवगच्छति ॥ ७७ ॥ ईदृशीत्वद्दयेमुक्तिस्तवजागर्ति सर्वदा ॥ तांप्रदास्यतिगोविंदोमत्वागच्छसिसत्वरं ॥ ७८ ॥ पुंसांचित्तंक्षणंयातिसुरनारीनिषेवणे ॥ विवेकोनैवजनि तःपुत्रस्तस्मात्किमाहवे ॥ ७९ ॥ लौल्याद्गच्छसिकृष्णाग्रेहरिंवीक्ष्यनसाप्रिया ॥ भवित्रीतेमहाबाहोप्रियैकाहंपुनर्गृहे ॥ ८० ॥ ममसंगात्त्वयालब्धोविवेकाख्योहिपुत्रकः ॥ विवेकस्त्वांतुगच्छंतंनवारयतिदेहजः ॥ ८१ ॥ यथानरोपरांया तितथानारीनगच्छति ॥ गतेत्वयिगमिष्यामिमोक्षंचेन्नत्वसौपरः ॥ ८२ ॥ विवेकसुतसंपन्नांमांगृहीत्वाभविष्यसि ॥ संसारेऽस्मिन्महाघोरेकृतकृत्योनसंशयः ॥ ८३ ॥ विवेकोरक्षतेनित्यंममनाथकलेवरं ॥ अन्यानार्योऽपिगच्छंतिवि वेकरहिताःपरं ॥ ८४ ॥ बालत्वेजनितःपुत्रोविवेकस्तेनकश्मलं ॥ विंदाम्यहंव्रजंतीतत्कैवल्यंप्रतिमारिष ॥ ८५ ॥ गते

त्वयिगमिष्यामिमोक्षंवीरत्वयासह॥ वक्रेवक्रंप्रकर्त्तव्यंधन्येधन्यंसमाचरेत्॥ ८६ ॥ आदावेवगमिष्यामिचिंतयंती तवाननं॥ मुक्तिस्त्वांतुहसंतीवभयान्ममहामते॥८७॥ स्वनारींयःपरित्यज्यप्रार्थयत्येषमामिति॥ साध्वींतथाविधां भूमौविवेकेनावृतांनृप ॥ ८८ ॥ नाथश्रद्धांनपश्यामितवभावप्रवर्त्तिनीं ॥ कथितासाययामुक्तिरर्चनान्माधवस्यतु ॥ ८९ ॥ पादौतस्याःपातनीयौछित्वानूनंमयानृप॥ स्वमंदिरंयथाचेयंनगच्छतिपरंजनं॥ ९० ॥ श्रेयोहिभाषितंतस्या विविधंचौषधंहितं॥ विनाकृष्णाश्रयादन्यंकथयिष्यतिकारणं॥ ९१ ॥ मुखमस्यावृतंविद्धिपांसुभिर्हरिसंभवैः ॥ एवं संचिंत्यगच्छाशुयत्रगंतुंसमुद्यतः ॥ ९२ ॥ सुधन्वोवाच प्राप्यतेसामयाभद्रेत्वत्संगान्नात्रसंशयः ॥ मत्पौरुष मतिक्रम्यवचःप्रोक्तमिदंत्वया॥९३॥ वचसाऽनेनमेकामस्तिष्ठन्नपिविनिर्गतः॥ योद्धुंप्रयामितंकृष्णंमोक्षंप्राप्नुहिशो भने ॥ ९४ ॥ चंदनंवरवासांसिकांचनंरत्नसंचयं॥ शरीरंचापिमेचित्तंत्यक्त्वागच्छतुभामिनि॥ ९५॥ यद्यहंत्वांपुरावे द्मिकैवल्यरसिकांगृहे॥ विवेकोत्पादनेयत्नंनकर्त्तात्वादृशींप्रति॥ ९६॥ प्रभावत्युवाच नाथगच्छसिसंग्रामेपा र्थयोद्धुंमहाबलं॥ विवेकाख्योऽपितनयोहृदयेममतिष्ठति॥ ९७॥ सचेन्मूर्त्तिंदर्शयतिस्वांतथाकुरुमेप्रियं॥ जलदंना त्रपश्यामिसुस्नाताऽहंगतेत्वयि॥९८॥ सुधन्वोवाच निरीक्ष्यकृष्णंपार्थंचपुनरायामितेंऽतिकं॥विजित्यपंचभिर्बा णैःसर्वगौतौप्रभावति ॥ ९९ ॥ प्रभावत्युवाच येप्राप्तामाधवंद्रष्टुंदृष्टोयैर्मधुसूदनः ॥ नयांतितेपुनरपिसंसारे स्मिन्कदाचन॥ १०० ॥ तत्प्रियावचनंश्रुत्वासुधन्वावाक्यमब्रवीत्॥ यदिजानासिदेवित्वंकृष्णस्यकिलदर्शनात्॥ १ ॥ पुनरागमनंनास्तिजलदंयाचसेवृथा॥ प्रभावत्युवाच प्राप्नुवंतिपदंविष्णोस्तएवसुतसंयुताः॥२॥सुतानुत्पाद्यसंप्रा प्तौपदंतौशुकनारदौ ॥ सुताननंनपश्यंतिज्ञेयास्तेऋणिनोभुवि॥ ३ ॥ पराशांसफलांकृत्वायेव्रजंतिहिसाधवः॥ तेषां चिंतितकार्याणिजायंतेनात्रसंशयः ॥ ४ ॥ पराशांविफलांकृत्वायेव्रजंतिधरातले ॥ तेषांचिंतितकार्याणिनसिद्ध्यंति कदाचन ॥५॥ सुधन्वोवाच राजानंकिंनजानासिभद्रेत्वंतीव्रशासनं॥ एषघोरःसभयदोरोरवीतिचदुंदुभिः ॥ ६ ॥ कटाहंतैलसंपूर्णंसुतसंबलनिर्गमे ॥ क्षेप्तव्यस्तत्रशीघ्रंयोनायातिरणमंडले॥ ७ ॥ रात्रौयद्दीयतेदेविकृतुदानंसु

तप्रदं॥ साधवोनप्रशंसंतिदिवास्त्रीसंगमंक्वचित् ॥८॥ सर्वैर्विनिर्गतावीरायोद्धुंपित्राज्ञयाऽर्जुनं॥ प्रभावत्युवाच
सरागांमामजित्वाग्नेयदिग्गंतुंत्वमिच्छसि॥ ९ ॥ अनंगेनावृतामेकामंगैर्बहुभिरावृतां ॥ कथंसेनांभवान्जेतुंदिवाधी
रोभविष्यति ॥ १० ॥ कृष्णस्यपुरतोवीरैःकालांतकयमोपमैः ॥ गतिःकानागतेनूनंत्वयिनाथेऽद्यमामकी ॥ ११ ॥
सुधन्वोवाच मैवंवदविशालाक्षिदिवसाःसंतितेऽबले॥ बहवोऽपिरणेपार्थोनायंपुनरवेक्षते॥ १२॥ प्रभावत्यु
वाच षोडशोऽयंचदिवसोममनाथव्यवस्थितः॥ ऋतुभंगात्तुयत्पापंतत्त्वयाज्ञायतेप्रभो ॥१३॥ पितुःश्राद्धेषोडशे
वैदिवसेऋतुपूरिते॥ एकादशीव्रतंतद्वत्त्रितयंसंगतंभवेत्॥१४॥ किंकर्त्तव्यंमहाबुद्धेसंशयेऽस्मिन्सदानृभिः ॥ धर्मः
सूक्ष्मोऽतिगहनःशक्यतेकेनवर्त्तितुं ॥ १५ ॥ सुधन्वोवाच निर्णीतंविद्यतेदेविऋषिभिर्धर्मसंकटे॥ सांवत्सरंतु
तातस्यकर्त्तव्यंभावसंयुतं ॥ १६ ॥ आघ्रायान्नंनिशामध्येकुर्वीतव्रतमुत्तमं ॥ प्रियायैऋतुदानंहिप्रदेयंधीमतागृहे
॥ १७॥ धर्मशास्त्रेषुनिर्णीतंपुराधर्मार्थकोविदैः॥ सांवत्सरंतुवैश्राद्धंकर्त्तव्यंपितृभक्तितः ॥ १८॥ एकादशीव्रतंचापि
कृष्णभक्तिसमन्वितैः॥ ऋतुदानंहिकर्त्तव्यमर्धरात्रात्परंनरैः॥१९॥ एषएवपरोधर्मोगृहस्थानांवरानने ॥ सुधन्वनोव
चःश्रुत्वावाक्यमाहप्रभावती॥२०॥पितातवाहवेभातिव्रतमद्यनविद्यते॥ऋतुदानंततोनाथदत्वायाहिरणेहरिं॥२१॥
जैमिनिरुवाच एतावदुक्त्वावचनंप्राणनाथंमहाबलं॥ उभाभ्यामपिहस्ताभ्यांकोमलाभ्यांवरानना॥ २२ ॥ तंकं
ठेधारयामासशालंवल्लीवकानने ॥ नशशाकततोगंतुंप्रियाबाहुनियंत्रितः॥ २३ ॥ विमुच्यकवचंभूमौकिरीटंचहस
न्नपि॥ तयासहदिवारेमेशयनेरत्नमंडिते॥२४॥ गर्भंदधौविशालाक्षीसुस्नातोऽभूत्सभारत॥ सुधन्वारथमारुह्ययाव
द्गच्छतिमंदिरात्॥२५॥तावद्रणेहंसकेतुर्बलाध्यक्षमुवाचह ॥ हंसध्वजउवाच सर्वेवीराइहायाताःश्रुत्वानादंच
दुंदुभेः ॥ २६ ॥ सुधन्वानंनपश्यामिरणमध्येसमागतं ॥ ममाज्ञांकिंनजानातिकटाहोविस्मृतःकथं ॥ २७॥ प्रयाण
दुंदुभिरयंलंघितःपुत्रकेणकिं॥ हरयोमेहरिंप्राप्तागजामत्ताधनंजयं॥ २८॥ सुधन्वनापृष्ठतःकिंक्रियतेकर्मकुत्सितं॥
तस्माद्गच्छंतुयवनाःसबलामुद्गरान्विताः ॥ २९ ॥ केशेष्वाकृष्यतंदुष्टंविकृष्यंतुधरातले ॥ आनयंतुकटाहस्यपार्श्वेकृ

ष्णपराङ्मुखं ॥३०॥ जैमिनिरुवाच तेनाज्ञप्तास्ततोराजन्यवनाःशीघ्रकारिणः॥जग्मुस्तन्मंदिरंरम्यंरत्नचित्रंसु
धन्वनः ॥ ददृशुस्तंसमायांतंभुक्तभोगंनृपात्मजं ॥ ३१ ॥ प्रोचुस्तच्छासनंभर्त्तुर्वज्रपातोपमंतदा ॥ यवनाऊ
चुः वयंप्राप्तामहाबाहोग्रहणेतवमारिष ॥ ३२ ॥ आज्ञाभंगःकिमर्थंहिनृपतेस्तस्यकारितः ॥ स्थितोऽसिपृष्ठतोनू
नंत्वयासर्वंहिवंचितं ॥ ३३ ॥ पित्रातववयंसर्वेप्रेषिताःस्मबलादितः ॥ नेतुंत्वांसंगरेमंदंविकृष्यचधरातले ॥ ३४ ॥
उत्तिष्ठयाहिनृपतिंपार्थसैन्यनिवारकं ॥ पद्मव्यूहंसमाश्रित्ययुद्धशौंडैःसमावृतं ॥ ३५ ॥ जैमिनिरुवाच कु
पितंवचनात्तेषांज्ञात्वास्वजनकंविभुं ॥ सहैवतैःप्रयातोग्रेरथमास्थायतद्बलं ॥ ३६ ॥ समुद्रमिवपर्याप्तंसमंताद्यो
जनत्रयं ॥ ददर्शपितरंवीरोधनंजयजयोत्सुकं ॥ ३७ ॥ कुपितंपितरंवीक्ष्यनमस्कृत्यपुरःस्थितः ॥ सुधन्वानंततो
राजाप्रत्युवाचरुषान्वितः ॥ ३८ ॥ हंसध्वजउवाच किमर्थंशासनंवीरमदीयंलंघितंत्वया ॥ सुध
न्वोवाच जलदंतेवधूर्गेहेमत्तोयाचितुमुद्यता ॥ तस्मात्स्थिरायितंराजन्प्रयाणेऽस्मिन्मयाविभो ॥ ३९ ॥ हंस
ध्वजउवाच ध्रुवंमूर्खतरस्त्वंहियदिकृष्णोऽत्रसंमुखः ॥ नदृष्टःसंगरेसाक्षात्त्वयानोवंचितंकुलं ॥ ४० ॥ स्वप्रियायै
भवान्दत्वाजलदंनिर्गतःपुरात् ॥ नतेनपूर्वजानांतेतृप्तिःपूर्णाप्रजायते ॥ ४१ ॥ नत्वदीयामदीयात्रजलदेनहरिं
विना॥नचतृप्तिमुपायांतिदुरात्मंस्तेकथंचन॥वरुणस्यापिनोशक्तिःपिपासापूरणेनृणां॥४२॥पुत्रिणोयदिगच्छंतिस्व
र्गंमोक्षंसुताधम ॥ तदाश्वुनांसूकराणांस्वर्गःस्यात्तुहरिंविना ॥ ४३ ॥ हयंपालयितुंप्राप्तःसव्यसाचीमहाबलः ॥ क्षणमे
कंजगन्नाथोनमुंचतिरणेऽर्जुनं ॥ ४४ ॥ धिक्तेबलंधिग्विचारोधिग्धर्मोऽयंत्वयाकृतः ॥ श्रुत्वाकृष्णंपुरंप्राप्तंकथंकामे
गतंमनः ॥ ४५ ॥ एवंविधंकृष्णपराङ्मुखंत्वांतप्तेकटाहेकिलनिक्षिपामि ॥ मलीमसंकामरतंकुपुत्रमाकंठमग्नंतिलतै
लपूर्णे ॥ ४६ ॥ गच्छंतुदूतामुनिसन्निधौतुपुरोहितंमेलिखितंचशंखं ॥ तयोःपुरःसर्वमिदंनिवेद्यपृच्छंतुतद्भाषितमेव
कर्त्ता ॥ ४७ ॥ तयोर्वचोनैवमयाविलंघ्यंस्वजीविताद्राज्यकरादवश्यं ॥ कुर्वंतुतप्तंपुनरेवतैलंपश्यंतुपार्थप्रमुखाममा
ज्ञां ॥ ४८ ॥ जैमिनिरुवाच एवंतेनमहीपेनप्रेरिताःशब्दकारिणः ॥ जग्मुःप्रष्टुंमुनींद्रौतौभ्रातरौतत्पुरोहितौ

॥ ४९ ॥ दूताऊचुः नृपःपृच्छतिवांकिंचित्संशयंधर्मसंकटे ॥ सुधन्वनास्थितंपृष्ठेनृपाज्ञाचविलंघिता ॥ ५० ॥
जलदंदातुकामेनतद्दूतंनःपुरोहितौ ॥ किंकर्त्तव्यंमयातस्यपापिष्ठस्यसुधन्वनः ॥ ५१ ॥ कटाहस्यसमीपेतुबलादेवसु
तंप्रभुः ॥ आनीयतंपातयिताभवद्भ्यांसनियोजितः ॥ ५२ ॥ तैलेतप्तेपरित्यज्यपुत्रस्नेहंनसंशयः ॥ लिखितउवाच
गच्छंतुदूतानृपतिंशंसंतुममभाषितं ॥ ५३ ॥ स्ववचोयोनमंदात्मासत्यंकुर्याद्धरातले ॥ भयाल्लोभाच्चनरकेचिरंतिष्ठति
दारुणे ॥ ५४ ॥ कौशिकायददौराज्यंहरिश्चंद्रोमहामतिः ॥ क्रीतौभार्यासुतौतेनस्वसत्यंप्रतिपालितं ॥ ५५ ॥ हंतुंप्रि
यांस्थितोराजारम्येभागीरथीतटे ॥ वाराणस्यांपुत्रगात्रान्मृताद्वस्त्रंजहारसः ॥ ५६ ॥ रामंप्रव्राजयामासवनंदशरथः
पुरा ॥ स्वकंवचःकृतंसत्यंकैकेय्यैयदुदाहृतं ॥ ५७ ॥ अमुनायत्पुराप्रोक्तंपुत्रंपौत्रंसहोदरं ॥ आज्ञाभंगकरंतैलेसुतप्तेपा
तयाम्यहं ॥ ५८ ॥ तदन्यथाभवेदेवयावत्पुत्रोनपात्यते ॥ विमुखःकेशवंवीक्ष्यपार्थंचरथिनांवरं ॥ ५९ ॥ गृहेस्थितः
स्वकामाद्यःसतेनपरिपाल्यते ॥ आवांगच्छावहेराष्ट्राद्भातरौनृपतेर्बहिः ॥ ६० ॥ तस्मिन्राष्ट्रेनवस्तव्यंयस्मिन्राजा
नसत्यवाक् ॥ तत्संसर्गाद्गुणानॄणांवसतांसंभवंतिहि ॥ ६१ ॥ तत्समीपेनिवसतांपातकंहिभवेन्नृणां ॥ आसनाच्छय
नाद्यानात्संपर्कात्सहभोजनात् ॥ ६२ ॥ एतावदुक्त्वावचनंलिखितःशंखसंयुतः ॥ परित्यज्यगतःसोथदूतास्तेनृपतिंग
ताः ॥ ६३ ॥ ब्रुवंतिसर्वंतत्प्रोक्तंराजानंप्रतिमारिष ॥ गतोनृपमहाबुद्धिर्मुनिर्ग्रामाद्रुषान्वितः ॥ ६४ ॥ तमिहानयराजेंद्र
मुनिंधर्मोपदेशकं ॥ जैमिनिरुवाच हंसकेतुःसमादिश्यसचिवंपुत्रपातने ॥ ६५ ॥ सुतप्तेतिलतैलेचक्षिपदुष्टंममा
ज्ञया ॥ सुधन्वानंमयिगतेत्वंधीरसचिवैर्वृतः ॥ ६६ ॥ पार्थपश्यरणेवीरंयाम्यहंतंपुरोहितं ॥ नमस्कर्तुंमहाबुद्धिंपुनरे
ष्यामियोधितुं ॥ ६७ ॥ एवमुक्त्वावचोराजानमस्कृत्यपुरोहितौ ॥ आनयामासतौतत्रकटाहोयत्रतादृशः ॥ ६८ ॥ सुम
तिःसचिवश्चक्रेसर्वंनृपतिभाषितं ॥ सुधन्वानंमहावीरंप्रत्युवाचविशांपते ॥ ६९ ॥ सुमतिरुवाच सुधन्वन्किं
करोम्यद्यत्वांसमीक्ष्यमहाबलं ॥ हृदयेजायतेऽतीवकरुणामेमहाभुज ॥ ७० ॥ शासनंचापिनृपतेर्लंघितुंनैवशक्यते ॥
शासनंचापिराज्ञोमेदारुणंत्वयिविद्यते ॥ ७१ ॥ सुधन्वोवाच कर्तव्यंशासनंराज्ञस्त्वयापरवशेनहि ॥ पितृवा

क्येनरामेणस्वजनन्याःशिरोहृतं ॥ ७२ ॥ जामदग्न्येनपूर्वंतुतवकापरिदेवना ॥ प्रतीतोऽहंमहाबुद्धेकृतापुण्यक्रियाशु
भा ॥ ७३ ॥ नभयंमरणान्मह्यंतस्मैतैलेऽद्यमांक्षिप ॥ जैमिनिरुवाच सुमतिस्तंतथाभूतंस्नातंदिव्यांबरावृतं ॥
॥ ७४ ॥ तुलसीदलजांमालांधारयंतंमहोरसि ॥ स्मरंतंवसुदेवस्यतनयंचापिकेशवं ॥ ७५ ॥ उत्थाप्यतैलेचिक्षेपसुतस्ते
भूपशासनात् ॥ सुधन्वाप्राहगोविंदंप्रथमंयादृशंवचः ॥ ७६ ॥ तत्तेऽहंकथयिष्यामिशृणुष्वैकमनानृप ॥ ज्वालाकुलं
वीक्ष्यतैलमावर्तशतसंकुलं ॥ ७७ ॥ परोदयंसमालोक्यदुर्जनस्येवमानसं ॥ जायतेतादृशंजातंकटाहंजनमेजय ॥
॥ ७८ ॥ सुधन्वोवाच त्राहित्राहीतिगोविंदमयायद्भाषितंवचः ॥ श्रुत्वात्वंनागतोयस्माद्विज्ञातंकारणंहरे ॥ ७९ ॥
मामवज्ञायसंप्राप्तंसुधन्वाकामचारकः ॥ पश्चात्स्मरतिपापिष्ठःसंकटेऽद्यजगद्गुरुं ॥ ८० ॥ स्मरंतिकृच्छ्रपतितास्त्वामे
वभयविह्वलाः ॥ जनानसुखसंयुक्ताःसत्यमेतद्वदाम्यहं ॥ ८१ ॥ धिङ्मेसौख्यंकृच्छ्ररूपंमन्येहरिविवर्जितं ॥ प्रह्लादोग
जमुख्यश्चध्रुवःपृषतनंदिनी ॥ ८२ ॥ अन्येगोपादयोलोकेस्मरंत्यापत्सुकेशवं ॥ पूर्वंस्मृतोऽसितैरेवत्रातास्तेकृच्छ्रतस्त्व
या ॥ ८३ ॥ अंतकालेचिंतनंतेजायतेमुक्तिदंनृणां ॥ हृदयेचिंत्यमानेननाम्नातवजनार्दन ॥ ८४ ॥ ममुक्तिर्नसंदेहःप
रलोकेविगर्हितः ॥ सुधन्वामरणंदुष्टंप्राप्तोवीरःकटाहजं ॥ ८५ ॥ अद्यकृष्णार्जुनौवीरौतोषितौनामुनाबलात् ॥ गांडी
वमुक्तैर्नाराचैर्गात्रंनशकलीकृतं ॥ ८६ ॥ सुधन्वनःसमर्थस्यचोरस्येवाभवद्गतिः ॥ मनसानधृतौकृष्णौसैन्यंननिहतंबहु
॥ ८७ ॥ ईदृशैर्बहुभिर्वाक्यैःप्रहसिष्यंतिमांजनाः ॥ वह्निदाहादद्यहरेमांत्वंरक्षितुमर्हसि ॥ ८८ ॥ द्रौपदीवस्त्ररूपेणलज्जा
ब्धौपतिताधृता ॥ त्वयाकृष्णेनसदसिसमक्षंद्रोणभीष्मयोः ॥ ८९ ॥ जैमिनिरुवाच एवंब्रुवतिवीरेऽस्मिन्स्मर
णान्माधवस्यतु ॥ तैलंसुशीतलंजातंसज्जनस्येवमानसं ॥ ९० ॥ सर्वेजनास्तंप्रसमीक्ष्यतैलेयथाजलेपंकजवत्प्रफुल्लं ॥
सुधन्वनःकुंडलिनंसुनेत्रंविसिस्मयुश्चाननमस्यदुःखात् ॥ ९१ ॥ अश्रूणिमुंचंतिपतंतिभूमौवक्षःकराभ्यामभिताडयं
ति ॥ क्रोशंतिहाहेतिकिरीटकंचक्षिपंतिबाहून्परिधूनयंति ॥ ९२ ॥ वदंतिराजाकिमसौनचास्मान्सुधन्वनोर्थेक्षिपतेऽ
ग्निमध्ये ॥ गच्छेमदेवंयदुनंदनंतंधनंजयंकृष्णपदंप्रपन्नं ॥ ९३ ॥ जैमिनिरुवाच हंसध्वजःशंखयुतोददर्शपुत्रं

कटाहेप्रतरंतमेनं॥ पुण्यानिनामानिहरेर्जपंतंगोविंददामोदरमाधवेति॥ ९४ ॥ शंखोऽब्रवीत्तंनृपतिंकिमेतत्तैलंनत
संज्वलताग्निनाऽपि॥ किमौषधंमंत्रवरंसुतस्तेजानातिराजन्नथकैतवंवा॥ ९५ ॥ कुतोज्वलत्तैलमिदंकुतोमुखंप्रफुल्ल
पद्माभमिवास्यराजते॥ क्षिपंतुदूतानवनारिकेलंभवेत्ततस्तैलमिदंपरीक्षितं ॥ ९६ ॥ निशम्यतद्वाक्यमतीवतीव्रंदूता
स्तदातैलसमानभूताः॥ मुनेर्भयात्तेफलमाशुतैलेविचिक्षिपुःशंखदृशःपुरस्तात्॥ ९७॥ द्विधाभिन्नंत्वभवत्तत्कटाहा
च्छंखस्यचैकंशकलंललाटे॥ लग्नंद्वितीयंलिखितस्यचापितथोच्छलंत्यस्तिलतैलधाराः॥ ९८ ॥ इत्याश्वमेधिकेप
र्वणिजैमिनीयेसुधन्वनःसत्वकथनंनामसप्तदशोऽध्यायः॥ १७॥ ॥ छ॥ ॥ छ॥ ॥ छ॥

जनमेजयउवाच कथंकटाहात्समहाबलोऽपिजगामपार्थंसचमुक्तगात्रः॥ तत्कौतुकंशंसतुजैमिनेमेनिरीक्ष्यशं
खःकिमकारितत्र ॥ १ ॥ जैमिनिरुवाच विलोक्यतंतैलमध्येसुधन्वानंमहामुनिः ॥ भृत्यंपप्रच्छवीरेणपात्य
मानेनकिंस्मृतं॥२॥ औषधस्यचमूलंवाबद्धंगात्रेतथाऽमुना॥ दूताऊचुः नान्यत्स्मृतंकिंचिदेवविनाकृष्णंमहामतिं॥
यस्यस्मरणमात्रेणमुच्यंतेयोनिसंकटात्॥ ३ ॥ प्राणिनोभूतलेब्रह्मन्संस्मृतोमाधवोऽमुना ॥ पश्यौष्ठौस्फुरमाणौत्वशं
खमाधवभाषिणौ॥ ४ ॥ सुधन्वनोऽतिसत्वस्यप्रियादृष्टौसमागमे ॥ शंखउवाच स्मृतोयद्यमुनाविष्णुःपात्य
मानेनसाधुना॥ ५॥ धिगहंकठिनोबालंपश्यामिनिकटस्थितः॥ प्रायश्चित्तंस्वदेहस्यकरिष्येमरणांतिकं॥ ६॥ एताव
दुक्त्वावचनंतैलमध्येपपातसः॥ समालिंग्यसुधन्वानमिदंवचनमब्रवीत्॥७॥ साधुक्षत्रियवीरस्त्वमसाधुरहमद्विजः॥
येनतैलेपातितोऽसिमयापेशलचेतसा॥ ८॥ भवंतितेतापयुतायेनविंदंतिमाधवं ॥ गतश्रीकाश्चमूढाश्चनित्यंदुःखस
मन्विताः॥ ९॥ येस्मरंतिचगोविंदंसर्वकामफलप्रदं॥ तापत्रयविनिर्मुक्ताजायंतेदुःखवर्जिताः॥ १० ॥ कथंत्वंवह्नि
नादग्धुंशक्यःपरमवैष्णवः॥ मुनयोऽयंनपश्यंतिसुरासुरगुरुंहरिं ॥ ११ ॥ चेतसाऽपित्वयावाचाप्राणांतेसंस्मृतोऽधु
ना॥ प्रह्लादोरक्षितोयेनदग्धस्तस्माद्धुताशनात्॥ १२ ॥ त्वच्छरीरस्यसंपर्कात्पावनंमेवपुस्त्विदं ॥ जातंपुरुषशार्दूल
नोपायोऽन्योऽस्तिपावनः॥ १३॥ राजानंराजपुत्रांश्चसैन्यंपावयसुव्रत॥ उत्तिष्ठवत्सतैलात्त्वंमांसमुद्धरभूपज॥ १४॥

कृष्णोऽयंपांडवस्यार्थेसारथ्यंप्रकरोतिच ॥ अर्जुनेनाद्यसंग्रामंकुरुवीरयथोचितं ॥ १५ ॥ यशःस्थिरंस्वकंकृत्वापश्चा
त्प्राप्नुहिमंगलं॥ जैमिनिरुवाच गृहीत्वातंतैलमध्याद्रणेप्राप्तोमहामुनिः ॥ १६ ॥ राजानंप्रत्युवाचेदंपुत्रंपश्यस
नातनं॥ शंखउवाच अनेनविधृतंमूलंसद्विद्यायामुखेस्वके ॥ १७ ॥ मंत्रराजंनृसिंहाख्यंजपतारक्षितंवपुः ॥ य
शोमयंपावितोऽहंत्वांतुपावयितुंस्थितः ॥ १८ ॥ ततोहंसध्वजःपुत्रंसमालिंग्याब्रवीद्वचः॥ हंसध्वजउवाच म
यापित्राभवांस्त्यक्तस्तैलेपावकदीपिते ॥ १९ ॥ नदग्धोसिहुताशेनप्रभावात्केशवस्यतु ॥ माहात्म्यंवासुदेवस्यत्वांनि
पातयिताधुना ॥ २० ॥ सम्यग्वत्सपरिज्ञातंमयेदानींनसंशयः॥ उत्तिष्ठदेहिमेवत्सपरिरंभणमद्यवै ॥ २१ ॥ उत्तिष्ठपु
त्रभद्रंतेरथमारुह्यसंगरे॥ कृष्णंदर्शयपार्थस्यसारथिंचम मातिथिं ॥ २२ ॥ सुधन्वनावंदितौतौहृष्टेननृपभूसुरौ ॥ र
थंरत्नविचित्रंमतंहेबद्धंसुकूबरं ॥ २३ ॥ दीर्घध्वजंचारुचक्रंगवाक्षैर्बहुभिर्वृतं ॥ हेमवर्णैर्हयैर्युक्तंबद्धचामरमाशुगं ॥
॥ २४ ॥ सुवर्णमालापरिभूषितंबलीमाल्यस्रजोभिर्बहुलाभिरर्चितं॥ नियंत्रितंसूत्रवरेणकिंकिणीनादेननृत्यंतमिवा
रुरोहसः॥ २५॥ जैमिनिरुवाच एतस्मिन्नेवकालेतुसैन्यंभूपस्यसंस्थितं ॥ पार्थस्यप्रमुखंघोरंकालचक्रमिवा
परं ॥ २६ ॥ वीराननेभ्यस्तांबूलंपतितंभूतलेबहु ॥ तेनभूःशुशुभेतत्रइंद्रगोपैरिवावृता ॥ २७ ॥ यथानिशागमेराजन्
द्यौरियंभास्करत्विषा ॥ वीरगात्राणिमुंचंतिचंदनंसमृगोद्भवं ॥ २८ ॥ परस्परस्यसंघर्षात्कंठेभ्योमौक्तिकस्रजः ॥ त्रु
टिताश्चधरापृष्ठेदृश्यंतेजनमेजय॥ २९ ॥ कवचानांकिरीटानांविचित्राणांरणेप्रभाः॥ द्योतयंतिजगत्तत्रनेत्राणिचमिमी
लिरे॥ ३० ॥ चंदनंपतितंवायुरनयद्दिविसर्वतः ॥ पुष्पाणिभूतलान्नाकेगच्छंत्यूर्ध्वंनृशीर्षतः ॥ ३१ ॥ विजेतुंसुरवृक्षा
णांमाल्यानिसुरभीण्यपि ॥ नराणांमुखवासेनसुगंधेनपराजितः ॥ ३२ ॥ भ्रममाणोऽभवद्राजंस्तत्रायंमलयानिलः ॥
गजपुष्करतोयेनसमापिविषमामही॥ ३३॥ कृताहयखुरक्षुण्णैरजोभिःपूरितापुनः॥ रथनादेनघोरेणमेघसागरगर्जितं
॥ ३४॥ जातंमूकमहंमन्येवाचालमपिविश्रुतं॥ पदातिपदविन्यासाद्भूरतीवप्रकंपिता॥ ३५॥ हंसध्वजोऽब्रवीद्वीरान्गृह्णंतु
तुरगंशुभं ॥ तेतस्यवचनाच्छीघ्रंगृहीत्वाहयमागताः ॥ ३६ ॥ पूजितंचर्चितंधूपवासेनबहुधूपितं॥ पद्मव्यूहेनृपस्तंहिस्था

प्यपुत्रैःसहोदरैः ॥ ३७॥ संयुतोभरतश्रेष्ठअर्जुनंयोद्धुमुद्यतः ॥ सुधन्वासुरथश्चैवसुमतिःसचिवस्तथा ॥ ३८ ॥ वीरके
तुस्तीव्ररथःशतधन्वामहारथः ॥ सुमतेरनुजास्त्वेतेतथाऽन्येबहवोनृपाः ॥ ३९ ॥ प्रययुःपुरतःपार्थयोद्धुकामायथासु
खं ॥ ततोदुंदुभिनिःसाणाःपटहामर्दलास्तथा ॥ ४० ॥ तंत्रकीवेणुश्रृंगाणिमृदंगाश्चववादिरे ॥ डिंडिमाःश्रृंगभेदाश्चप
णवाश्चतथानकाः ॥ ४१ ॥ ढक्काढोलास्तथाभेर्योगोमुखाःकाहलास्तथा ॥ झर्झराजलजास्तालावंशामुरलिकावराः ॥
॥ ४२ ॥ ताडितावाद्यकुशलैस्तस्मिन्वीरसमागमे ॥ तेननादेनगिरयःसागराश्चापिचुक्रुशुः ॥ ४३ ॥ कातराणांतुचेतां
सिद्विधाभूतानिभारत ॥ जैमिनिरुवाच पार्थस्तदाब्रवीत्तत्रकृष्णपुत्रमिदंवचः ॥ ४४ ॥ युधिष्ठिराश्वःप्रद्युम्ननी
तोहंसध्वजेनहि ॥ तंतुमोचयितुंवीराःकेगमिष्यंतितद्वद ॥ ४५ ॥ भवान्सपुत्रोबलवान्यौवनाश्वोमहामतिः ॥ अनुशा
ल्वश्चवीरोऽयंकृतवर्माचसात्यकिः ॥ ४६ ॥ वृषकेतुर्महातेजाअनिरुद्धश्चवीर्यवान् ॥ नीलध्वजोऽग्निर्जामातायस्यरा
ष्ट्रेनिरीक्षितः ॥ ४७॥ एतेचान्येचसंत्यत्रतथाऽहमपिसंस्थितः ॥ परराष्ट्रेवयंप्राप्ताःसबलस्यविशेषतः ॥ ४८ ॥ त्वंतुना
थोऽसिसर्वेषामहमग्रेव्रजेऽधुना ॥ प्रद्युम्नउवाच मैवंवदमहाभागविस्मृतंकृष्णभाषितं ॥ ४९ ॥ सर्वस्वंमत्करेदद्
त्तंपांडवाख्यंमहात्मना ॥ पित्राकृष्णेनतदहंसबलःकिंविनाशये ॥ ५० ॥ समक्षंधर्मराजस्यभीमस्यचमहात्मनः ॥ अ
द्यमेभुजयोःपश्यबलंपार्थरणांगणे ॥ ५१ ॥ हंसध्वजंसुधन्वानंसुरथंसुमतिंतथा ॥ तोषयेनिशितैर्बाणैर्बलंचविनिपा
तये ॥ ५२ ॥ एनंनृपवरंविद्धिस्वदाररसिकंरणे ॥ जैमिनिरुवाच प्रद्युम्नस्यवचःश्रुत्वावृषकेतुरुदारधीः ॥ ५३ ॥
नमस्कृत्याब्रवीद्वाग्मीनयुक्तंयुवयोर्वचः ॥ कियत्सैन्यंयुवांचात्रप्रलयोत्पत्तिकारकौ ॥ ५४ ॥ मुखवातेनयोगच्छेत्तूलतु
ल्यबलःपुरः ॥ तदर्थंप्रेषयेत्कोत्रप्रज्वलद्वडवानलं ॥ ५५ ॥ नेत्रपक्ष्मप्रहारेणहन्यतेमशकोयदि ॥ तंहंतुंकश्चमंदात्माता
र्क्ष्यंदिशतिनागहं ॥ ५६ ॥ स्वल्पशीकरवर्षेणयद्रजःपरिशाम्यति ॥ तन्नाशायकथंवर्षन्वरुणोयातिकोपतः ॥ ५७ ॥ त
थाविधमिदंभातियुष्माकमितिमेमतिः ॥ भवद्भ्यामहमादिष्टोनानयेकिंतुरंगमं ॥ ५८ ॥ यमदूतगणैर्बद्धंहरतेहरिकिं
करः ॥ यथासंसारिणंजीवमनंतपदसेवकं ॥ ५९ ॥ तथानयेऽद्यतुरगमाज्ञयाभवतोप्यहं ॥ एषगच्छामिसंग्रामेपार्थ

पश्यतवाहितान्॥ जैमिनिरुवाच निर्ययौकर्णपुत्रोऽग्रेपांडवेननिवारितः॥ ६० ॥ शंखंदध्मौमहातेजाहंसध्वजबलंप्रति॥ रथेनातिविचित्रेणसुपताकेनगर्जता॥ सारथिंप्राहधर्मात्मातुरंगान्तित्तिरिप्रभान्॥ ६१ ॥ ममनोदयसूतेतिपद्मव्यूहेसुदारुणे॥ सारथिस्तत्क्षणादेवकशामुद्यम्यवेगवान्॥ ६२॥ प्रेरयामासतुरगान्जवनान्रणकोविदः॥ वृषकेतुंविलोक्याथसुधन्वावाक्यमब्रवीत्॥ ६३॥ सुधन्वोवाच पद्मव्यूहमदृष्ट्वैवकः समायातिलीलया॥ वृषोऽस्यदृश्यतेरम्योध्वजस्थोनधनंजयः॥ ६४॥ एकएवापरः कश्चिद्वीरः सत्त्वसमन्वितः॥ धनंजयकर्णौ:कीर्णैर्दृश्यंतेकिन्नभूभृतः॥ ६५॥ तस्मादेकोबहून्प्राप्तोध्यनाहत्याधुनाहिनः॥ अहमेनंव्रजाम्यद्यवीरंरणविशारदं॥ ६६ ॥ सूतमांनयभद्रंतेवीरस्यरथसंमुखं॥ तेनसूतेननीतोऽसौसुधन्वारथिनांवरः॥ ६७॥ उभौतौसंस्थितौयुद्धेतत्रतीव्रपराक्रमौ॥ सुधन्वावृषकेतुंहिपप्रच्छमुदितोहसन्॥ ६८॥ सुधन्वोवाच कस्त्वंकस्यात्मजश्चासिकिन्नामतवसुव्रत॥ वृषकेतुरुवाच यंभेत्तुमुद्यतोसित्वंसचास्माकंपितामहः॥ ६९॥ पुत्राणामवरस्तस्ययः कर्णश्चसुतोऽपरः॥ दातॄणामग्रणीर्वीरोनित्यंधीरः समेपिता॥ ७०॥ कश्यपस्यकुलेजातंविद्धिमांवृषकेतुकं॥ सुधन्वोवाच हंसध्वजस्यपुत्रोऽहंसुधन्वानाममेशुभं॥ ७१॥ मधुच्छंदाऋषिः पूर्वमस्माकंवंशकारकः॥ तिष्ठयुद्धेममपुरः पौरुषंत्वंप्रदर्शय॥ ७२॥ तेजस्वीपूर्वजः सूर्योयथाध्वांतमपोहति॥ तथाभवान्शत्रुबलंयुद्धेवारयिताभव॥ स्वकुलंवर्णयंत्येवमंदाः पौरुषवर्जिताः॥ ७३॥ वृषकेतुरुवाच अधुनादर्शयिष्यामिस्वबलंसायकेनहि॥ एतेमदीयानाराचास्तीक्ष्णधाराः सुतेजसः॥ ७४॥ सहसातवसैन्येचगमिष्यंतिमहाहवे॥ वचसायन्मयाप्रोक्तंनानृतंतद्भजायते॥ ७५॥ जैमिनिरुवाच शराणांमहतीवृष्टिस्तेनमुक्ताबलंप्रति॥ सुधन्वानंछादयित्वासिंहनादमथाकरोत्॥ ७६॥ भित्वाशरीराणिशरागजाश्वरथपत्तिनां॥ चक्रुर्जीवितहीनानिवृषकेतोर्महात्मनः॥ ७७॥ सर्वतस्तेनविद्धोसौसुधन्वारथयूथपः॥ बलंनदृश्यतेसर्वंबाणैश्छन्नंनराधिप॥ ७८॥ सुधन्वनोहयान्विध्वासारथिंचमहाध्वजं॥ चिच्छेदतरसायुद्धेप्रहसन्पंचभिः शरैः॥ ७९॥ पुनरेवावृणोत्सैन्यंसर्वेषामेवपश्यतां॥ गार्ध्रपत्रैः सुनिशितैः शतधापातितंभुवि॥ ८०॥ छत्राणिचामराण्येवध्वजां

श्चविविधानपि ॥ तनुत्राणिचसंक्रुद्धोयुधिचिच्छेदकर्णजः ॥ ८१ ॥ हस्तिहस्तोपमान्बाहून्सायुधान्भूषणैर्वृतान् ॥
शिरांसिचमहाबाहुःसंदष्टौष्ठपुटानिच ॥ ८२ ॥ तत्रभिन्नंबलंवीक्ष्यरथमन्यंसमाश्रितः ॥ सुधन्वापौरुषंतस्यबहुधा
ह्यघमन्यत ॥ ८३ ॥ जघानतुरगानस्यसारथिंचमहाध्वजं ॥ तूलराशिनिभंकृत्वापंचभिस्तमताडयत् ॥ ८४ ॥ वृषकेतो
र्धनुश्छिन्नंसतूणंपंचभिःशरैः ॥ भ्रममाणंचतद्गात्रंगतंयत्रमहद्बलं ॥ ८५ ॥ कर्णपुत्रस्यसंग्रामात्तदद्भुतमिवाभव
त् ॥ मूर्छांविहायधर्मात्मायावत्पश्यतिमानिनं ॥ ८६ ॥ तावद्ददर्शतंघोरंसैन्यमध्यस्थितंपुरः ॥ आत्मानंसैन्यमध्यस्थं
बहुभिःपरिवारितं ॥ ८७ ॥ विलोक्यरथहीनंचक्रोधाज्जग्राहतद्धनुः ॥ दृढज्यंप्रमुमोचाथबाणान्हेमविभूषितान् ॥ ८८ ॥
सर्वांगंसायकैश्छिन्नमच्छिन्नमिवधारयन् ॥ हंसध्वजस्यतत्सैन्यंचक्रेजीविवर्जितं ॥ ८९ ॥ ततःपरस्यसैन्येनवेष्टि
तःकर्णनंदनः ॥ शक्तिभिस्तोमरैर्भल्लैर्भिंदिपालैश्चसंगरे ॥ ९० ॥ मुद्गरैरसिभिर्घोरैःसमंताच्चविहन्यते ॥ नाराचैःकरप
त्रैश्चभुशुंडीभिरयोमुखैः ॥ ९१ ॥ गदाभिःपरिघैश्चैवपट्टिशैश्चत्रिशूलकैः ॥ शस्त्रास्त्रैरर्द्यमानंस्वंवपुःकर्णात्मजोबली
॥ ९२ ॥ निरीक्ष्यवासुदेवस्यनामानिसहसाजपन् ॥ ततोऽन्यंचरथंसूतोयोजयित्वामहाध्वजं ॥ ९३ ॥ कर्णात्मजस्य
सान्निध्यंजगामरणमंडले ॥ तंसमारुह्यवेगेनवृषकेतुःपुनःपुनः ॥ ९४ ॥ विव्याधसायकैस्तीक्ष्णैःसुधन्वानंहसन्निव ॥
सैन्यंचपीडयामाससमंताद्बाणवृष्टिभिः ॥ ९५ ॥ सुधन्वाकर्णपुत्रंतंहृदिविव्याधपंचभिः ॥ पुनःसमूर्छामगमद्वृषकेतु
र्महाबलः ॥ ९६ ॥ मूर्छितंसारथिःशीघ्रंवृषकेतुंमहाबलं ॥ रणमध्यादपोवाहतावत्कार्ष्णिःसमागतः ॥ ९७ ॥ प्रद्युम्न
स्तिष्ठतिष्ठेतिसुधन्वानंसमाक्षिपत् ॥ पंचभिस्तंशरैर्घोरैःपीडयामाससंगरे ॥ ९८ ॥ सूतंसुधन्वनोरोषादनयद्यमसादनं ॥ ह
यानांशकलान्येकविंशतिंक्रोधमूर्छितः ॥ ९९ ॥ चकाररथयुक्तानांचतुर्णांनिशितैःशरैः ॥ युगेकृतेऽष्टधाबाणैस्त्रिभिरे
केनकार्मुकं ॥ १०० ॥ प्रद्युम्नेनत्रिशकलंकृतंचित्रंसुधन्वनः ॥ सुधन्वाऽपिरणेज्ञात्वाप्रद्युम्नस्यातिकौशलं ॥ १ ॥ चका
रलीलयायुद्धेपौरुषंस्वंप्रदर्शयन् ॥ संधानमद्भुतंरोषाच्छराभ्यामष्टधाहयान् ॥ २ ॥ युगंत्रिवेणुकंरम्यंकृतंषोढासुधन्व
ना ॥ प्रद्युम्नस्यधनुश्छिन्नंबाणेनैकेनपंचधा ॥ ३ ॥ तेनापिसारथेःकायाच्छिन्नंशीर्षंतदद्भुतं ॥ त्रिभिःकृष्णसुतंविध्वा

सिंहनादंचकारह ॥ ४ ॥ उभौतौबलिनौवीरौमहारणविशारदौ ॥ गगनेभूतलेयुद्धंचक्रतुःखेचराविव ॥ ५ ॥ मूर्छितौ
पतितौबाणैःपीडितौरुधिरोक्षितौ ॥ सुधन्वाप्युत्थितःक्रुद्धोरथमन्यंसमाश्रितः ॥ ६ ॥ ताडयामासपार्थस्यवीरान्बा
णैःसहस्रशः ॥ कृतवर्माणमासाद्यजघाननवभिःशरैः ॥ ७ ॥ कृतवर्मातेनमुक्तांस्त्रिधाचिच्छेदसायकान् ॥ पंचभिःपी
डयामाससुधन्वानंमहोरसि ॥ ८ ॥ सुधन्वाचततोराजन्नवभिःसायकैःक्षणात् ॥ हार्दिक्यंविरथंचक्रेहयान्हत्वाच
सारथिं ॥ ९ ॥ सशरैरर्दितोवीरोरणंत्यक्त्वापलायितः ॥ अनुशाल्वस्ततोवीरःसुधन्वानंमहारणे ॥ १० ॥ समाहूयाब्रवी
द्वीरोगृहीत्वासशरंधनुः ॥ अनुशाल्वउवाच सुधन्वन्बहवोवीरास्त्वयायुद्धेऽद्यतोषिताः ॥ ११ ॥ स्वबलेनसमक्षंमे
परमंकौतुकंहितत् ॥ सहस्वमच्छरंचैकंसर्वेषामेवपश्यतां ॥ १२ ॥ ततोमुमोचनाराचंवडवानलसन्निभं ॥ अनुशाल्वक
रान्मुक्तंवीक्ष्यबाणंसुदारुणं ॥ १३ ॥ छेत्तुंव्यवस्थितोबाणैस्तंशरंनशशाकसः ॥ प्रविष्टोहृदयेबाणस्तदातस्यसुधन्व
नः ॥ १४ ॥ अनुशाल्वस्ततः सेनांदारयामाससायकैः ॥ सुधन्वानंमहाबाहुंनवभिःसायकैर्दृढैः ॥ १५ ॥ विरथंत्वरितं
कृत्वापातयित्वाधरातले ॥ जगर्जचतदावीरस्ततोदैत्याधिपोबली ॥ १६ ॥ अथमूर्छांविहायाशुसुधन्वारथिनांवरः ॥
विव्याधैकेनबाणेनरणेशाल्वानुजंबली ॥ १७ ॥ तेनबाणेनभिन्नोसौनिपपातधरातले ॥ सेनांपार्थस्यविविधांनारा
चैःशतधाभिनत् ॥ १८ ॥ गजानीकंसबहुधाभित्वाचक्रेवसुंधरां ॥ रुधिरौघवतींराजन्विषमांमांसकर्दमां ॥ १९ ॥
गजाननेषुभिन्नेषुहयशीर्षाणिसंगरे ॥ संगतानिस्मदृश्यंतेशतशोथसहस्रशः ॥ २० ॥ द्विधाभिन्नाहयाबाणैःसादिभिः
सहितारणे ॥ पुरोभागेनगच्छंतिपतिताअपिधन्विनः ॥ २१ ॥ नराश्वगजदासेरखराणांरुधिरंतदा ॥ शरैश्छिन्नैर्विभि
न्नानांप्रावहत्सरितंप्रति ॥ २२ ॥ तेछिन्नबाहवोवीरारुधिरौघेणवाहिताः ॥ बाहुदांप्राप्यसकरागगनेचाभवन्क्ष
णात् ॥ इतस्ततोबलंभग्नंविमुखंपांडवस्यतत् ॥ २३ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेसुधन्वनोयुद्धवर्णनंनामा
ष्टादशोऽध्यायः ॥ १८ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
जैमिनिरुवाच जगर्जचसुधन्वातंसमत्यासात्यकिंप्रभुं ॥ नाराचानांनिर्बिभेदतस्मिन्युद्धेजनाधिप ॥ १ ॥ सात्य

किः पंचसप्तत्या भल्लानां स्यंदनं हयान् ॥ सूतं ध्वजं तथा छत्रं त्रिवेणुं तल्पमेव च ॥ २ ॥ नीडं चक्रे पार्श्वधारं चिच्छेदाशु सुध न्वनः ॥ सुधन्वा सात्यकिं क्रुद्धश्चकार विरथं हसन् ॥ ३ ॥ उभौ स्यंदनमारुह्य पुनरेव व्यवस्थितौ ॥ अंबरं बाणसाहस्रैश्छा दयामासतू रणे ॥ ४ ॥ उभौ शरविशीर्णांगौ रुधिरौघप्रवर्षिणौ ॥ किंशुकाविव राजेते वसंते पुष्पितौ नृप ॥ ५ ॥ शक्तिं मु मोच कुपितः सात्यकिं परिपीडयन् ॥ युयुधानः शक्तिघातात्कश्मलं प्रत्यपद्यत ॥ ६ ॥ शैनेयं मूर्छितं वीक्ष्य हाहाकारो म हानभूत् ॥ भयावृतं बलं सर्वमपोवाह तथाकुलं ॥ ७ ॥ ततः पार्थो महाबाहुः सुधन्वानं समागमत् ॥ तिष्ठ तिष्ठेति बहुधा कुतो यासीत्यवोचत ॥ ८ ॥ अर्जुन उवाच जिता मदीया बहवस्त्वया युद्धे महाबल ॥ बलं तवाधिकं वीर शक्रस्ये व महात्मनः ॥ ९ ॥ मया युद्धानि हि पुरा कृतानि सुबहून्यपि ॥ द्रोणभीष्मकृपैः सार्धं कर्णेन च महात्मना ॥ १० ॥ कालखं जैश्च बहुभिः शंकरेणासुरैः सह ॥ तथा न विस्मयो जातो यथा त्वां वीक्ष्य जायते ॥ ११ ॥ सुधन्वोवाच युद्धानि या नि संग्रामे त्वया पार्थ कृतानि हि ॥ तत्र ते सारथिः कृष्णो हितकर्ता यतः स्थितः ॥ १२ ॥ कृष्णहीनोऽसि संग्रामे तेन ते विस्म यो भवत् ॥ त्वया त्यक्तो यदि हरिः कथं त्वं हरिणाधुना ॥ १३ ॥ संत्यक्तोऽसि महाबुद्धे युद्ध एव ममैव तु ॥ युद्धं मया समं पार्थ कर्तुं शक्तोऽसि किं न वा ॥ १४ ॥ तुरंगं तव यूपेऽद्य सन्निबद्धाय थोचितं ॥ हंसध्वजो नृपश्रेष्ठो वाजिमेधं करिष्यति ॥ १५ ॥ अद्य पश्यंतु ते देवाः संग्रामं किल मामकं ॥ संगरे त्वां विजेष्यामि सकृष्णमपि चार्जुन ॥ १६ ॥ जैमिनिरुवाच ततः पार्थो बाणशतं संदधे कोपपूरितः ॥ सुधन्वा तान् शरान्दिव्यांश्चिच्छेद प्रहसन्निव ॥ १७ ॥ दशभिस्ताडयामास शरैः कुंती सुतं हसन् ॥ शतेन च सहस्रेणायुतेन प्रयुतेन च ॥ १८ ॥ बाणानां छादयामास रणे क्रुद्धं धनंजयं ॥ अर्जुनोऽपि शरांस्तस्य चिच्छेद तिलशस्तदा ॥ १९ ॥ आग्नेयास्त्रं मुमोचाथ सृक्किणी परिलेलिहन् ॥ सुधन्वने तिकुपितो बाणवृष्टिं ससर्ज ह ॥ २० ॥ खे न गच्छंति खचराः पार्थसायकभेदिताः ॥ बाणांधकारे पतितं जगत्त्रयमभूत्तदा ॥ २१ ॥ सैन्यं सुधन्वनो दग्धं पावका स्त्रेण भूतले ॥ ज्वालाकुलं वीक्ष्य वह्निदाहयंतं निजं बलं ॥ २२ ॥ सुधन्वा वारुणास्त्रं च जग्राहाग्निनिवारणं ॥ संजाता मह ती वृष्टिस्तेन मुक्तात्स्वकार्मुकात् ॥ २३ ॥ जलदैर्भूतलं व्याप्तं गगने विद्युतः स्थिताः ॥ निमग्नं पांडवबलं शिलावृष्टिभिराह

तं ॥ २४ ॥ बभ्रामसंयुगेचाथशीतेनाथविमोहितं ॥ चातकानांमयूराणामानंदःसुमहानभूत् ॥ २५ ॥ वादित्रा
णिचनष्टानिचर्मनद्धानिभूतले॥सुवर्णचंपकाभेषुलग्नानिसुमृदून्यपि ॥ २६॥ वीरांगेषुनदृश्यंतेवस्त्राणिविविधानिच॥
चामराणिचवर्माणिगजकुंभस्थलानिच ॥ २७ ॥ शोभाहीनानिजातानिजलपातेनसंगरे ॥ बाणाःपक्षविहीनास्तेन
भिंदंतिरणेपरान्॥ २८॥ अतिवृष्ट्यानपश्यंतिस्वंपरंपुरुषाहिते॥ ततोऽर्जुनोमहावीरोवायव्यास्त्रंसमाददे॥ २९ ॥ वा
युनाजलदाभिन्नाध्वजाश्वपरिपातिताः॥ भ्रामितावारणाघोटानरादासेरकाःखराः॥३०॥एतस्मिन्नंतरेवीरःसुधन्वा
पार्थकार्मुकं॥ अर्धचंद्रेणचिच्छेदज्यांहिसूतंत्रिभिःशरैः॥ ३१ ॥शरहीनंपांडवंचचक्रेवीरोऽतिकोपितः ॥ उवाचपा
र्थंभगवान्सारथिस्तेनविद्यते॥ ३२ ॥ शरैःक्षतोसिपार्थत्वंपौरुषंक्वगतंचते ॥ सर्वगंसारथिंत्यक्त्वाप्राकृतःसारथिःकृ
तः॥ ३३ ॥स्मरस्वसूतंकृष्णाख्यंममाग्रेपतितोह्यसि ॥ जैमिनिरुवाच अर्जुनोऽपितुजग्राहतुरगान्स्वान्महाहवे
॥ ३४ ॥ वामहस्तेनधनुषासमंचयुयुधेपुनः ॥ यावत्स्मरतिगोविंदंतावद्दृष्टोरथेहरिः ॥ ३५ ॥मुंचचाश्वानर्जुनेतिव्या
जहारवचोहरिः॥ अथार्जुनोनमस्कृत्यवासुदेवंसमागतं॥ ३६॥ अश्वानांप्रग्रहांस्त्यक्त्वासावधानेनचेतसा ॥ मुमोच
सायकान्घोरान्समंताच्चसुधन्वने॥ ३७॥ वीक्ष्यकृष्णंरथेचास्यसुधन्वावाक्यमब्रवीत् ॥ सुधन्वोवाच दृष्टस्त्वम
सिगोविंदपांडवार्थेसमागतः॥ ३८ ॥ सर्वगत्वंमयाज्ञातंत्वदीयंकिलकेशव ॥ पार्थसूतंहरिंप्राप्यप्रतिज्ञांकुरुमज्जये
॥ ३९ ॥ अहंतुतोषयिष्यामिपौरुषेणरणेजगत्॥ अर्जुनउवाच त्रिभिःशरैःशिरोरम्यंपातयिष्येद्यतावकं॥४०॥
नपातयेयदिपुरःपतंतुममपूर्वजाः॥ निरयेपुण्यहीनास्तेसत्यंसत्यंनमेऽनृतं ॥ ४१ ॥आत्मानंपालयविभोस्त्वांप्रतिज्ञां
वदाधुना॥ सुधन्वोवाच त्वच्छरान्छेद्मिपुरतस्त्रीन्तत्रहरिसन्निधौ॥ ४२ ॥ त्रिधाऽहंनकरोम्यद्यगतिंघोरामवा
प्नुयां॥ एतावदुक्त्वावचनंशतेनमधुसूदनं॥ ४३ ॥ बाणानांहृदयेहर्षात्बिभेदसमरेबली ॥ रथश्चोत्पाटितोबाणैःसह
कृष्णेनमारिष॥ ४४ ॥ साश्वःसपार्थस्तरसाबभ्रामघटचक्रवत्॥ धनंजयंचदशभिःसमंताद्व्यकिरच्छरैः॥ ४५॥ रथः
पार्थस्यनीतोऽसौनल्वमात्रंमहीतले॥ तत्क्षणात्पश्चिमंभागंहंसध्वजसुतेनहि ॥ ४६ ॥ श्रीकृष्णउवाच पश्यपां

डववीरस्यपौरुषंत्वंसुधन्वनः ॥ वृथावधेप्रतिज्ञातंत्रिभिर्बाणैश्चतेऽर्जुन ॥ ४७ ॥ असंमंत्र्यमयासार्धंकृतंयत्साहसंपु
नः ॥ जयद्रथवधेयानिरुद्धप्राणितवचाभवन् ॥ ४८ ॥ विस्मृतानिकथंपार्थनजानासिहिताहितं ॥ रथःपद्भ्यांमयारो
षाद्विधृतोऽपिहिनीयते ॥ ४९ ॥ सुधन्वनःशरेणाद्यनत्वमात्रंपरांदिशं ॥ एकपत्नीव्रतयुतःसुधन्वाऽतीवदृश्यते ॥ ५० ॥
नत्वयानमयातत्तुव्रतंकर्तुंप्रशक्यते ॥ महत्कष्टंव्यवसितंयुद्धेऽस्मिन्प्रतिभातिमे ॥ ५१ ॥ अर्जुनउवाच गोविंद
पातयाम्येनंत्रिभिर्बाणैर्नसंशयः ॥ अभविष्यन्महत्कृच्छ्रंनभवेद्यत्त्वदागमः ॥ ५२ ॥ जैमिनिरुवाच शिलीमुखै
स्ततःपार्थोव्यावृणोत्सदिशोदश ॥ सुधन्वारोषताम्राक्षोविधुन्वन्सशरंधनुः ॥ ५३ ॥ उवाचकेशवंभूयोयथागोवर्धनो
गिरिः ॥ गवार्थंविधृतःकृष्णतथापालयपांडवं ॥ ५४ ॥ ततःपार्थोमहाबाहुःसंदधेकार्मुकेशरं ॥ कालानलनिभंरोषान्मु
मोचास्मैप्रतापवान् ॥ ५५ ॥ तस्मिन्शरेचगोविंदःस्वंपुण्यंसमयोजयत् ॥ गोवर्धनश्चविधृतोरक्षिताधेनवःपुरा ॥
॥ ५६ ॥ तेनपुण्येनबाणोऽस्यसन्नद्धस्तत्क्षणात्कृतः ॥ दिविदेवाश्चसंप्राप्तास्तयोर्युद्धदिदृक्षवः ॥ ५७ ॥ कौतुकार्थंचसं
प्राप्तास्तदात्व्यप्सरसांगणाः ॥ विमानमधिरूढास्तेदिव्यालंकारभूषिताः ॥ ५८ ॥ सुधन्वासंगरेदेवंकृष्णंचहितकारकं ॥
ज्ञात्वाप्रोवाचबलवानेतंछेत्स्यामिसायकं ॥ ५९ ॥ बहुपुण्येनसंयुक्तंपातयेनशरंयदि ॥ सुकृतंमेवृथायातुभुक्तंराक्षस
दस्युभिः ॥ ६० ॥ विज्ञापितोऽसिगोविंदपश्यपुण्यंमयाकृतं ॥ अर्धचंद्रंमुमोचाथपार्थसायकमागतं ॥ ६१ ॥ तेनचि
च्छेदतरसासच्छिन्नःसायकोऽपतत् ॥ विस्मितादेवताःसर्वास्त्रैलोक्यमपिविस्मितं ॥ ६२ ॥ शीघ्रसंधानसंयुक्तंसुधन्वा
नंनिरीक्ष्यतं ॥ द्वितीयंसायकंपार्थोयावद्योजयतेपुनः ॥ ६३ ॥ तावत्कृष्णेनसशरःश्रेयसाबहुलेनच ॥ सन्नद्धःक्षिति
दानेनपांडवंप्रतिरक्षता ॥ ६४ ॥ सुधन्वोवाच अर्जुनार्थंस्वकंपुण्यंयदिगोविंदयोजितं ॥ सायकेऽस्मिन्समक्षं
तेपातयेऽर्जुनसायकं ॥ ६५ ॥ प्रतिज्ञांशृणुवीराद्यधनंजयमहाबल ॥ द्विधाशरंकारयेनवसिष्ठोऽरुंधतीयुतः ॥ ६६ ॥
मयाहतोऽद्यभवतुरक्षबाणंस्वपौरुषात् ॥ धन्योऽसिपार्थवीरस्त्वंयन्निमित्तंस्वकंहरिः ॥ ६७ ॥ पुण्यंददातीहरणेनूनंश्रे
यस्तवाधिकं ॥ ततोमुमोचबाणंससूर्यमंडलसन्निभं ॥ ६८ ॥ पांडवःक्रोधनयनोयथास्वंकृपणोधनं ॥ ब्रुवंतिगगनेदे

वामानवाधरणींगताः ॥ ६९ ॥ किंभविष्यतिकोजेताउभयोर्वीरयोरिह ॥ बाणात्समुत्थितोवह्निर्गगनेसायकोगतः ॥
॥ ७० ॥ अर्जुनस्यकरान्मुक्तःप्रलयंकिंकरिष्यति ॥ ततोमहाबलोवीरःसुधन्वाचातिपौरुषात् ॥ ७१ ॥ द्वितीयंपार्थबा
णंतंमध्येचिच्छेदसत्वरः ॥ शंखंदध्मौस्वकंसैन्यंहर्षयन्पितरंबलात् ॥ ७२ ॥ चकंपेवसुधादेवीबाणेछिन्नेविशांपते ॥ त
तःकृष्णोऽर्जुनंप्राहमाशरंयोजयार्जुन ॥ ७३ ॥ पांचजन्यंपूरयिष्येदेवदत्तंधमस्वच ॥ त्वंमयासहितोवीरमेनंपश्याति
पौरुषं ॥ ७४ ॥ जीविततद्भवेद्धन्यंनृणांकीर्तिसमन्वितं ॥ प्रतिज्ञांस्वमुखात्सत्यांकर्तॄणांस्वर्गकांक्षिणां ॥ ७५ ॥ मयायं
पाल्यमानस्तुदत्वापुण्यंपुरातनं ॥ त्वयावीरेणचतथापतनंनास्यजायते ॥ ७६ ॥ एतावदुक्त्वावचनंवादयामासवैहरिः ॥
पांचजन्यंदेवदत्तमर्जुनोऽपिमहाबलः ॥ ७७ ॥ सपांचजन्योऽच्युतवक्रवायुनाजगत्सपातालवियद्दिगीश्वरं ॥ भृशंस
पूर्णोदरनिःसृतध्वनिःसुकंपयामासयुगात्ययेयथा ॥ ७८ ॥ पूरयित्वापुनःप्राहकृष्णःकमललोचनः ॥ गृहाणसायकंह
स्तेशीघ्रंपार्थममाज्ञया ॥ ७९ ॥ जैमिनिरुवाच गृहीतःसायकोहस्तेपांडवेनमहात्मना ॥ वासुदेवस्तुतंबाणंसुदृ
ढंदेवसंयुतं ॥ ८० ॥ ब्रह्माणंपश्चिमेभागेयोजयित्वाशरस्यहि ॥ मध्येकालंफलेतस्थौस्वयमेवजनार्दनः ॥ ८१ ॥ पुण्यं
रामावतारेयत्कृतंतत्सायकेऽर्पितं ॥ ततोहाहाकृतंसर्वंयदापार्थेनसंधितः ॥ सशरस्तादृशोराजन्सुधन्वावाक्यमब्रवीत्
॥ ८२ ॥ सुधन्वोवाच जानामिगोविंदकृतंत्वदीयंरणेऽर्जुनार्थंसहसावधेमे ॥ शरस्थितंविश्वतनुंभवंतंपार्थप्र
तिज्ञांकुरुसंस्मराद्य ॥ ८३ ॥ अर्जुनउवाच अनेनबाणेननपातयामिशिरस्त्वदीयंसकिरीटमद्य ॥ विभेदनाद्वि
ष्णुगिरीशयोर्यत्पापंसमग्रंममचास्तुवीर ॥ ८४ ॥ सुधन्वोवाच रात्रौशिवस्यापिगतश्चकाशींपूजांहरत्यंघ्रित
लेनपापः ॥ स्नातश्चतीर्थेमणिकर्णिकायांयःकोऽपिसोऽहंनभिदेशरंचेत् ॥ ८५ ॥ जैमिनिरुवाच ततोऽर्जुनःसं
दधेसायकंतंसुदीपितंवह्निशिखावमंतं ॥ निःसारयंतंगगनेऽप्सरोगणान्देवान्भयान्मानवतांनयंतं ॥ ८६ ॥ वादित्रा
णिचसर्वाणिविनष्टानिशरस्वनात् ॥ भ्रांतंमहीतलंबाणात्सुधन्वानव्यमोहत ॥ ८७ ॥ उवाचपार्थंकुपितस्त्वन्निमित्तंम
हाहवे ॥ सर्वेसुराःप्ररक्षंतुबाणंमत्तोहरादयः ॥ ८८ ॥ एषछेद्मिनसंदेहोहाहतोस्मिधनंजय ॥ लज्जांहंसध्वजोराजाप्रा

प्तोतिजननीचसा ॥ ८९ ॥ भार्याचमेविशालाक्षीकुत्स्यतेसाप्रभावती ॥ नृसिंहंत्वामहंवेद्मिपार्थस्यरथसारथिं ॥ ९० ॥
नपरित्यज्यगंतव्यमस्मिन्कालेजनार्दन ॥ तिष्ठगोविंदयुद्ध्यस्वत्वंपार्थकुरुपौरुषं ॥ ९१ ॥ एतावदुक्त्वाकृष्णंतुजग्वाचि
च्छेदसायकं ॥ पपातसायकस्यार्धंमध्येछिन्नंसुधन्वना ॥ ९२ ॥ हाहाकारोमहानासीच्छिन्नेबाणेतथाविधे ॥ स्वबाहुं
ताडयामाससुधन्वारणमध्यगः ॥ ९३ ॥ चंद्रमंडलमेवाथचकंपेबाणनाशनात् ॥ सजलःपूर्वजश्चंद्रोनिर्जलत्वंकिरीटि
नः ॥ ९४ ॥ प्राप्तवान्शरभंगेनतदद्भुतमिवाभवत् ॥ अर्धबाणस्यशीर्षंतद्रम्यंज्वलितकुंडलं ॥ सुधन्वनोऽपिचिच्छेदनि
धानंपौरुषस्यहि ॥ ९५ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेसुधन्वनोवधोनामएकोनविंशोऽध्यायः ॥ १९ ॥ ॥७॥
जैमिनिरुवाच तच्छिन्नंत्वरितंप्राप्तंशिरःकृष्णपदांबुजं ॥ जपन्केशवरामेतिनृसिंहेतिमुदायुतं ॥ १ ॥ अतिवेगेन
बभ्रामकबंधःसमराजिरे ॥ करप्राप्तान्हयान्नागान्रथांश्चिक्षेपवेगवान् ॥ २ ॥ पार्थसैन्यंहतंभूरिकबंधेनसुधन्वनः ॥
गृहीतंतच्छिरोरम्यंकेशवेनपदेस्थितं ॥ ३ ॥ उभाभ्यामपिहस्ताभ्यांसुमुखंपश्यतातदा ॥ मुखाद्विनिर्गतंतेजःप्रविष्टंकेश
वानने ॥ ४ ॥ सुधन्वनोतिसत्वस्यकृष्णोजानातिनेतरः ॥ ततःसकेशवस्तूर्णंचिक्षेपस्वकराद्रथे ॥ ५ ॥ हंसध्वजस्य
तच्छीर्षंरम्यंज्वलितकुंडलं ॥ हंसध्वजोऽपिजग्राहपतितंपुत्रकंरणे ॥ ६ ॥ गृहीत्वासंमुखंवीक्ष्यवचनंचेदमब्रवीत् ॥
हंसध्वजउवाच सुधन्वन्किंकृतंपुत्रकथंतातनभाषसे ॥ ७ ॥ पिताऽहंतेनमांवेत्सिरुष्टोऽसिकिमुसुव्रत ॥ कटाहेत
प्ततैलेत्वंमयाक्षिप्तोऽसिपुत्रक ॥ ८ ॥ पुत्रस्नेहंपरित्यज्यदंडेनपरिपीडितः ॥ प्रतिज्ञासफलायुद्धेकृताकृष्णौचतोषितौ ॥ ९ ॥
प्रभावतीमनसिजःशमितोधीमतात्वया ॥ जैमिनिरुवाच वदनंपुत्रकस्याथचुचुंबेप्रहसन्निव ॥ १० ॥ स्वभालेत
स्यतद्भालंयोजयित्वास्थितोरथे ॥ पुनरेवाहराजासौपुत्रशोकेनपीडितः ॥ ११ ॥ उत्तिष्ठपुत्रपार्थस्यगृहाणतुरगंबला
त् ॥ प्रद्युम्नप्रमुखैर्वीरैःसमंयुद्धंरणेकुरु ॥ १२ ॥ जनन्याभाषितंसत्यंकृतंकुवलयोदितं ॥ शृण्वंतुभ्रातरःसर्वेत्वदीयाः
सुरथादयः ॥ १३ ॥ मयार्थितःसुधन्वाऽसौनब्रूतेनैवगच्छति ॥ तस्यतद्भाषितंश्रुत्वासुरथोवाक्यमब्रवीत् ॥ १४ ॥
सुरथउवाच किमर्थंरोदनंतातक्रियतेद्यत्वयारणे ॥ करेगृहीत्वापुत्रस्यशीर्षंयुद्धेहतस्यच ॥ १५ ॥ हंसध्वजउ

वाच रोदनेकारणंचैकंसंजातंपुत्रकस्यमे॥ छिन्नंशिरोऽस्यपतितंमाधवस्यपदांबुजे॥ १६॥ तत्पदंतुपरित्यक्तंकृष्ण
स्यशिरसाऽमुना॥ महतासुकृतेनापिप्राप्यतेहरिसन्निधिः॥ १७॥ दुष्कृतेनातिघोरेणवियोगस्तस्यजायते॥ किंचास्य
दुष्कृतंघोरंममवापरितिष्ठति॥ १८॥ कृष्णांघ्रिपंकजगतंचंचरीकनिभंशिरः॥ क्षणमात्रंनस्थितंतद्रोदनंममजायते
॥ १९॥ त्यक्तंकृष्णेनसुरथममोपरिसुधन्वनः॥ आगतंपश्यतेभ्रातुःशिरोज्वलितकुंडलं॥ २०॥ एतत्त्यजामिकृष्णस्य
रथेपुत्रशिरोमहत्॥ जैमिनिरुवाच हंसध्वजेनतच्छीर्षंत्यक्तंकृष्णरथेपुनः॥ २१॥ कृष्णोगृहीत्वाचिक्षेपगगने
ऽतर्हितंचतत्॥ हरोगृहीत्वातच्छीर्षंरम्यंज्वलितकुंडलं॥ २२॥ संदधेरुंडमालायांभक्ताभयदशंकरः॥ सुरथोऽपिस्वज
नंप्राहदुःखात्प्रवारयन्॥ २३॥ पश्चाद्यतातमेयुद्धंकृष्णयोश्चमयासह॥ क्रियमाणंसमक्षंतेसर्वेपश्यंतुसैनिकाः॥
॥ २४॥ कृष्णेनस्वमुखेक्षिप्तोममभ्रातामहाबलः॥ तमद्यकेशवंभेत्स्येपार्थंचरथिनांवरं॥ २५॥ यद्ययंपुरतस्तिष्ठेद्देव
कीनंदनोहरिः॥ एतावदुक्त्वावचनंरथमारुह्यसत्वरः॥ २६॥ सैन्येनमहतायुक्तःपार्थंयोद्धुमुपाययौ॥ स्वशंखंपूरयि
त्वाऽग्रेसिंहनादमथाकरोत्॥ २७॥ रसातलंभिन्नमिवसंजातंजनमेजय॥ गृहीत्वासधनुर्हस्तेसुरथःपार्थमब्रवीत्
॥ २८॥ तिष्ठपार्थाद्यसंग्रामेमयासहमहाबल॥ सम्यक्कृष्णार्जुनंपाहिसुरथोऽस्मितवाहितः॥ २९॥ सुधन्वामेहतोभ्रा
तास्वपुण्येनत्वयाहरे॥ बालचेष्टाकृतादेवस्वहानिर्ननिरीक्षिता॥ ३०॥ यथाकश्चिच्छिशुःकृष्णमौक्तिकानिप्रयच्छ
ति॥ गृह्णातिबदराण्येवतथापुण्यंत्वयाऽर्पितं॥ ३१॥ सुधन्वनोजीवितंतुगृहीत्वाबदरोपमं॥ मुक्ताफलंत्वयादत्तंकः
केनपरिवंचितः॥ ३२॥ गोपालोऽसिनसंदेहोनमांजानासिकेशव॥ कुतोगतःसुधन्वामेनाहंपश्यामिबांधवं॥ ३३॥
अद्यपांडवमासाद्यपरोहर्षःप्रजायते॥ जैमिनिरुवाच तंतथाविधमालोक्यपार्थंकृष्णोऽब्रवीद्वचः॥ ३४॥ नचा
स्यपुरतःस्थेयंत्वयापार्थमहाहवे॥ भ्रातृदुःखेनसंतप्तःसुकृतीचमहाबलः॥ ३५॥ अन्येगच्छंतुवैवीराःसुरथंयोधितुं
रणे॥ भवान्गंताऽद्यचेद्वीरंमहानर्थोभविष्यति॥ ३६॥ अर्जुनउवाच अशुभानांसहस्राणित्वयाभग्नानिमेहरे॥
अनेनसुरथेनाद्यानर्थःकीदृग्भविष्यति॥ ३७॥ श्रीकृष्णउवाच द्वितीयांसृष्टिमारब्धुंवीक्ष्यचैनंरणेस्थितं॥ पिता

महस्यमहतीचिंताजायेतसर्वदा ॥ ३८ ॥ सुरथस्यबलंभूरिस्वल्पंतवधनंजय ॥ त्वयाममतंकार्यंकृतमस्तिपुरासदा ॥
॥ ३९ ॥ प्रद्युम्नप्रमुखावीराःपातयंतुमहावे ॥ उपायोविद्यतेनास्यपातनेपांडवर्षभ ॥ ४० ॥ त्वदर्थंसुकृतंदत्तंसुधन्वाकृ
च्छ्रतोहतः ॥ किंचिद्यस्यभवेत्पार्थदुष्कृतंसुकृतंबहु ॥ ४१ ॥ विजयेतस्यजायंतेसिद्धयोऽत्रनसंशयः ॥ केवलंसुकृतं
चास्यशरीरेपरितिष्ठति ॥ ४२ ॥ यस्मिन्क्षणेनपुंसोऽत्रसुकृतंविद्यतेऽनघ ॥ व्याघ्रतस्कर राजन्यसर्पाग्नीनांभयंभवेत् ॥
॥ ४३ ॥ तस्मिन्क्षणेनसंदेहःकुतःसुकृतकारिणां ॥ जैमिनिरुवाच समाहूयाब्रवीत्पुत्रंमाधवोरुक्मिणीसुतं ॥
॥ ४४ ॥ सर्वथाबहुभिर्वीरैःपातनीयोमहाबलैः ॥ सुरथोरणमध्येतुगृहीत्वायामिपांडवं ॥ ४५ ॥ कृष्णस्यवचनात्सर्वे
प्रद्युम्नाद्याविनिर्ययुः ॥ अर्जुनस्यरथंकृष्णःप्रेरयामाससंगरात् ॥ ४६ ॥ योजनानांत्रयंभूमिर्यत्रतिष्ठतिसत्वरः ॥ पश्चा
द्युद्धंसमभवत्सुरथेनापरैःसह ॥ ४७ ॥ सुरथस्तत्रकोपेनभ्रातृहंतारमाहवे ॥ योद्धुमायात्ततस्तौतुनदृष्टौकृष्णपांडवौ ॥
॥ ४८ ॥ सुरथस्तुततोवाक्यंरणेप्राहप्रतापवान् ॥ शत्रुंसुधन्वनोनात्रपश्यामीतिरणांगणे ॥ ४९ ॥ शिशुभिःसहयोद्ध
व्यंमयाशोच्यैःकथंत्विह ॥ अपराधिनावुभावेतौकृष्णपार्थौनसंशयः ॥ ५० ॥ एतान्कृत्वातुपुरतःपलाय्यान्यत्रसंस्थि
तौ ॥ एतान्निवार्यपश्चात्तौहन्मियुद्धेमहाबलौ ॥ पातालेचांतरिक्षेवाक्वयास्येतेममाग्रतः ॥ ५१ ॥ एतत्सर्वंविनिश्चित्य
सुरथःप्राहसैनिकान् ॥ सैन्यमध्येनपश्यामिक्वयातौकृष्णपांडवौ ॥ ५२ ॥ सैनिकाऊचुः किंवृथाजल्पसेवीरप्रा
कृतःकातरोयथा ॥ येस्थिताःपुरतोयुद्धेतैस्त्वंयुध्यस्वसंगरे ॥ ५३ ॥ पश्चाद्द्रक्ष्यसितंकृष्णंपार्थंचतववैरिणं ॥ एतावदु
क्तातैःसर्वैःसुरथःपरिवारितः ॥ ५४ ॥ सुरथस्तान्महावीरान्नाराचैःसमपोथयत् ॥ केचिन्निपतितावीराःकेचिन्मध्ये
विदारिताः ॥ ५५ ॥ गदयाछिन्नशिरसोहतवाहाःस्मशेरते ॥ हाहाभूतंबलंसर्वंकृतंवीरेणतत्क्षणात् ॥ ५६ ॥ योजनानां
त्रयंसैन्यंमध्येव्यूहस्ययत्स्थितं ॥ भिन्नंतत्तेनराजेंद्रप्राप्तस्तत्रयतोहरिः ॥ ५७ ॥ ददर्शकेशवंवीरंपार्थंचरथिनांवरं ॥
वासुदेवंतुबाणौघैःसमंताद्व्यकिरत्तदा ॥ ५८ ॥ पार्थोऽपिविद्धोराजेंद्रसायकैःकंकपत्रिभिः ॥ धनंजयस्त्वंसमरेतिष्ठति
ष्ठेतिचाब्रवीत् ॥ ५९ ॥ ततोबाणसहस्रेणससूतंसहयंनृप ॥ ताडयामासवेगेनसुरथंशत्रुतापनं ॥ ६० ॥ धनुश्चिच्छेद

सगुणंध्वजंचसपताकिनं ॥ रथश्चतिलशस्तस्यसुरथस्याहवेकृतः ॥ ६१ ॥ हयान्निहत्यचबलात्तंविव्याधशतेनच॥ सुरथःपांडवंवीरंचकारशरपूरितं॥ ६२॥ नानाशस्त्रैस्तथास्त्रैश्चतयोर्युद्धमभून्नृप ॥ ततःसकेशवोराजन्पांडवंप्राहसंग रे॥ ६३॥ पश्यवीरस्यधैर्यंत्वंयुद्धंचकुरुतेयथा॥सुधन्वनोवियोगेनमन्येसैन्यंवधिष्यति ॥ ६४ ॥ एनंत्यक्त्वागतश्चाहं नमांत्यजतिचार्जुन॥अयमेवाग्रतोयोद्धादृश्यतेऽत्रत्वयामया॥ ६५॥ पश्यबाणैर्जगद्व्याप्तंनास्यवीर्यंप्रलीयते ॥ कृ ष्णस्यवचनात्पार्थःकुपितोवाक्यमब्रवीत्॥ ६६॥ अर्जुनउवाच एनंदेवहनिष्यामिमहावीरंतवाग्रतः ॥ नासा ध्यंविद्यतेकिंचित्प्रसादात्तवकेशव॥६७॥ जैमिनिरुवाच ततोजघानसुरथंसायकानांशतेनच॥सुरथस्यरथो वेगाद्गगनेतत्क्षणंगतः ॥ ६८ ॥ पार्थंविव्याधकृष्णंचशरैश्चित्रैःशिलाशितैः ॥ उवाचप्रहसन्वीरःपांडवंश्वेतवाहनं॥ ॥६९॥ रथंतेभेद्मिबाणैर्घैस्त्वंपार्थपरिपालय॥शरप्रहाराभिहतोरथोबभ्रामभूतले॥७०॥ अर्जुनस्यसकृष्णस्यसरुद्रस्य महारणे॥ ततःपश्चांरथंपीड्यवासुदेवःक्रुधान्वितः॥७१॥ धरांप्रवेशयित्वाऽग्रेतथाऽपिपरिनीयते॥ नरथःस्थितएवा त्रकृष्णोविस्मयमाययौ॥ ७२॥ शिलाशितैर्गार्ध्रपत्रैर्भिन्नौकृष्णार्जुनावुभौ॥ पांचजन्यंपूरयित्वादेवदत्तंधनंजयः ॥ ॥७३॥कृष्णश्चतरसारोषात्पांडवंवाक्यमब्रवीत्॥ श्रीकृष्णउवाच मयाधृतोऽपिहिरथःसुरथस्याशुगेनतु॥ नीय तेऽत्रबलादेवविरथंसुरथंकुरु॥ ७४ ॥ ततोऽर्जुनोरणेक्रुद्धस्तस्यदिव्यंमहारथं ॥ सहयंसध्वजंबाणैःससूतंशतधाच्छि नत्॥ ७५॥ विरथःसुरथोराजन्पांडवेनरणेकृतः॥ तावत्पवनपुत्रेणस्वलांगूलेनवेष्टितः॥ ७६ ॥रथःपार्थस्यभूमध्येसु बद्धस्तत्क्षणात्कृतः ॥ संधारितश्चकृष्णेननजगामस्थितःपुनः ॥ ७७॥ सुरथउवाच वेद्मिकेशवभारेणनद्धं पार्थरथंतव॥ उभाभ्यांनीयतेयोऽधस्तमहंचोद्धरेपुनः॥ ७८ ॥ गृहीत्वास्यंदनस्येषांस्वबलेननृपात्मजः ॥ मग्नंरथंसमु त्थाप्यपुनःप्रोवाचहर्षितः॥ ७९॥ वदपार्थकुतोयुद्धाच्चिक्षिपामिरथंतव ॥ सागरेवाथमेरौवातस्मिन्वाहस्तिनापुरे ॥ ॥८०॥ रथस्थेनापिपार्थेनताडितःपंचभिःशरैः ॥ सुरथोमूर्छितोराजन्मुक्तःसचरथःकरात्॥ ८१ ॥ मूर्छांविहायसुर थोरथमन्यंसमाश्रितः॥ तावुभौक्रूरनयनौपुनरेवाप्ययुद्ध्यतां॥८२॥ अर्धचंद्रैश्चनाराचैर्वत्सदंतैःशिलीमुखैः॥ वाराह

कर्णनालीकैः क्षुरप्रैः कंटकामुखैः ॥ ८३ ॥ सुरथउवाच प्रतिज्ञांकुरुवीराद्यपार्थसत्यांतुकांचन ॥ प्रतिज्ञातेनात्र तात्रसंजातेतिपुराश्रुतं ॥ ८४ ॥ अर्जुनउवाच त्वामहंपातयिष्यामिसमक्षंजनकस्यते ॥ प्रतिज्ञातंमयावीरत्वं ब्रूहिस्वांयथोचितां ॥ ८५ ॥ सुरथउवाच त्वामहंपातयिष्यामिरथाद्भूमाविहार्जुन ॥ नकुर्यांचेद्वचःसत्यंसुकृतंमे प्रणश्यतु ॥ ८६ ॥ जैमिनिरुवाच एतस्मिन्नंतरेवीरःपार्थंचशरवृष्टिभिः ॥ छादयामासराजेंद्रपांडवोऽपितथा करोत् ॥ ८७ ॥ शतमष्टोत्तरंपार्थोरथानांसुरथस्यच ॥ व्यधमच्छतधारोषाद्बलंचनिहतंबहु ॥ ८८ ॥ अर्धचंद्रेणसुरथ श्चिच्छेदास्यमहात्मनः ॥ कार्मुकज्यांसनाराचैःपांडवंप्रत्यविध्यत ॥ ८९ ॥ पुनःकृत्वाऽर्जुनःस्वंहिकार्मुकंगुणसंयुतं ॥ विरथंराजपुत्रंतंशस्त्रास्त्रैश्चसमन्वितं ॥ ९० ॥ अर्धचंद्रेणविव्याधबाहुमूलेधनंजयः ॥ छिन्नोऽस्यदक्षिणोहस्तोनानालं कारमंडितः ॥ ९१ ॥ निपपातधरादेशेविस्फुरन्संमुखोऽर्जुनं ॥ सुरथोवामहस्तेनगृहीत्वामहतींगदां ॥ ९२ ॥ पार्थस्य तुरगान्क्रुद्धोजघानचजनार्दनं ॥ सहस्रंसगजानांचपातयामासभूतले ॥ ९३ ॥ द्वेसहस्रेरथानांचहयानामयुतंरणे ॥ इ तस्ततोधावमानःसुरथोरथिनांवरः ॥ ९४ ॥ तिष्ठपार्थहरेतिष्ठतिष्ठंतुबलिनोनृपाः ॥ ब्रुवन्जघानतरसापत्तीनामयुतं बली ॥ ९५ ॥ ततोर्जुनेनवामोऽस्यसगदःपातितःकरः ॥ कराभ्यांवर्जितोवीरःसुरथःपार्थमब्रवीत् ॥ ९६ ॥ आत्मानं रक्षपार्थाद्यरथंपालयमाधव ॥ धनंजयंनिजंमित्रंप्राप्तोऽस्मितवचाहितः ॥ ९७ ॥ जैमिनिरुवाच धावमानोम हावीरश्छिन्नहस्तोऽर्जुनंप्रति ॥ तमायांतंतदापार्थश्चतुर्भिःसायकैर्नृप ॥ संधानमकरोच्चापेश्टणुपार्थेनयत्कृतं ॥ ९८ ॥ एकेनहृदयंभित्वाद्वाभ्यांपादौचचिच्छिदे ॥ छिन्नपादोऽपिसुरथोयावद्यातिरथंप्रति ॥ ९९ ॥ सर्वदेवमयेनाथबाणेना स्यमहच्छिरः ॥ सकुंडलंदीर्घनेत्रंतावच्चिच्छेदपांडवः ॥ १०० ॥ छिन्नपादंकबंधंतद्धावमानमितस्ततः ॥ पातयामास बहुलंसैन्यंपार्थस्यकूटवत् ॥ १ ॥ शिरोलग्नंपार्थभालेमूर्छितस्तेनपांडवः ॥ भूमौपपाततच्छीर्षंकृष्णस्यपदमन्वगात् ॥ ॥ २ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेसुरथवधोनामविंशतितमोऽध्यायः ॥ २० ॥ ॥ छ ॥ ॥ छ ॥ जैमिनिरुवाच कृष्णोगृहीत्वातच्छीर्षंहस्ताभ्यामब्रवीत्ततः ॥ समुत्थाप्यार्जुनंभूम्याःसमारोप्यस्वकेरथे ॥ १ ॥ वेत्सि

पार्थमहाबाहुंसुरथंतथ्यवादिनं ॥ प्रतिज्ञापालितायेनकृतासत्याममांतिके ॥ २ ॥ अर्जुनउवाच पातितोऽस्य
मुनादेवत्वत्प्रसादात्पुनःस्थितः ॥ तन्नकौतुकमेवात्रधन्योऽयंनेतरोजनः ॥ ३ ॥ तद्देहिममहस्तेऽद्यवंदाम्येतच्छिरोमह
त् ॥ यथाशूरत्वमायामिस्पर्शात्तुशिरसोहरे ॥ ४ ॥ गृहीत्वातत्स्वयंपार्थोववंदेश्मश्रुलंरणे ॥ कृष्णःसस्मारगरुडंस्मृत
मात्रःसमागतः ॥ ५ ॥ वैनतेयोनमस्कृत्यस्वनाथंचाग्रतःस्थितः ॥ श्रीकृष्णउवाच गृहीत्वैतद्विशालाक्षंशिरस्त्वं
सुरथस्यच ॥ ६ ॥ प्रयागेपातयाशुत्वंनियोगान्ममकाश्यपे गरुडउवाच जलमात्रंतत्रगंगायमुनाचसरस्वती
॥ ७ ॥ पातितेनूनमेतस्यकिंकार्यंचभविष्यति ॥ माधवोऽत्रभवान्भातिकिमर्थंनीयतेमया ॥ ८ ॥ गंगाजलेमनुष्य
स्ययावदस्थिप्रतिष्ठते ॥ तावत्सदेहीस्वर्गस्थःकुरुतेऽमृतभोजनं ॥ ९ ॥ तवाननेमहत्तेजःप्रविष्टंसुरथस्यहि ॥ तथाऽ
पितत्रयास्यामिसतामाज्ञागरीयसी ॥ १० ॥ तवदासोऽस्मिगोविंददीयतांमत्करेशिरः ॥ श्रीकृष्णउवाच पाव
नंतत्प्रयागंमेभविष्यत्यमुनाखग ॥ ११ ॥ कोशेमदीयेवीरस्यशिरोरत्नंप्रपातय ॥ जैमिनिरुवाच वैनतेयोगृही
त्वाथसुरथस्यमहच्छिरः ॥ जगामगगनेयावत्तावत्तद्ददृशेहरः ॥ १२ ॥ पार्वतीसहितोनाकेवृषारूढोगणैर्वृतः ॥ कैलास
नाथोभगवान्वरदःशूलधारकः ॥ १३ ॥ चराचरगुरुःशंभुःसृष्टिकृल्लोकपालकः ॥ पितामहादिदेवानामाराध्यःसुरथ
स्यकं ॥ १४ ॥ नीयमानंकाश्यपिनाप्रयागंप्रतिमारिष ॥ उवाचभृंगिंलोकेशोयाहित्वंगरुडंप्रति ॥ १५ ॥ पार्वतीप्रत्यु
वाचाथकिमेतन्नीयतेऽमुना ॥ गरुडेनविरूपाक्षपरंकौतूहलंहिमे ॥ १६ ॥ श्रीशिवउवाच अर्जुनेनहतोवीरःशि
रोऽस्यगरुडःशुभे ॥ आदिष्टःकिलकृष्णेनप्रयागेयातिपातितुं ॥ १७ ॥ मयायंप्रेरितोभद्रेसमानेतुंममांतिकं ॥ भृंगिस्त
न्मुंडमालार्थंशिरोज्वलितकुंडलं ॥ १८ ॥ भ्रातुरस्याहृतंपूर्वंशिरःकमललोचने ॥ सुरथस्यद्वितीयंमेभविष्यतिसुभूष
णं ॥ १९ ॥ धर्मिष्ठानांवदान्यानांकृतज्ञानांसदामया ॥ शूराणांजितकामानांशिरसांमंडनंमहत् ॥ २० ॥ ध्रियतेकि
लवामोरुनेतरेषांकदाचन ॥ जैमिनिरुवाच महादेवस्यवचनंश्रुत्वाभृंगिःखगाधिपं ॥ २१ ॥ प्राप्यवेगेनमहताचेदंव
चनमब्रवीत् ॥ भृंगिरुवाच वैनतेयमहाभागदेहित्वंमत्करेशिरः ॥ २२ ॥ त्वत्तोबलाद्ग्रहीष्यामिनमांवेत्सिखगाधि

प॥ २२ ॥ नाहंसर्पोवैनतेयभयंकुर्वैनतावकं॥ मुंचमुंचनजानासिममतेजःसुदारुणं॥ २३ ॥ ततस्तंगरुडोभृंगिंपक्षा
भ्यामवधूयहि॥ जगामतीर्थराजेहिभृंगिस्त्रिनयनंगतः॥ २४ ॥ पक्षवातेनघोरेणतरसाशुष्कपर्णवत्॥ पार्वतीतंसमी
क्ष्याथप्रहसंतीवचोऽब्रवीत्॥२५॥ पार्वत्युवाच शिवदूतनजानासिगरुडंहरिवाहनं॥यस्यत्वंपक्षवातेनप्राप्तोऽसिह
रसन्निधौ॥ २६ ॥ शुष्कगात्रंकथंदूतंबलहीनंहिशंकर॥ भवांस्तन्नोदयेद्वीरंगरुडंपन्नगाशनं ॥ २७॥ वृषोवृद्धोयस्य
पत्रंप्रियासागरगामिनी॥ गजचर्मपरंवस्त्रंशस्त्रंखट्वांगमेवच ॥ २८॥ प्रियावचनमाकर्ण्यप्रसन्नःशंकरोऽब्रवीत् ॥
श्रीशंकरउवाच वृषगच्छमयाज्ञप्तोवैनतेयात्समानय॥ २९ ॥ यथादूतबलंवेत्तिपार्वतीवरवर्णिनी॥ नंदीहरसमा
दिष्टोजगामगरुडंप्रति॥ ३० ॥ गृहीतुंतच्छिरोरम्यंकोपेनमहतायुतः॥ वृषनासाप्रवातेनगरुडस्यकलेवरं॥ ३१ ॥ ब
भ्रामभूतलंसर्वंतस्मिन्कालेविशांपते॥ नशशाकस्ववातेननीयमानंखगाधिपं॥ ३२ ॥ तदाधारयितुंरोषात्तूलंगजइ
वांगणे॥ वनानिसरितश्चैवगिरीन्यातिचसागरान्॥ ३३ ॥ सत्यलोकंचकैलासंवैकुंठमपिपावनं ॥ ततोदैववशादेव
प्रयागमगमत्खगः॥ ३४ ॥ मुमोचतीर्थेतत्राशुकृष्णवाक्यमनुस्मरन्॥ पातितंजलमध्येतुगृहीतंनंदिनातदा॥ ३५ ॥
गरुडोऽपिमहाविष्णुंपुनःप्राप्तोहसन्निव ॥ नंदीददौशंभुकरेशिरोज्वलितकुंडलं ॥ ३६ ॥ शंभुनामुंडमालायांमध्येरत्नं
शिरःकृतं॥ हंसध्वजोऽपितंपुत्रंपतितंवीक्ष्यसत्वरः॥ ३७ ॥ रथमारुह्यसबलःप्रायाद्योद्धुंधनंजयं ॥ कंपितापृथिवीदे
वीशेषोपिचलितोऽभवत्॥३८॥ तंवीक्ष्यकुपितंवीरंसबलंतरसाहरिः॥ रथात्समुत्तीर्यतदाप्रसार्यस्वकरौस्थितः॥३९॥
उवाचकेशवोवीरंहंसध्वजमकल्मषं॥ श्रीकृष्णउवाच आलिंगनंदेहिविभोप्रीतिश्चमहतीत्वयि ॥ रणात्कोपंप
रित्यज्यपुत्रशोकंचमारिष॥ ४० ॥ हंसध्वजोवीक्ष्यहरिंरथाद्भूमिमगात्तदा॥ समालिंग्यहरिंतस्थौप्रहसन्वाक्यमब्रवी
त्॥ ४१ ॥ हंसध्वजउवाच प्राप्तोऽस्म्यनाथोनाथंत्वांपुत्रशोकश्चकीदृशः॥ भवाद्भयंनमेदेवनान्यतोवानकाल
तः॥ ४२॥ श्रीकृष्णउवाच मुंचाश्वंपांडवंरक्षगमिष्यामियुधिष्ठिरं॥ यथाऽहंपांडवस्यार्थेसंत्यजामिकलेवरं॥
॥ ४३ ॥ तथाभवानपिरणेपालयत्वेनमर्जुनं॥ पार्थपश्यसखायंमेरथोपरिसुसंस्थितं॥ ४४ ॥ ततोऽर्जुनंसमानीयके

शवः क्लेशनाशनः ॥ उभयोः संगमं कृत्वा मोचयित्वा तुरंगमं ॥ ४५ ॥ पंचरात्रं स्थितस्तस्मिन्नगरे केशवो गतः ॥ युधिष्ठि
रस्य नगरं प्राप्य सर्वं न्यवेदयत् ॥ ४६ ॥ तुरगो बंधनान्मुक्तः परिबभ्राम मेदिनीं ॥ तमनुप्रययौ पार्थो मरालध्वजसंयुतः ॥
॥ ४७ ॥ प्रद्युम्नप्रमुखैर्वीरैः पाल्यमान उदङ्मुखः ॥ मुक्तमात्रः स तुरगः प्राप्तो देशान्भयानकान् ॥ ४८ ॥ रथिभिः पंचभिः
सार्धं पार्थस्तं नैव मुंचति ॥ हंसध्वजो विशालाक्षो रुक्मिणीतनयस्तथा ॥ ४९ ॥ अनुशाल्वो महाबाहुर्वृषकेतुर्महाबलः ॥
सुवेगः पंचमश्चैव सर्वे पश्यंति पांडवं ॥ ५० ॥ तुरगो जलपानार्थं प्रविष्टो नलिनीयुतं ॥ महत्सरोऽभवत्तत्र तुरगी निर्गता
बहिः ॥ ५१ ॥ तां वीक्ष्य विस्मिताः सर्वे किमिदं दैवकारितं ॥ तुरगस्तुरगी जाता वनं चैतत्सुदारुणं ॥ ५२ ॥ पृष्ठतोऽनुययुः
सर्वे ततः प्राप्ताऽपरं सरः ॥ प्रविष्टा जलमध्ये सा ततो व्याघ्री बभूव ह ॥ ५३ ॥ अब्रुवन्पार्थमुख्यास्ते किमिदं हि भविष्यति ॥
निर्ययौ सोऽपि मृगयुस्तस्मात्तोयाज्जनाधिप ॥ ५४ ॥ जनमेजय उवाच आश्चर्यं भवता चोक्तं वने तस्मिन्महामु
ने ॥ किं कारणं जले तस्मिन्प्रविष्टे तुरगे तदा ॥ ५५ ॥ तत्क्षणाद्वडवा जाता कारणं तत्र किं द्विज ॥ किं तत्सरो वनं किं तद्वडवा
केन हेतुना ॥ ५६ ॥ जाता पुनर्व्याघ्रतां च सर्वं संशयितं विभो ॥ स कथं तुरगो जातः पुनरेव वदस्व तत् ॥ ५७ ॥ जैमिनि
रुवाच शृणु राजन्पुरावृत्तं वने चास्मिन्सरोवरे ॥ उमा वनं सरो रम्यं तया तप्तं महत्तपः ॥ ५८ ॥ रुद्रः प्रसन्नः सततं मम
भूयादितीच्छया ॥ तपश्चरामि भो स्वामिन्विघ्ननाशं सदा कुरु ॥ ५९ ॥ इति संकल्प्य सा देवी चिरं तेपे महत्तपः ॥ तत्र क
श्चिद्दुराचारो दैत्यो विघ्नार्थमागमत् ॥ ६० ॥ स प्राह देवीं तत्रस्थां किमर्थं तप्यसे तपः ॥ वपुस्ते सुंदरं भद्रे किमलभ्यं तवाधु
ना ॥ ६१ ॥ सर्वदा स्याम्यहं तुभ्यं मम भार्या भवानघे ॥ निशम्य नीचवाक्यानि सा देवी कुपिता च तं ॥ ६२ ॥ शशाप रोषता
म्राक्षी भस्मीभव सुदुर्मते ॥ ततस्तं भस्मसात्कृत्वा प्राह सा वनदेवताः ॥ ६३ ॥ अद्य प्रभृति मद्वाक्याद्वने चास्मिन्सरोवरे ॥
आगमिष्यति यः कश्चिन्मामवज्ञाय मूढधीः ॥ स्त्रीलिंगचिह्नितो नूनं भविष्यति न संशयः ॥ ६४ ॥ तदा प्रभृति भो राजन्प्र
विशेद्यः पुमान्कुधीः ॥ स्त्रीचिह्नं दृश्यते सद्यो देव्याः शापेन पांडव ॥ ६५ ॥ अतोऽयं तुरगः सद्यो जलस्पर्शेन तत्क्षणात् ॥ वड
वात्वं समापन्नस्तत्सर्वं शापकारणं ॥ ६६ ॥ यस्त्वयात्यपरः प्रश्नो हरिर्व्याघ्रो यथाभवत् ॥ तमाकर्णय राजेंद्र पृच्छतः क

थयामिते ॥६७॥ पुराकृतयुगेविप्रअकृतव्रणसंज्ञकः ॥ पर्यटन्सकलांपृथ्वींतीर्थयात्रार्थमादरात् ॥ ६८ ॥ तत्रतत्रतप
स्तप्त्वाकदाचित्कालपर्ययात् ॥ इमंदेशमनुप्राप्तोदृष्ट्वाचैतन्महत्सरः ॥ ६९ ॥ स्नातुंप्रविष्टःशुद्धात्माजपन्मंत्रांश्चवारु
णान् ॥ पीत्वास्नात्वाचविधिवन्निर्गतःसजलाद्बहिः ॥ ७० ॥ जलग्राहस्तस्यपादेकश्चिल्लग्नःसुदारुणः ॥ दंतैस्तुदंतंतमृषिं
कर्षयंतंमहाजले ॥ ७१ ॥ दृष्ट्वातंदारुणंग्राहंकर्षयंतंपुनःपुनः ॥ कोऽयंदुष्टतरःप्राप्तोजलेऽस्मिन्कर्षतेबलात् ॥ ७२ ॥ दै
त्योवादानवश्चायंमत्स्योदुष्टतरोऽथवा ॥ दुष्टेजलेप्रवेशोऽद्यकथमासीन्मतिर्मम ॥ ७३ ॥ इतिसंचिंत्यमनसाकोपावि
ष्टोऽभवन्मुनिः ॥ शशापतज्जलंदुष्टंजलस्थांतत्रदेवतां ॥ ७४ ॥ अस्मिन्जलेसुदुष्टेहियस्तुस्पर्शंकरिष्यति ॥ सतुव्याघ्रो
भवेत्सद्योनानृतंममभाषितं ॥ ७५ ॥ इत्युक्त्वाप्रययौविप्रोमोचयित्वाग्रहंबलात् ॥ तदाप्रभृतिपानीयमेतद्दुष्टमभून्नृप
॥ ७६ ॥ इतिपृष्टंत्वयायत्तुतत्सर्वंकथितंमया ॥ भूयःकथंसतुरगोजातस्तत्तुनिबोधमे ॥ ७७ ॥ अर्जुनस्तुरगंदृष्ट्वाव्या
घ्ररूपंभयानकं ॥ मनसाचिंतयामासविष्णुंसर्वभयापहं ॥ ७८ ॥ यस्यप्रभावान्मुक्ताःस्मोदुर्योधनभयात्पुरा ॥ सदेवः
पातुमांत्वत्रविषमेऽस्मिन्सुदारुणे ॥ ७९ ॥ सैनिकान्मोहयन्रात्रौदिवाचयदुनंदनः ॥ यज्ञंयुधिष्ठिरस्याद्यसिद्धिंनयतु
सोऽच्युतः ॥ ८० ॥ इतिध्यात्वाहरिंपार्थस्तस्थिवानकुतोभयः ॥ तस्मिन्क्षणेव्याघ्ररूपंत्यक्त्वाचाश्वोऽभवत्पुनः ॥ ८१ ॥
पूर्वरूपंहयंदृष्ट्वाहर्षात्तेननृतुर्भृशं ॥ नानाविधानिवाद्यानिवादयंतोमुदाययुः ॥ ८२ ॥ ततोदैववशाज्जातःपुनःसतुरगो
ययौ ॥ नानाविधांस्ततोदेशांस्त्रीमयान्सुरसानपि ॥ ८३ ॥ स्त्रियश्चसंतिगहनाःसुरूपानवयौवनाः ॥ राज्यंनारीचकुरु
तेनपुमांस्तत्रजीवति ॥ ८४ ॥ यस्तासांसंगतिंकुर्याद्रूपलावण्यमोहितः ॥ मुखवासेनरम्येणनयनांचलताडितः ॥ ८५ ॥
गीतेनाथचनृत्येनहास्येनमृदुभाषितैः ॥ मासमात्रंस्त्रियंप्राप्यपश्चात्प्राप्नोतिवैशसं ॥ ८६ ॥ रतंसमतरंकृत्वाविषमंदं
शनंपुनः ॥ नखप्रहारैर्विविधैर्हाहतास्मीतिभाषणैः ॥ ८७ ॥ ताडनैर्मुष्टिघातैश्चग्रहणैर्मुखचुंबनैः ॥ जिह्वाघातेनसमदं
कूजितैःपक्षिसन्निभैः ॥ ८८ ॥ वंदनैर्वीक्षणैर्वक्रैस्त्वदासीतिभाषणैः ॥ आगतोऽसिगतश्चासित्वयाकान्यास्मृताऽधु
ना ॥ ८९ ॥ जननीतवकाप्राप्ताभगिनीगच्छमद्गृहात् ॥ भावलाभेनसहितःसंजातोवदसुव्रत ॥ ९० ॥ एवंविधैर्वचो

भिस्ताःकुर्वंतिगतजीवितं ॥ तेनैवस्वेनलिंगेनप्रविशंतिहुताशनं ॥ ९१ ॥ काचिज्जीवतिसागर्भंधत्तेकन्यांप्रसूयते ॥ प्र
विष्टस्तुरगःपार्थोवीरैःपंचभिरावृतः ॥ ९२ ॥ उवाचतान्महावीरान्वयंस्त्रीमंडलेस्थिताः ॥ अत्रैताविषकन्याश्चतिष्ठंति
बलसंयुताः ॥ ९३ ॥ नयिष्यंतिहयंघोराःकष्टमत्रभविष्यति ॥ एवंब्रुवतिपार्थेचस्त्रीणांवृंदंसमागतं ॥ ९४ ॥ हयारूढंचं
पकाभंमुक्तामालाविभूषितं ॥ नानालंकारसंयुक्तंहावभावसमन्वितं ॥ ९५ ॥ बद्धचामरमाकंठेसतूणंसधनुर्धरं ॥ अ
र्जुनाश्वंगृहीत्वाथनारीकाचननिर्गता ॥ ९६ ॥ स्वामिनींप्रतिगत्वासादर्शयामासवाजिनं ॥ युधिष्ठिरस्यभ्रातात्रतुरं
गंप्रतिरक्षति ॥ तवादेशान्मयानीतस्तुरगःकिंकरोम्यतः ॥ ९७ ॥ राज्ञ्युवाच वाजिशालांनयैनंत्वंयामिपार्थंच
योधितुं ॥ साचकारततःसर्वंराज्ञीपांडवमन्वगात् ॥ ९८ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेस्त्रीराज्यगमनंनामएक
विंशोऽध्यायः ॥ २१ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

जैमिनिरुवाच चंद्राननानांवीराणांलक्षेणपरिवारिता ॥ तुरगानधिरूढानांस्थितापार्थरथंप्रति ॥ १ ॥ पीनोन्नत
कुचानांसाश्यामानांचारुलोचना ॥ गजकुंभस्थितानांहिलक्षेणापिवृताबभौ ॥ २ ॥ रथमारुह्यनारीणांलक्षंचपुरतः
स्थितं ॥ लक्षत्रयंपांडवंतंपरिवार्यस्थितंरणे ॥ ३ ॥ प्रमीलानामसाराज्ञीप्रत्युवाचधनंजयं ॥ प्रमीलोवाच मयाधृत
स्तेतुरगस्तंमोचयितुमिच्छसि ॥ ४ ॥ कुरुयुद्धंमयासार्धंव्यपनेष्यामित्वद्बलं ॥ सहस्वमत्प्रहारंत्वंधैर्येणमहतार्जुन ॥ ५ ॥
प्रथमंताडितःपार्थोनेत्रभावैःप्रमाथिभिः ॥ ततोबाणेननिर्भिन्नोहृदयेगिरिदारिणा ॥ ६ ॥ सचूचकनिभाग्रेणतयास
स्मितयानृप ॥ ततोंऽतरेपंचवीराविद्धाःसर्वाभिरेवते ॥ ७ ॥ कर्तव्यंविस्मृतंतेषांविनाकर्णसुतंतदा ॥ राज्ञीप्राहार्जुनं
वीरंनमांजानासिचार्जुन ॥ ८ ॥ त्वांविजित्यकरिष्यामिस्वदासंविद्धिपांडव ॥ किंकरिष्यसियागेनमयासहमधुंपिब ॥
॥ ९ ॥ दर्शयिष्यामितेसौख्यंयन्नदृष्टंत्वयापुरा ॥ अर्जुनउवाच तवसंगेनमरणंजायतेऽत्रमयाश्रुतं ॥ १० ॥ या
गार्थंपाल्यतेकेनतुरगःपांडवंविना ॥ प्रमीलोवाच अर्जुनोभयथानूनंतवमृत्युरयंस्थितः ॥ ११ ॥ मच्छरैर्नय
नैर्वापिताड्यमानोनजीवसि ॥ मत्संगमात्सुखावाप्तिर्निधनंहिमयासह ॥ १२ ॥ नाराचैःपीड्यमानोऽपिमृतोव्यर्थंग

मिष्यसि ॥ नवक्ष्यामित्थथावाचंतवपार्थरतानचेत् ॥ १३॥ शरैस्त्वांपातयिष्यामिविजेष्यामिरतेनवा॥ विनात्वांजीवि
तंत्यक्ष्येतत्सर्वमवधारय ॥ १४॥ आवयोर्मरणंप्राप्तंदर्शनादेवमारिष ॥ तस्मान्मदीयंरुचिरंयौवनंभुंक्ष्वपांडव ॥ १५॥
अर्जुनस्तांतदावीक्ष्यब्रुवंतींकामपीडितां ॥ लक्ष्मणंचिंतयित्वाथतथाशूर्पणखांत्हदि ॥ १६ ॥ निजघानशरैःषड्भिस्तया
तेपंचधाकृताः ॥ धनंजयंशरैर्घोरैःसप्तभिःसमताडयत् ॥ १७ ॥ पुनःशरसहस्रैःसाऽदृश्यंचक्रेऽर्जुनंरणे॥ मोहनास्त्रंपांड
वोऽपिसंदधेकार्मुकेस्वके ॥ १८ ॥ प्रमीलामोहनास्त्रंतत्सगुणंसायकैस्त्रिभिः ॥ छित्वाप्राहार्जुनंमूढमोहनास्त्रंनभातिते॥
॥ १९॥ अर्जुनःसगुणंकृत्वास्वधनुःकोपपूरितः ॥ यावत्पातयतेतांहिवाणीखेचाभवत्तदा ॥ २० ॥ मापार्थसाहसंका
र्षीःसंग्रामेस्त्रीवधंप्रति ॥ नैवशक्यात्वयाजेतुंवर्षाणामयुतेनच ॥ २१ ॥ इमांवरयभद्रंतेयदिजीवितुमिच्छसि ॥ इ
मांप्रब्रूहिनगरंत्वांविनेष्यामिभामिनि ॥ २२ ॥ पार्थस्तद्भाषितंश्रुत्वासर्वंचक्रेयथोदितं॥ प्रमीलांवरयामासयुद्धभू
मौविशांपते ॥ २३ ॥ उवाचतांविशालाक्षींसंगमंहस्तिनापुरे ॥ तवदास्यामिभद्रेऽहंव्रतस्थोहयरक्षणे॥ २४ ॥ कृष्ण
स्यदर्शनाद्दोषागमिष्यंतिहितावकाः॥ एतासामपिसर्वासांभर्त्तारोमत्पुरेशुभे ॥ २५ ॥ भविष्यंतिनसंदेहोहयंमुंचव्र
जाम्यहं॥ सहितावात्वमायाहिव्रजवाहस्तिनापुरे॥ २६॥ ततोमुक्तातंतुरगंसाजगामयुधिष्ठिरं॥ हयोययौवृक्षदेशान्फ
लितान्मानुषैर्गजैः ॥ २७॥ स्त्रीभिर्गोभिश्चपशुभिरजाविकखरैरपि॥ प्रभातेचैवजायंतेमध्याह्नेयौवनान्विताः॥ २८॥
सायंकालेम्रियंतेहिवृक्षेषुविविधाजनाः॥ ययौतत्रापिपार्थोऽसौविस्मयोत्फुल्ललोचनः॥ २९॥ ततोदेशान्सविविधां
स्तुरंगेणसमन्वितः॥ कर्णप्रावरणानेकवक्त्रानेकाक्षपादकान्॥ ३०॥ हयाननांस्त्रिनेत्रांस्तान्दीर्घनासांस्त्रिपादकान् ॥
सश्रृंगानेकश्रृंगांश्चखरवक्त्रानुपाययौ ॥ ३१॥ भीषणस्यपुरंप्राप्तोराक्षसस्यतुरंगमः ॥ राक्षसास्तत्रबहवोवसंतिपुरु
षादकाः॥ ३२॥ पापाचाराःकोपयुक्तादीर्घकालप्रजीविनः॥ कोटित्रितयमेतेषांराक्षसानांपुरःस्थितं॥ ३३॥ भीषण
स्यपुरोधास्तुमेदोहासतुरंगमं॥ ददर्शभ्रममाणंहिकाननेब्रह्मराक्षसः ॥ ३४ ॥ ज्ञात्वापार्थहयंप्राप्तंभीषणस्यांतिकंय
यौ॥ नरांत्रसूत्रसंभूतंकंठेयज्ञोपवीतकं ॥ ३५॥ बिभ्रन्नरकपालानांजपमालांभयानकां ॥ गजवक्त्रस्यशुष्कस्यस

जलंहिकमंडलुं ॥ ३६ ॥ नेत्रगोलकजांकंठेप्रोतांघोरांस्रजंतथा ॥ गजदासेरकौयुक्तौकर्णयोस्तस्यभूषणे ॥ ३७ ॥ गज
पृष्ठभवस्यास्थोदंडंचसपलंकरे ॥ उवाचभीषणंगत्वापार्थःप्राप्तस्तवाहितः ॥ ३८ ॥ तुरंगंपालयानोऽत्रविद्धितंराक्षसा
धिप ॥ पिताहितेबकोनामनिहतोस्याग्रजेनसः ॥ ३९ ॥ एनंभीमानुजंशीघ्रंगृहीत्वायज्ञमाचर ॥ सर्वलक्षणसंयुक्तंन
रमेधंममाज्ञया ॥ ४० ॥ आचार्योऽहंभविष्यामिसंत्यन्येब्रह्मराक्षसाः ॥ कुलीनाव्रतयुक्ताश्चचातुर्मास्यव्रतेस्थिताः ॥
॥ ४१ ॥ येकुर्वंतिसुरापानंरुधिरेणापितोषिताः ॥ मासोपवासिनीनांतुमांसेनश्रावणेव्रतं ॥ ४२ ॥ तथाभाद्रपदंप्राप्य
यतीनामूर्ध्वरेतसां ॥ आहारेणैवजीवंतिआश्विनेचजटावतां ॥ ४३ ॥ कार्तिकेचकुमाराणांपलेनव्रतधारकाः ॥ तस्मा
द्धारयपार्थंहिससैन्यंहितुरंगमं ॥ ४४ ॥ व्रतस्थाश्चिरकालंहितिष्ठंतिब्रह्मराक्षसाः ॥ गजान्धनंजयस्याद्यभक्षयंतुतथा
हयान् ॥ ४५ ॥ नराणांरुधिरेणैवकोष्णेनगलनालतः ॥ मांसेनचमुदायुक्ताभवंत्वेतेऽद्यतापसाः ॥ ४६ ॥ रावणेनकृ
तोयज्ञोनरमेधोमहात्मना ॥ तस्मिन्यज्ञेसुतृप्तास्तुसर्वेतेब्रह्मराक्षसाः ॥ ४७ ॥ सांप्रतंत्वत्कृतेयज्ञेवयंतृप्ताभवामहे ॥
भीषणउवाच सर्वंतातकरिष्यामियथोक्तंभवताम्मम ॥ ४८ ॥ पितृशत्रुंपुरंप्राप्तंकथमद्यनधारये ॥ भवादृशैर्व्रत
श्लाघ्यसुविद्यैर्ब्रह्मराक्षसैः ॥ ४९ ॥ एकंपृच्छामितातत्वांयज्ञेकिंतवभोजनं ॥ मयादेयंतवविभोपार्थसैन्याद्यथोचितं ॥
॥ ५० ॥ स्वरुचिंशंसतुभवानिहयज्ञंसमाचरे ॥ मेदोहाउवाच नराणामतिपुष्टानांमेदैःप्रीतिश्चलोचनैः ॥ ५१ ॥
गजानांचनराणांचहयानांनयनैर्मम ॥ मेदक्लिन्नैःपरातृप्तिस्त्वत्प्रसादाद्भविष्यति ॥ ५२ ॥ सहस्रमात्रंराजेंद्रपदातीनां
चभोजनं ॥ तवयज्ञेकरिष्यामिबद्धाशीर्नापरैःसमः ॥ ५३ ॥ तस्यभाषितमाकर्ण्यराक्षसोमुदितोऽभवत् ॥ चकारमंड
पंरम्यंसपुरोहितऋत्विजैः ॥ ५४ ॥ यज्ञार्थंतरसायोद्धुंप्रायात्पार्थचमूंप्रति ॥ राक्षसानांचघोराणांवृतःकोटित्रयेणसः
॥ ५५ ॥ राक्षस्यःपर्वतारूढाददृशुःपार्थमागतं ॥ हनूमंतंविलोक्यैकाराक्षसीवाक्यमब्रवीत् ॥ ५६ ॥ राक्षस्युवा
च ॥ पलायध्वंपलायध्वंभवतीनांनजीवितं ॥ वानरंचात्रपश्यामिनिहतायेनराक्षसाः ॥ ५७ ॥ रावणस्यपुरेदृष्टोम
याऽयंयत्रजानकी ॥ स्थिताशोकवनेदेवीतदाप्रभृतिमेभयं ॥ ५८ ॥ जैमिनिरुवाच राक्षसीवाक्यमाकर्ण्यप्रा

हलंबोदरापरा ॥ कृशहस्तपदादीर्घग्रीवानल्वसमुच्छ्रया ॥ ५९ ॥ रावणंमावदनरान्मृत्युंप्राप्तंममाग्रतः ॥ वानरंभक्ष
यिष्यामिसभयंपुरतस्तव ॥ ६० ॥ तांतुचैवापराप्राहकिंत्वयागदितंकृशे ॥ पश्यमेत्वंस्तनौदीर्घौस्थूलौभूमौविलंबिनौ
॥ ६१ ॥ योजनंप्राप्यमत्पृष्ठेकृष्यंतौद्रुमनाशनौ ॥ कुचेनपांडवंहन्मिहनूमंतंचवानरं ॥ ६२ ॥ सैन्यंचभारतंवेगान्माभी
तोराक्षसीगणः ॥ जयतांवानरान्मंदोनमांजानातिभीषणः ॥ ६३ ॥ तावत्तृतीयाकुपितापुष्टांतांयोजनस्तनीं ॥ जगाद
किंभयंत्वत्तोगमिष्यतिकुचेनकिं ॥ ६४ ॥ स्तनौतेयोजनंप्राप्तौबिल्वमात्रौममाग्रतः ॥ योजनंकुचयोःप्राप्तंचूचुकंमम
पश्यत ॥ ६५ ॥ सर्वासांव्यपनेष्यामिभयंहत्वाकपीश्वरं ॥ एतावदुक्त्वावचनंपार्थसैन्यंनिरीक्ष्यसा ॥ ६६ ॥ उत्प्लुत्यगग
नेतीव्राहाहाकृत्वाप्रधाविता ॥ कुचाभ्यांभ्रममाणाभ्यांस्थूलाभ्यांसंगरेनृप ॥ ६७ ॥ पातयंतीबलंभूरिचूर्णयंतीमहाग
जान् ॥ यत्रयत्रकुचौलग्नौतत्रतत्पातितंबलं ॥ ६८ ॥ परमाणुनिभंसैन्यंकृतंकेवलयातया ॥ उक्षिपंतीगजानश्वान्नरा
नपिसुदारुणान् ॥ ६९ ॥ अन्याश्चबह्वयोराक्षस्यस्तथाचक्रुःक्षयंरणे ॥ राक्षसास्तेऽपितान्वीरान्पातयामासुराहवे ॥ ७० ॥
भीषणःपार्थमासाद्यचेदंवचनमब्रवीत् ॥ भीषणउवाच तिष्ठपार्थकुतोयासिदिष्ट्यादृष्टोऽसिसंगरे ॥ ७१ ॥ भीमेनमे
हतस्तातस्तदाहंनसमीपगः ॥ त्वामद्यसंगरेजित्वानरमेधंसमाचरे ॥ ७२ ॥ ततोभीमंवधिष्यामिपास्यामिरुधिरंबला
त् ॥ ततोमुमोचबाणौघान्मुद्गरान्पर्वतान्द्रुमान् ॥ ७३ ॥ पांडवंपीडयामासराक्षसैःसहितोबली ॥ अर्जुनस्तंतथाभूतंस
गणंराक्षसंशरैः ॥ ७४ ॥ बिभेदशतसाहस्रैःसमंताल्लोमवाहिभिः ॥ हनूमान्राक्षसीनांहिचकारकदनंमहत् ॥ ७५ ॥ लां
गूलवेष्टिताःसर्वास्ताडिताधरणीतले ॥ गतप्राणाभिन्नगात्राःकीर्णकेश्योहताश्वताः ॥ ७६ ॥ भयात्पलायिताःकाश्चि
द्याताःपर्वतसानुषु ॥ रक्षोघ्नैःपांडवोमंत्रैःसंमंत्र्यनिशितान्शरान् ॥ ७७ ॥ मुमोचराक्षसबलेभीतास्तेदुद्रुवुर्वने ॥ भीष
णःसस्रजेमायांराक्षसींक्रोधपूरितः ॥ ७८ ॥ सद्योऽभवन्पर्वताश्चसिंहाश्चशतशोगजाः ॥ शार्दूलाःशरभाव्याघ्रास्त
रक्षाविद्युतस्तथा ॥ ७९ ॥ भीषणेनरणेराजन्पांडवंप्रतिमायया ॥ आश्रमेकृषिरेवासीद्वीनशांतमृगद्विजे ॥ ८० ॥ गं
गातीरेस्वशिष्येभ्योनिगदन्ब्रह्मनिस्पृहः ॥ अर्जुनंप्राहतरसाराक्षसैस्त्रासितावयं ॥ ८१ ॥ नलभामःसुखेनैवतपःकर्तुंधनं

जय ॥ स्वागतंतेऽस्तुतिष्ठत्वंवसअघूर्णिकोभव ॥ ८२ ॥ ऋषीणामाश्रमेभुक्त्वालभंतेक्षत्रियाबलं ॥ कियंतमथकालंत्वं
स्थित्वापार्थमयासह ॥ ८३ ॥ अभ्यस्यविद्यांरुचिरांमयादत्तांधनंजय ॥ तयात्वेतेमरिष्यंतिराक्षसानात्रसंशयः ॥ ८४ ॥
ज्ञात्वामायांपांडवोऽथनिहत्यासुरभीषणं ॥ गृहीत्वाकांचनंतस्यरत्नानिविविधानिच ॥ ८६ ॥ हयांस्तित्तिरिकल्मा
षान्छत्रंदिव्यंचकुंडले ॥ ततोजगामपुत्रस्यसहयःश्वेतवाहनः ॥ ८६ ॥ रम्यंमणिपुरंनामबभ्रुवाहनपालितं ॥ नराःस
त्यव्रतायत्रनार्यश्चपतिसेवकाः ॥ ८७ ॥ वेदार्थशास्त्रनिपुणोभातियत्रमहाजनः ॥ चिंतनंवासुदेवस्यनान्यांचिंतांप्रकु
र्वते ॥ ८८ ॥ बंधनंकेशपुष्पाणांपशूनांसदयाइव ॥ प्रकुर्वंतिचसंघातंसारीणांकामिनीयुताः ॥ ८९ ॥ स्वप्नेऽपिनानृतं
यत्रप्रवदंतिजनाःक्वचित् ॥ मुक्ताश्चकामिनीनांहिहृदयेऽपिचमस्तके ॥ ९० ॥ नासाग्रेभांतिराजेंद्रसतोयावृत्तलोल
काः ॥ शूराश्चयत्रशतशोबभ्रुवाहनपूजिताः ॥ ९१ ॥ महाकालमपिप्राप्तंतोषयंतिबलेनतं ॥ विमुखानरणेवीराना
र्थिनांपुरतःक्वचित् ॥ ९२ ॥ जायंतेदेहदानेनवदान्याःप्रार्थिताःसदा ॥ प्राकृतस्यजनस्यापिमुखाद्वाणीसुसंस्कृता ॥ ९३ ॥
निर्यातिसर्वदायत्रप्रासस्तत्रतुरंगमः ॥ तुष्टपुष्टजनाकीर्णंनित्योत्सवविभूषितं ॥ ९४ ॥ रम्यंसुवर्णप्राकारंनगरंचार्जु
नेश्वतत् ॥ रक्षितंचमहावीरैःसबलैर्वीर्यशालिभिः ॥ ९५ ॥ सहस्रंशकटानांहिपूरितंकांचनेनच ॥ हंसध्वजादिभिर्दत्तः
प्रत्यब्दंनृपतेःकरः ॥ ९६ ॥ सुवर्णरूप्यरत्नैश्चबभ्रुवाहनकारितं ॥ सुचित्रंगृहवीथीभिःप्रासादैर्गोपुरैर्मठैः ॥ ९७ ॥ द्विती
यमिववैकुंठंस्थापितंविष्णुनाक्षितौ ॥ निरीक्ष्यतत्तथारूपंनगरंचार्जुनोऽब्रवीत् ॥ ९८ ॥ वयंकुतोऽत्रसंप्राप्तामराल
ध्वजशंसमे ॥ ९९ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेमणिपूरागमनंनामद्वाविंशोऽध्यायः ॥ २२ ॥ ॥ छ ॥ ॥ छ ॥
जैमिनिरुवाच हंसध्वजःपार्थवचःसमाकर्ण्याब्रवीत्स्वयं ॥ बभ्रुवाहननामात्रनृपतिर्वर्ततेर्जुन ॥ १ ॥ यस्मैसुवर्ण
संपूर्णशकटानांसहस्रकं ॥ प्रत्यब्दंदीयतेपार्थमयान्यैःपार्थिवैःसदा ॥ २ ॥ रम्यंमणिपुरंतस्यसंगताःस्मोहयान्विताः ॥
तेजस्वीसबलःप्राज्ञोवेदार्थमनुवर्तकः ॥ ३ ॥ वृद्धानुशासनेमग्नःपरस्त्रीविमुखःसदा ॥ दातॄणांप्रथमश्चैकोयथानारा
यणोहरिः ॥ ४ ॥ सुमतिश्चास्यविख्यातोमहासत्वपराक्रमः ॥ सेनानाथोऽस्यधीरोऽत्रसकोपंशंकरंसहेत् ॥ ५ ॥ परस्य

सुकृतंकर्मपरमाणुनिभंरणे ॥ राज्ञेनिवेदयत्येवनस्मरत्यपकारकं ॥ ६ ॥ हयंग्रहीष्यंतियदिसैनिकाश्चास्यभूपतेः ॥ क्ले
शेनमहतामोक्तुंशक्तुमोवाजिनंपुनः ॥ ७ ॥ एवंब्रुवतिवीरेहिगृध्रःपरमदारुणः ॥ धनंजयकिरीटाग्रेस्थितोमृत्युप्रदर्श
कः ॥ ८ ॥ तेनतेविस्मिताःसर्वेत्रासंजग्मुश्चकंपिरे ॥ जैमिनिरुवाच परंतुरंगंनगरेश्रुत्वाधावंतमागतं ॥ ९ ॥
पाल्यमानंमहावीरैःसबलेनकिरीटिना ॥ ग्राहयामासराजासौलीलयाबभ्रुवाहनः ॥ १० ॥ वीराणांयुधिशूराणांसह
स्रेणतुरंगमं ॥ रात्रौसदसिचानीयददर्शहरिमुत्तमं ॥ ११ ॥ पूजितंचर्चितंरम्यंमुक्ताफलविभूषितं ॥ सिंहासनेचोपवि
ष्टोरत्नकांचननिर्मिते ॥ १२ ॥ सभातस्यविचित्रैश्चवररत्नचित्राहिरण्मयी ॥ अयुतस्तंभसंयुक्तानानाभावप्रदर्शका ॥
॥ १३ ॥ हंसाश्चैवमयूराश्चशुकाःपारावतास्तथा ॥ सारिकाःकोकिलाःकेकारत्नकांचननिर्मिताः ॥ १४ ॥ सजीवाइव
लक्ष्यंतेराज्ञःसदसिशोभनाः ॥ द्रुमैरत्नमयैर्दिव्यैर्गजैर्मत्तैःसमावृताः ॥ १५ ॥ ईहामृगैःकृत्रिमैश्चमीनैर्नक्रैःसुशोभि
ताः ॥ रत्नप्रदीपाःशतशोयत्रकांचनदीपकाः ॥ १६ ॥ गंधतैलावसिक्ताश्चकर्पूरपुलकैस्तथा ॥ प्रदीपितासभाभातिदी
पैर्नानाविधैर्नृप ॥ १७ ॥ नृपभूषणकांत्याचशस्त्राणामपिभारत ॥ कर्पूराणामपिकणैःपतितैर्भूमिकंबलाः ॥ १८ ॥ अ
रुणासितवर्णास्तेदृश्यंतेजनमेजय ॥ धूपवासेनपुष्पाणांगंधेनागुरुणासह ॥ १९ ॥ कस्तूरीनिकरैस्तोयैर्गंधराजैःसुके
सरैः ॥ मूर्छयंतीसभालोकानुपविष्टान्नृपांतिके ॥ २० ॥ चित्रांगदासुतोवीक्ष्यतुरंगंपत्रवाचनात् ॥ युधिष्ठिरस्यतंज्ञा
त्वाहयंपार्थेनपालितं ॥ २१ ॥ सुबुद्धिंपरिपप्रच्छमंत्रिणंमंत्रिसत्तमं ॥ जननीमेपार्थपत्नीनृत्यंतीपितृसद्मनि ॥ २२ ॥
तालहीनायदाजाताशप्तापित्रामहात्मना ॥ नक्रीभूताचिरंतिष्ठजलेविगततालिके ॥ २३ ॥ यदाऽर्जुनस्यचरणौप्रा
प्स्यसेदैवयोगतः ॥ सत्वांमोचयिताभर्ताभविष्यतिनसंशयः ॥ २४ ॥ तथाजातंपुरापार्थात्संजातोऽहंपुरेशुभे ॥ जननी
मेपरित्यज्यगतासातंयुधिष्ठिरं ॥ २५ ॥ मयाराज्यंमहत्प्राप्तंपुत्रोऽहंपांडवस्यहि ॥ किंकरोमिसुबुद्धेत्रमयाकार्यविनाशि
तं ॥ स्वपितुस्तुरगश्चायंसमानीतोऽविचारतः ॥ २६ ॥ सुबुद्धिरुवाच एवमेतन्नसंदेहःप्रथमंनविचारितं ॥ त्व
यैवपालनीयोयंवर्षमात्रंतुरंगमः ॥ २७ ॥ स्वपितुःशासनंकार्यंहंतव्याहयहारिणः ॥ पुत्राणांपरमोधर्मःक्रियतेपितृपू

जनं ॥ २८ ॥ अधुनाविविधंवित्तंराज्यंचनृपसत्तम ॥ समर्पयार्जुनायाथप्रसादयनिजंगुरुं ॥ २९ ॥ ब्राह्मणैःसंयुताःस
र्वैर्नरनारीसमावृताः ॥ कुमारीणांगणाःपुष्टागजारूढाव्रजंतुतं ॥ ३० ॥ नृत्यंत्योयांतुनर्तक्यःप्रगायंतश्चगायकाः ॥ व
यंसर्वेसैनिकास्तेनागरास्तेमहाजनाः ॥ ३१ ॥ संभावयित्वाजनकंतावकंहरिसेवकं ॥ प्रयच्छामोहयंशीघ्रमेवंमंत्रः
सुखोदयः ॥ ३२ ॥ जैमिनिरुवाच श्रुत्वासुबुद्धेर्वचनंराजासौबभ्रुवाहनः ॥ प्रययौसबलःशीघ्रंगृहीत्वाथतुरंग
मं ॥ ३३ ॥ ब्राह्मणैःसहितोवीरैर्नागरैश्चमहाजनैः ॥ चंदनानिचकस्तूरीकर्पूरनिकरान्बहून् ॥ ३४ ॥ वाहितैःशकटैःसा
कंतथाऽन्यैरत्नपूरितैः ॥ गजैर्मत्तैश्चंद्रगौरैरथैःकनकचित्रितैः ॥ ३५ ॥ श्यामकर्णैश्चतुरगैर्वेष्टितःपांडवंमुदा ॥ वादित्रा
णांचनादेनजयशब्दैःसुमंगलैः ॥ ३६ ॥ गजारूढकुमारीणांकरमुक्तैःसुमौक्तिकैः ॥ अग्रतोधूपधूमैश्चलाजैर्दूर्वादलै
र्वृतः ॥ ३७ ॥ यत्रव्यूह्यनिजंसैन्यंस्थितोवानरकेतनः ॥ प्रद्युम्नंपुरतःकृत्वायौवनाश्वंसपुत्रकं ॥ ३८ ॥ अनुशाल्वंमहा
वीरंनीलकेतुंसुधार्मिकं ॥ हंसध्वजंमहाराजंशैनेयंचमहाबलं ॥ ३९ ॥ हार्दिक्यंयादवाध्यक्षंतथाऽन्यान्यादवान्विभुः ॥
गजादुत्तीर्यवीरोऽसौबलवान्बभ्रुवाहनः ॥ ४० ॥ नामन्नामन्नाजगामपश्यतांसर्वभूभुजां ॥ पदातिश्चार्जुनसुतःप्रह
ष्टःप्रत्ययात्स्वयं ॥ ४१ ॥ संस्थाप्यवस्तुजातंतद्यदानीतंतदग्रतः ॥ मुक्त्वाकेशान्क्षालनार्थंपादयोःपांडवस्यहि ॥ ४२ ॥
विरजस्कौकृतौपादौस्वकेशैःपरितोषितः ॥ ववर्षुःकन्यकाःसर्वाःपुष्पमुक्ताफलानिच ॥ ४३ ॥ सबलःसपपातोर्व्यांदं
डवद्बभ्रुवाहनः ॥ अर्जुनस्यांतिकेराजन्साश्रुकंठोमहामतिः ॥ ४४ ॥ पार्थस्यांघ्रिसमासाद्यपुनरेवोत्थितोऽब्रवीत् ॥
बभ्रुवाहनउवाच तवाहंपुत्रकस्तातउलूप्यापरिवर्धितः ॥ ४५ ॥ चित्रांगदाप्रसूतंमांत्वत्तस्तीर्थकरात्पुरा ॥ बभ्रुवाहन
नामाहंनजानेतुरगंतव ॥ ४६ ॥ गृहाणराज्यंनिखिलंशाधिमांत्वंधनंजय ॥ पुनरेवार्जुनपुरोनिपपातविशांपते ॥ ४७ ॥
क्षमस्वेतिवदन्वाग्मीसभृत्योबलसंयुतः ॥ तंतथाभाषमाणंतेनिरीक्ष्यार्जुनसैनिकाः ॥ ४८ ॥ प्रद्युम्नप्रमुखाःप्रोचुःपार्थं
प्रतिमहीपते ॥ पुत्रंकथंनगृह्णासिब्रुवंतंपरमंहितं ॥ ४९ ॥ मानीचपतितोभूमौतमुत्थापयपांडव ॥ पश्यश्रियंचमहतींस्व
पुत्रस्यातितेजसः ॥ ५० ॥ जैमिनिरुवाच तेषांभाषितमाकर्ण्यपार्थःक्रोधसमन्वितः ॥ पदातंताडयित्वाथबभ्रु

वाहनमौरसं ॥ ५१ ॥ मस्तकेभर्त्सयन्कोपात्कालकल्पंसुदारुणं ॥ भाविनाचविनाशेननिगीर्णोवाक्यमब्रवीत् ॥ ५२ ॥
अर्जुनउवाच नत्वंममौरसःपुत्रोभयग्रस्तकलेवरः ॥ चित्रांगदाप्रसूतात्वांवैश्यान्मन्येनपांडवात् ॥ ५३ ॥ प्रथमंवि
धृतःकस्मात्तुरगोमेस्वपौरुषात् ॥ भयेनवैश्यवत्त्वंतुतुरगंदातुमिच्छसि ॥ ५४ ॥ नमयाजनितश्चान्यस्त्वादृशःक्लीबपौरु
षः ॥ सुतःसजनितोयस्तुमहाबुद्धिपराक्रमः ॥ ५५ ॥ कृष्णप्रियोधर्मपरोममचापिप्रियोगतः ॥ सुभद्रानंदनःपुत्रोम
मैकःक्षत्रियांतकृत् ॥ ५६ ॥ येनद्रोणमुखावीराःसंग्रामेविमुखाःकृताः ॥ चक्रव्यूहंविनिर्भिद्यरक्षितोधर्मनंदनः ॥ ५७ ॥
क्वजंबूकःक्वपंचास्यःक्वखंजःक्वचशीघ्रगः ॥ त्वंजंबूकःकुतःसिंहःसुभद्रानंदनोमम ॥ ५८ ॥ मूढसैन्यंनपतितंतावकंम
च्छरैःक्षितौ ॥ नबाणाहृदितेलग्नाःकथंभीतोऽसिदुर्मते ॥ ५९ ॥ गंधर्वराजदुहिताजननीतवनर्तकी ॥ त्वंनटोभवग
च्छाद्यराज्यंत्यक्त्वागृहेधनुः ॥ ६० ॥ त्यजैतद्विपुलंरम्यंरथंचकुलपांसन ॥ क्षात्रधर्मेणतेहीनंजीवितंनसुखप्रदं ॥ ६१ ॥
मातृवंशंगृहाणत्वंबध्वाकंठेतुमर्दलं ॥ वालेयंपृष्ठतोबध्वारंगेनृत्यंप्रवर्तय ॥ ६२ ॥ जैमिनिरुवाच ततःसबुबुधे
सर्वंयत्पित्राभाषितंतदा ॥ प्रत्युवाचहसन्वाग्मीसकोपस्तत्रपांडवं ॥ ६३ ॥ बभ्रुवाहनउवाच सर्वंतेक्षामितंपा
र्थनत्वेकंक्षामयेपुनः ॥ वैश्याज्जातंमन्यसेमांजननीमेप्रदूषिता ॥ ६४ ॥ त्वयाल्पबुद्धिनालोकेसमक्षंमेद्यसंगरे ॥ क्षत्रि
यत्वंदर्शयामितवाग्रेतुधनंजय ॥ ६५ ॥ गच्छंतुकन्यकाःसर्वाःपुरमध्येमहाजनाः ॥ सैनिकाश्चात्रतिष्ठंतुहयोऽयंच
निबध्यतां ॥ ६६ ॥ कथंमोचयितापार्थोभविष्यतितुरंगमं ॥ मयाधृतःपौरुषेणव्यूह्यसेनांहिभासुरां ॥ ६७ ॥ सुबुद्धि
प्रमुखावीरायत्ताःसंतुरणेमम ॥ सर्वेतेतादृशंचक्रुर्गृहीत्वातुरगंस्थिताः ॥ ६८ ॥ महत्सैन्यंस्थितंघोरंसशब्दंकालरूप
धृक् ॥ चामरापीडसंयुक्तंरुद्राक्षवलयंपृथु ॥ ६९ ॥ नानारत्नसुवर्णैनभूषितंचारुकुंडलं ॥ नानावादित्रशंखानांनादे
नैवविनादितं ॥ ७० ॥ गजानामर्बुदंनद्धंघंटाकंबलधारिणां ॥ रथानामपिराजेंद्रस्थापितंकोटिसप्तकं ॥ ७१ ॥ हयाना
मपिरूढानामर्बुदद्वितयंतथा ॥ पदातीनांसुपुष्टानांत्रितयंचार्बुदस्यहि ॥ ७२ ॥ महावीराःसदापुष्टाःसंग्रामकुशलान्नृप ॥
अन्योन्यस्यहितेयुक्ताःसत्यव्रतपरायणाः ॥ ७३ ॥ चित्रांगदात्मजेनैतेयोजितास्तत्क्षणान्नृप ॥ तैस्तद्वावेष्टितंसै

न्यंपांडवस्यमहात्मनः॥ ७४ ॥ नानाशस्त्रप्रहरणैर्मोहलोभैर्यथाजगत् ॥ घोरैःकिलकिलाशब्दैःसिंहनादैश्चतर्जनैः ॥
॥ ७५ ॥ तिष्ठतिष्ठेतिभाषद्भिःपातयद्भिःपरान्रणे॥ ततोरथंसमारुह्यदिव्यंकनकचित्रितं॥ ७६ ॥ त्रिभूमिकंसुशस्त्रा
ढ्यंमुक्तामालाविभूषितं॥ प्रलंबचामरधरंमयूराश्वंपताकिनं॥ ७७॥ किंकिणीशतसंपूर्णशक्रस्यंदनहासकं ॥ उवा
चकार्ष्णिःपितरंतिष्ठेतिपरुषंरणे॥ ७८॥ बभ्रुवाहनउवाच गृहाणार्जुनकोदंडंपौरुषंपश्यमामकं॥ पितृभावेन
चानीतोमयायंतुरगस्तव॥ ७९ ॥ पुनःसमर्पितस्तुभ्यंसर्वराज्यंनिवेदितं ॥ शरणंचागतोऽहंत्वांतन्मान्यंनाभवत्तव ॥
॥ ८० ॥ संग्रामएवचेन्मान्यस्तवपार्थनसंधिता॥ सन्नद्धंविद्धिमांरौद्रंकस्त्वांत्राताद्यविद्यते॥ ८१ ॥ जैमिनिरुवाच
एवंवदंतंसमरेबभ्रुवाहनमातुरं॥ समाह्वयंतंपार्थंहियुद्धार्थंदैत्यनायकः ॥ ८२ ॥ अनुशाल्वोरथारूढस्तमियायसुरो
षितः॥ शरैःसुपुंखैर्नवभिस्तंविव्याधहसन्निव॥ ८३ ॥ कार्ष्णिःशतेनबाणानामनुशाल्वंसमाकिरत् ॥ दैत्याधिपस्ता
न्नाराचान्मध्येचिच्छेदसत्वरः॥ ८४ ॥ छिन्नान्शरान्वीक्ष्यरोषान्मुमोचान्यान्शिलाशितान् ॥ कोटिशःशुकपत्रान्स
रणेदैत्याधिपंप्रति॥ ८५ ॥ उभौशरविभिन्नांगौरुधिरेणपरिप्लुतौ॥व्यराजेतांमहाराजपुष्पितौकिंशुकाविव॥ ८६ ॥
पूरयामासतुर्बाणैर्गगनंगतदैवतं॥ जलदाविवतोयौघैःपरस्परवधैषिणौ ॥ ८७ ॥ अनुशाल्वस्यतुरगान्बाणैर्निन्येय
मक्षयं॥ चतुर्भिःपंचमेनापिसारथिंचहसन्निव॥ ८८॥ रथंचिच्छेदषष्ठेनतिलशःप्रहसन्निव ॥ सप्तमेनध्वजश्छिन्नो
धनुश्चैवाष्टमेनतु॥ ८९ ॥ सुवर्णपुंखैर्दशभिर्दैत्यराजंसमाकिरत्॥ अन्यंरथंसमारुह्यगृहीत्वाऽन्यन्महद्धनुः॥ ९० ॥ अ
नुशाल्वोऽपिविरथंचकारार्जुनपुत्रकं॥ शरीरंबाणसाहस्रैर्भिन्नंतस्यसुतेजसः॥ ९१ ॥ सपुनःकार्ष्णिनाराजन्विरथस्त
त्क्षणात्कृतः॥ दैत्याधिपोगदांघोरांप्राहिणोद्बभ्रुवाहने॥ ९२ ॥ गदाप्रहाराभिहतोमणिपूरपुराधिपः॥ अनुशाल्वंशरैः
घोरैर्नवभिःसमताडयत्॥ ९३ ॥ तैःशरैरर्दितोराजामूर्च्छितोनिपपातसः ॥ तंविसंज्ञंसमीक्ष्याथप्रद्युम्नोयोद्धुमाययौ
॥ ९४॥ तिष्ठतिष्ठेतिचवदन्बभ्रुवाहनमार्दयत्॥ प्रहरंस्तरसाबाणैस्तर्जयन्परुषोक्तिभिः ॥ ९५॥ सुवर्णपुंखैर्दशभिः
पुनर्विव्याधपांडविं॥ बभ्रुवाहस्ततःक्रुद्धोबाणानामयुतेनतं॥ ९६ ॥ प्रद्युम्नमपिसंग्रामेऽनंगंचक्रेयथोचितं ॥ पूर्वज

न्मन्यनंगोऽभूदस्मिन्नपितथाभवत् ॥ ९७॥ चित्तेयथामुनाविद्धःकार्याकार्येषुमूढधीः ॥ नगोत्रजांनात्रसुतांनारींप्रा
प्यविमुंचति ॥ ९८॥ संगरेपीडितस्तद्वत्कार्ष्णिःसन्नृपसत्तम ॥ प्रद्युम्नःशरसंपर्कात्कर्तव्यंनान्वविंदत ॥ ९९॥ बभ्रुवाहोऽ
र्जुनस्यापिसेनांतांचतुरंगिणीं ॥ ममंथबाणैर्बहुभिःसर्वकायविदारिभिः ॥ १०० ॥ तंवीक्ष्यकृष्णतनयःपुनर्विव्याध
सायकैः ॥ बभ्रुवाहंचसबलंसर्वेतेमोहितारणे ॥ १ ॥ मातंगामदसंयुक्ताःकामबाणप्रपीडिताः ॥ पतिताविस्मयःको
त्रभ्रममाणारणांगणे ॥ २ ॥ विकीर्णकंबलास्तत्रभिन्नकुंभाविचेतसः ॥ यक्षांगनाश्चकुर्वंतिसहारंयौवनंनिजं ॥ ३ ॥
गजकुंभोत्थितैःसांद्रैरम्यंमुक्ताफलैर्मृधे ॥ नरशीर्षेमेदोहीनंकृत्वारुधिरपूरितं ॥ ४ ॥ अन्योन्यंतेनशिरसाताडयंतिहसं
तिच ॥ गजशीर्षसरुधिरंप्रक्षिपंतिपरस्परं ॥ ५॥ गजदंतैश्चतुःषष्टिर्योगिन्यश्चारुविभ्रमं ॥ नृत्यंत्योगायनंचक्रुस्तदद्भु
तमिवाभवत् ॥ ६ ॥ शुष्कांगायत्रवेतालाःकुर्वंतिस्वांतनुंरणे ॥ पुष्टांमांसैश्चमेदोभिःप्रलिंपंतितथाबहिः ॥ ७॥ गजम
स्तकमादायभैरवाहयमस्तकं ॥ नरस्यापिखरस्यापिकरभस्यमहद्भिरः ॥ ८ ॥ नृत्यन्गोलकवद्युद्धेप्रक्षिपत्यूर्ध्वमूर्ध्वतः
कंकालाभैरवायक्षाःपिशाचारुधिरंपपुः ॥ ९॥ गजांत्ररज्जुभिर्नृत्यंचक्रिरेध्वनिनोमृधे॥ वेतालाश्चपिशाचाश्चसमृदंगा
मुदान्विताः ॥ १० ॥ नरशीर्षमथाबध्यचरणेक्षुद्रघंटिकां ॥ नृत्यंतिखलुगायंतितस्मिन्वीरसमागमे ॥ ११॥ कृतपानाः
स्मदृश्यंतेकोटिशःशब्दवादकाः ॥ शुंडांगजस्यत्रुटितांगृहीत्वामुखवायुना ॥ १२ ॥ पिशाचाःपूरयंतिस्मकाहलान्नृपस
त्तम ॥ गजकर्णौगृहीत्वैकोझर्झरौवादयन्ययौ ॥ १३ ॥ आददेकरभग्रीवांमुक्तमांसांहिजंबुकैः ॥ नरांत्रतंत्रींवीणांच
तामवादयतिस्मसः ॥ १४ ॥ ग्रीवापादविहीनानिगजांगानिचवाजिनां ॥ भग्नानिमेदोनद्धानिवादयंतिमृदंगवत् ॥
॥ १५ ॥ ब्रह्मग्रहास्तत्रराजन्प्रद्युम्नेकिलयुध्यति ॥ शिरांसितत्रवीराणांछिन्नान्यादायकौतुकात् ॥ १६ ॥ स्वक्रीडाकंदु
कांश्चक्रुर्भैरवाःस्वगणैस्तदा ॥ यत्रयत्रहतंसैन्यंकृष्णपुत्रेणमारिष ॥ १७॥ शोणितौघानदीतत्रकेशशैवालशाद्वला ॥
निमग्नास्तत्रमातंगानदृश्यंतेकुतोनराः ॥ १८ ॥ यथावैतरणीघोराद्वितीयैषाप्रवर्तिता ॥ ११९ ॥ इत्याश्वमेधिकेप
र्वणिजैमिनीयेप्रद्युम्नयुद्धवर्णनंनामत्रयोविंशतितमोऽध्यायः ॥ २३ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

जैमिनिरुवाच नदीतीरेश्वापदाश्वकर्षंतःकुणपानिह ॥ आंत्राणिपतितान्याशुभक्षयंतोववाशिरे ॥ १ ॥ मांसकर्दमजंदुर्गंनृकपालोपलंतटे ॥ कृत्वाचभैरवास्तत्रचक्रिरेकलहंमुदा ॥ २ ॥ प्राकारस्थाःसाट्टहासंशिरोभिर्गजवाजिनां ॥ गजमेदोद्भवांरौद्रामांत्रसूत्रपतंगिकां ॥ ३ ॥ कालखंडकलांगूलांकंकालागगनेक्षिपन् ॥ एतच्चान्यत्तदाचक्रुःप्रद्युम्नस्य रणेनृप ॥ ४ ॥ पुनःप्रद्युम्नवीरोऽसौपीडयन्वाहिनींबलात् ॥ चकारकदनंघोरंपदातीनांनृपोत्तम ॥ ५ ॥ यथाप्रलयकालेचभूतानांशशिशेखरः ॥ निहतास्तेनमातंगामदमत्ताःसहस्रशः ॥ ६ ॥ रथाश्वरथिभिःसाकंचूर्णितारणमूर्धनि ॥ हयाश्वसहयारोहाःप्रद्युम्नेनबलीयसा ॥ ७ ॥ पातिताभूतलेराजन्बाणैःशतसहस्रशः ॥ पौरुषंदर्शयामासबभ्रुवाहनसैनिकान् ॥ ८ ॥ तथातंवीक्ष्यकुपितंबभ्रुवाहोमहाबलः ॥ शरैःसंछाद्यतुरगान्सारथिंचझषध्वजं ॥ ९ ॥ मूर्छितंतरसाभूमौपातयामासकोपितः ॥ रथानांविंशतिस्तस्यप्रद्युम्नस्यमहात्मनः ॥ १० ॥ नाशेनाशेस्वीकृतानांछिन्नापार्थात्मजेनहि ॥ तथैवकृष्णपुत्रेणप्रद्युम्नेनमहारणे ॥ ११ ॥ चूर्णीकृताहिबहवोरथास्तस्यबलीयसा ॥ अपातयद्रणेकार्ष्णिमूर्छितं तस्यसारथिं ॥ १२ ॥ उत्थायभूमौकुपितःकृष्णपुत्रोऽथरोषतः ॥ तथाप्रद्युम्नमपिचनिष्पिपेषार्जुनात्मजः ॥ १३ ॥ प्रहारैःकश्मलंतैस्तुरुक्मिणीनंदनोययौ ॥ उत्थितःपुनरेवासौगदांजग्राहदारुणां ॥ १४ ॥ मुमोचास्मैकृष्णपुत्रश्चिच्छेदैनांत्रिभिःशरैः ॥ बभ्रुवाहश्चतरसापंचभिस्तमपीडयत् ॥ १५ ॥ रुक्मिणीतनयेनापिबहुधाताडितःशरैः ॥ उभौशस्त्रास्त्रकुशलौशूरौपरमधन्विनौ ॥ १६ ॥ उभौगगनगौराजन्नुभौभूतलचारिणौ ॥ तौचक्रतुस्तदाबाणपूर्णंगगनमंडलं ॥ ॥ १७ ॥ भूतलंचापिराजेंद्रयुद्धेवैलोमहर्षणे ॥ परस्परस्यसंघातान्मयूखान्भासुरानपि ॥ चक्रतुस्तौतदाबाणैर्यथामोहोहरेःस्थितः ॥ १८ ॥ भिन्नाःसायकवर्षेणभूभृतःकटकैःसह ॥ पर्वताइवराजंतेधातुरागप्रवाहिनः ॥ १९ ॥ छिन्नशीर्षामानहीनागतश्रीकागतासवः ॥ शिरांसिपतितान्येवगृहीत्वामहदायुधं ॥ २० ॥ कबंधाःशतसाहस्रास्तस्मिन्युद्धेसमुत्थिताः ॥ तरुणीकरजैर्भिन्नावीरास्तेरतिसंगरे ॥ २१ ॥ यथाव्यथांनजानंतितथायुद्धेशरव्यथां ॥ केचित्खड्गकरावीराःपतिताधरणीतले ॥ २२ ॥ करपत्रधराःकेचिद्गदाहस्तास्तथापरे ॥ त्रिशूलधारिणश्चान्येसमरेशक्तिसंयुता ॥ २३ ॥

भुशुंडीपाशपरिघकुद्दालवरधारिणः ॥ भिंदिपालायुधाश्चैव मुसलैश्चापियोधिनः ॥ २४ ॥ सपट्टिशायष्टिधरास्तथै
वांकुशयोधिनः ॥ कुंतायुधधराःकेचित्कुठारपरशूधराः ॥ २५ ॥ सशस्त्रायेचसंग्रामाहताःपार्थसुतेनते ॥ वरान्गजान्
शरैर्घोरैःसारोहान्सांकुशान्रणे ॥ २६ ॥ सघंटान्विदलीकृत्यननादार्जुननंदनः ॥ तस्यबाणोरथंभित्वाहयंभित्वातथा
गजं ॥ २७ ॥ पदातिनंसकवचंयातिदूरेनतिष्ठति ॥ यत्रयत्रतृणंभूरितत्रवह्निःप्रसर्पति ॥ २८ ॥ वनेप्रज्वलितेयद्वत्त
द्वद्वाणःसगच्छति ॥ एवमेकेनतत्सैन्यंव्याप्तंपार्थस्यधीमता ॥ २९ ॥ अनुशाल्वःपुनर्वीरंनदन्योद्धुमुपाययौ ॥ प्रद्युम्नो
नीलकेतुश्चयौवनाश्वःसपुत्रकः ॥ ३० ॥ हंसध्वजःपुत्रयुतोमेघवर्णोबलाधिकः ॥ एतेसर्वेतमेकंहिनाभवन्योधितुंक्ष
माः ॥ ३१ ॥ पंचभिःपंचभिर्बाणैस्तान्सर्वान्गतचेतनान् ॥ विरथान्गजहीनांश्चगताश्वान्छत्रवर्जितान् ॥ ३२ ॥ महा
बलान्कीर्णकेशान्भूषणैःपरिमोचितान् ॥ चकारसमरेकार्ष्णिःशुष्कास्यान्गतचामरान् ॥ ३३ ॥ रुधिरंस्वंपिबंतश्चसो
मपानमिवाध्वरे ॥ भ्रमंतश्चश्वसंतश्चधावंतश्चरणांगणे ॥ ३४ ॥ पलायंतश्चभिन्नास्तेशरैःकनकचित्रितैः ॥ कश्चित्स
विष्टोनागस्यगतांत्रस्यकलेवरं ॥ ३५ ॥ सुखंसमन्यतेयावत्तावत्प्राप्तौमहावृकौ ॥ गजदेहात्समाकृष्यचक्रतुर्नेत्रवर्जि
तं ॥ ३६ ॥ विभिद्यहृदयंतस्यवृकौमांसंप्रजक्षतुः ॥ तथापरःशत्रुहतःशिवाभिःपरिनीयते ॥ ३७ ॥ सरागंहृदयंतस्यघ
नकुंकुमचर्चितं ॥ शिवानखैःपरिच्छिन्नंददर्शभुविचाप्सराः ॥ ३८ ॥ तमारोप्यविमानेस्वेपतिंचक्रेसुरांगना ॥ प्रत्यु
वाचहसंतीचशिवानाथकलेवरं ॥ ३९ ॥ पश्यभूमौदारयंतितावकंरणमंडले ॥ मयाऽधुनापीड्यतेतेस्तनाभ्यांकरुणा
नमे ॥ ४० ॥ तथैवान्योविशालाक्ष्यारात्रौदष्टाधरोदिवा ॥ स्वेनैवचरणेकोपात्पुनर्नाकेसुरस्त्रिया ॥ ४१ ॥ व्यथांत्रिवा
रंसंप्राप्यदृष्टस्तत्कौतुकंमहत् ॥ गजदेहेप्रलंबंतंबाणभिन्नंकलेवरं ॥ ४२ ॥ एकंरणेद्वितीयंतुपश्यत्यन्योऽपिसंस्थितः ॥
दोलयाऽन्दोलितंनाकेदिव्यस्त्रीभिरलंकृतं ॥ ४३ ॥ सुपेशलस्वर्गरामाबाहुपाशेनयंत्रितः ॥ कश्चिद्रणगतान्पाशान्दारु
णान्स्मरतिस्महि ॥ ४४ ॥ इतरस्तत्रसंग्रामेपतितेस्वेकलेवरे ॥ ददर्शवृष्टिंमहतींपतंतींगजपुष्करात् ॥ ४५ ॥ विमानेऽ
पिप्रियावक्त्रमदगंडूषजांघनां ॥ एवंतेनतदायुद्धंकृतमर्जुनसूनुना ॥ ४६ ॥ सैन्यंप्रहतमप्रीतंभग्नंचपरिपालितं ॥ च

तुर्विधंसैन्यमसौजग्राहस्वमिवाहवे ॥ ४७ ॥ बाणैर्विमोहितान्वीरान्स्वपुरेहर्षितोनयत् ॥ नीयंतेगजशालासुगजाःपा
र्थस्यवाजिनः ॥ ४८ ॥ मंदुरासुचपार्थस्यपुत्रेणचबलीयसा ॥ रथास्तुवस्तुजातंतत्पुरमध्येगतंनृप ॥ प्रद्युम्नप्रमुखावी
रामोहिताःशरवृष्टिभिः ॥ ४९ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेबभ्रुवाहनयुद्धवर्णनंनामचतुर्विंशोऽध्यायः ॥ २४ ॥
जैमिनिरुवाच संग्रामस्त्वभवद्राजन्बभ्रुवाहनपार्थयोः ॥ यथाकुशस्यरामस्यवाजिमेधहयेधृते ॥ १ ॥ जनमे
जयउवाच कथंरामःकुशंपुत्रंशमयच्छरवृष्टिभिः ॥ कथंचतेनपुत्रेणजितोरामोरणाजिरे ॥ २ ॥ रामोनवेत्तिस्वंसू
नुमेतन्मेविस्तराद्वद ॥ यस्माद्रामकथाविप्रसर्वपातकनाशिनी ॥ ३ ॥ जैमिनिरुवाच शृणुराजन्महाबाहोराम
स्यचरितंमहत् ॥ विस्तरेणयथापूर्ववदतोमेनिशामय ॥ ४ ॥ रामस्तंरावणंहत्वाकुंभकर्णमहाबलं ॥ तथाऽन्यान्राक्ष
सान्घोरान्मेघनादमुखान्रणे ॥ ५ ॥ सीतामग्निमुखाच्छुद्धामादायस्वपुरंययौ ॥ विभीषणेनवीरेणलक्ष्मणेनमहात्मना
॥ ६ ॥ तथाहनूमत्प्रमुखैर्वानरैःपरिवारितः ॥ अयोध्यांप्रविवेशाथवसिष्ठप्रमुखाद्विजाः ॥ ७ ॥ पठंतोमंगलंसूक्तंराम
सम्मुखमाययुः ॥ वसिष्ठप्रमुखान्दृष्ट्वाततोदाशरथीरथात् ॥ ८ ॥ अवातरल्लक्षणाद्रामोनमश्चक्रेचतान्मुनीन् ॥ पश्चाच्च
लक्ष्मणःसीतानमस्कारंप्रचक्रतुः ॥ ९ ॥ ततःसतैर्नियुक्तोऽसौरामोराजीवलोचनः ॥ कैकेयींचसुमित्रांचभरतंलक्ष्म
णंतथा ॥ १० ॥ शत्रुघ्नंचपुरस्कृत्यववंदेरघुवंशजः ॥ कौसल्यांजननींपश्चान्नमस्कर्तुमगाच्चसः ॥ ११ ॥ मलिनांपंकदि
ग्धांगींरामदर्शनलालसां ॥ भर्तृदुःखपरिक्लिन्नांहर्षितांरामदर्शनात् ॥ १२ ॥ दृष्ट्वापद्मपलाशाक्षंरामंहर्षसमन्विता ॥
परिरभ्यचिरंतस्थौधनंप्राप्याधनोयथा ॥ १३ ॥ स्नापयंतीदृगंभोभिःस्नेहेनबहुनासुतं ॥ विशेषेणजटावंतंचिरंस्नानम
वर्तयत् ॥ १४ ॥ ततोरामंकराग्रेणपस्पर्शजननीतथा ॥ राक्षसास्त्रक्षतंदृष्ट्वाप्रोवाचवचनंशुभं ॥ १५ ॥ वसिष्ठप्रमुखा
रामंवदंतिकिमिदंवचः ॥ अच्छेद्योऽयमभेद्योऽयमक्लेद्योऽयंसुतस्तव ॥ १६ ॥ तदिदानींवृथामन्येबाणैर्भिन्नोऽसिराघ
व ॥ अथवाशिवभक्तंत्वामाहुःकेचिन्मुनीश्वराः ॥ १७ ॥ तस्माद्दत्तंत्वयास्थानंबाणाना[मितिमेमतिः ॥ स्पृष्ट्वातदंगं
कौसल्यास्वपाणिभ्यांदयावती ॥ १८ ॥ आनंदंपरमंप्रापाज्ज्ञानंलब्ध्वेवब्राह्मणः ॥ तत्करस्पर्शतोरामोमुक्तोदुःखैःसुदा

रुणैः ॥ १९ ॥ ततोरामोमहाबाहुर्जननींशिरसानतां ॥ नमस्कृत्यततोबंधून्पप्रच्छकुशलंचतान् ॥ २० ॥ हर्षितोभ्रातृभिःसर्वैरयोध्यायामुवाससः ॥ पालयन्पृथिवींसर्वांसशैलवनकाननां ॥ २१ ॥ प्रजाःस्वस्थाव्यवर्ततविप्रावेदपरायणाः ॥ आत्मेश्वपयःपीत्वावत्सायत्रोपरेमिरे ॥ २२ ॥ गोपालादुदुहुस्तत्र घटोध्नीर्गाःशुभास्तदा ॥ फलंतिसततंवृक्षालताःपुष्पंतिसर्वदा ॥ २३ ॥ ओषध्यःफलवंत्यस्ताःदुःकालादेर्विनाशकाः ॥ सरयूतीरमासाद्ययज्ञान्कुर्वंतियाजकाः ॥ ॥ २४ ॥ यूपस्तंभाःसमंताच्चपशुभिरुपशोभिताः ॥ दृश्यंतेस्थाणुतांप्राप्ताअध्वरांतेसमुच्छ्रिताः ॥ २५ ॥ जैमिनिरुवाच एवंसरामःसुखितःपृथिव्यांत्रिभिश्चतैर्भ्रातृभिरग्निकल्पैः ॥ रराजराजीवपलाशनेत्रोगुणैस्त्रिभिःसत्वरजस्तमोभिः ॥ २६ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेअयोध्याप्रवेशोनामपंचविंशतितमोध्यायः ॥ २५

जैमिनिरुवाच दशवर्षसहस्राणिराज्यंचक्रेसराघवः ॥ प्रजांनलेभेसीतायांपालयन्पूर्वजस्थितिं ॥ १ ॥ ततःकालेनमहतागर्भमाधत्तमारिष ॥ नक्षत्रेवैष्णवेतुर्येपादेतद्देवताभिधे ॥ २ ॥ चरेलग्नेप्रवृत्तेचमातुर्दशांतरप्रदे ॥ ततःसचतुरोमासान्रेमेपत्न्यासहेश्वरः ॥ ३ ॥ प्राप्तेतुपंचमेमासेरामःस्वप्नेददर्शसः ॥ सीतांभागीरथीतीरेविपलंतीमनाथवत् ॥ ॥ ४ ॥ लक्ष्मणेनपरित्यक्तामित्यहोविस्मयान्वितः ॥ प्रातःकृताह्निकोरामोवसिष्ठमिदमब्रवीत् ॥ ५ ॥ रामउवाच स्वप्नेपश्यामिरुदतींसीतांभागीरथीतटे ॥ तद्गर्भविघ्नशांत्यर्थंतस्याःपुंसवनक्रिया ॥ ६ ॥ शीघ्रमादिश्यतांब्रह्मन्पुन्नक्षत्रेदिनेशुभे ॥ तस्यतद्वचनंश्रुत्वावसिष्ठोमुनिपुंगवः ॥ ७ ॥ वसिष्ठउवाच कर्तव्याशुक्लपक्षेतुकृष्णपक्षेप्यपोहतु ॥ पुष्यार्कयोगेपंचम्यांकार्यंपुंसवनंविभो ॥ ८ ॥ मुहूर्तस्यदिनंयावदागमिष्यतिराघव ॥ तावद्राममहाबाहोक्रियतांविप्रतर्पणं ॥ ९ ॥ मुनेस्तद्वचनंश्रुत्वारामोलक्ष्मणमब्रवीत् ॥ सीतापुंसवनंभ्रातःपंचम्यांचभविष्यति ॥ १० ॥ तावत्त्वंगच्छभद्रंतेजनकंचसमानय ॥ विश्वामित्रंमुनिश्रेष्ठंमुनिभिःपरिवारितं ॥ ११ ॥ लक्ष्मणोऽपिनमस्कृत्यरामस्योत्तरतोययौ ॥ ततोरामोमहाबाहुःशिल्पिभिर्मंडपंशुभं ॥ १२ ॥ अकारयत्त्रिगव्यूतिमितमायामतःसमं ॥ तस्मिन्वसिष्ठोरुचिरंस्थंडिलंसमकल्पयत् ॥ १३ ॥ उदुंबरफलानांचस्रजंतत्रचकारसः ॥ शललंत्रिषुशुभ्रंचतथावैसूत्रवेष्टनं ॥ १४ ॥

पीठमौदुंबरंतत्रचतुरस्रंचवल्कुकीं ॥ समकल्पयदेतानिक्रियांगानिमुनीश्वरः ॥ १५ ॥ तावत्सलक्ष्मणस्तूर्णंविश्वामित्रं
महामुनिं ॥ जनकंचसमाहूयरामंनत्वेदमब्रवीत् ॥ १६ ॥ लक्ष्मणउवाच आगतोजनकोरामविश्वामित्रोमहा
तपाः ॥ अर्घ्यादिक्रिययाभ्रातःपूजयैतौसमागतौ ॥ १७ ॥ रामस्तद्वचनंश्रुत्वाविश्वामित्रनरेश्वरौ ॥ नमस्कारार्घ्यदाने
नपूजयामासतौतदा ॥ १८ ॥ ततःप्राप्तेमुहूर्तेचवसिष्ठोव्याहरद्वचः ॥ रामत्वंसीतयासार्धंकुरुस्नानादिकाःक्रियाः ॥ १९ ॥
मंडपंचसमायाहिमात्रभ्रात्रसमावृतः ॥ अथदाशरथीरामःसुस्नातःसीतयासह ॥ २० ॥ आगतोमंडपंरम्यंब्राह्मणैः
समलंकृतं ॥ वेदविद्भिःसदाचारैःस्मृतिज्ञैःकर्मकोविदैः ॥ २१ ॥ ततोवसिष्ठोरामंतांचतुष्केसंन्यवेशयत् ॥ चरुपूर्वम
थोहोमंतिलाज्याहुतिभिःक्रमात् ॥ २२ ॥ चक्रेब्रह्मात्मजःसर्वंसलिलेनाभ्यषिंचनं ॥ सीतायामूर्धजेष्वेवंसूत्रवेष्टंस
माक्षिपत् ॥ २३ ॥ विष्णुबीजकृतांमालांयज्ञांगफलसंभवां ॥ वसिष्ठेनसमाक्षिप्तांबिभ्रतीजानकीतदा ॥ २४ ॥
ब्रह्मगोलकसंघातंबिभ्रतीवविराजते ॥ वीणांप्रवीणोभरतोवादयन्जानकींप्रति ॥ सशिक्षापयिषुर्गीतंगर्भस्यै
वबभौविभुः ॥ २५ ॥ एवंकृतस्वस्त्ययनोरघूद्वहोमुनीश्वरान्पायसशर्कराज्यैः ॥ संतर्प्यवस्त्राणिसुवर्णभूषणंददौरथा
नश्वगणान्द्विजेभ्यः ॥ २६ ॥ जैमिनिरुवाच जनकेनापिरामायदत्तंराज्यमकंटकं ॥ विश्वामित्रंपु
रस्कृत्यवनवासंततोययौ ॥ २७ ॥ अयोध्यायांदाशरथिःशयानःकिलसीतया ॥ एकदारात्रिसमयेत्दृष्टःसीतांवचोऽ
ब्रवीत् ॥ २८ ॥ रामउवाच दोहदःकीदृशोभद्रेकस्मिन्वस्तुनितद्वद ॥ सीतातद्वचनंश्रुत्वाभर्तारमिदमब्रवीत् ॥
॥ २९ ॥ सीतोवाच तवप्रसादान्मेकामःपरिपूर्णःसदाऽनघ ॥ परंभागीरथीतीरेगंतुमिच्छामिराघव ॥ ३० ॥
ऋषिपत्न्यश्चयत्रासन्नृषयोऽजिनवाससः ॥ जहासरामःकिमिदंनत्वमावनवासतः ॥ ३१ ॥ सीतेत्वंदंडकारण्येवर्षाणि
नवपंचच ॥ अघवादोहदस्तेऽयंप्रथमोनिष्फलःकथं ॥ ३२ ॥ प्रातर्भागीरथीतीरेगमनंतेस्तुजानकि ॥ इतितस्यैप्रतिश्रु
त्यसुष्वापससुखंप्रभुः ॥ ३३ ॥ निशीथेतुव्यतिक्रांतेचाराःपुरचरानिशि ॥ रामंरहःसमागम्यवाक्यमूचुःपृथक्पृथक् ॥
॥ ३४ ॥ तवकीर्तिःप्रतापश्चसर्वतोवर्ण्यतेजनैः ॥ रामःपृच्छत्यतिहृद्वंलोकानांकीदृशीस्थितिः ॥ ३५ ॥ ममवाममभा

र्याभ्रातॄणांदुष्कृतंकिल॥ सुकृतंवात्वयाचारभ्रमतानिशियच्छ्रुतं ॥ ३६॥ तत्सत्यंवदचारत्वंमाभीतिंकुरुदंडतः॥ चारोऽपिरघुनाथंतंप्रत्युवाचहसन्निव ॥ ३७॥ चारउवाच रामत्वद्दर्शनादेवदुष्कृतंभस्मसाद्भवेत्॥ तवापिदुष्कृतंमन्येविपरीतंरघूद्वह॥ ३८ ॥ वयंस्थानानिपापानिभ्रमामोरघुनंदन॥ त्वांदृष्ट्वासर्वपापेभ्योमुच्येमभरताग्रज॥ ॥ ३९॥ तथाऽपिलोकोदुर्वारःकिंचिद्दुष्टंवदत्यसौ॥ निशार्धेभ्रमताराजन्दृष्टंचित्रतरंमया॥ ४०॥ कस्यचिद्रजकस्यास्यांपुर्यांभार्यात्यगाद्गृहं ॥ पितुर्वेश्मसमासाद्यतस्थौदिनचतुष्टयं ॥ ४१ ॥ रजक्याजनकश्चैतामगमत्किंमयाकृतं॥ स्मृत्यागमविरुद्धंहिकन्यायत्पितृवेश्मनि॥ ४२ ॥ तस्माद्दुहितरंचैतांनयिष्येभर्तृसन्निधिं॥ यथांबरस्थंकलुषंशोधयेहंस्वकैःकरैः॥४३॥तथास्थितायांकन्यायांगृहेयत्तन्नशोध्यते॥ इत्युक्त्वाभ्रातृभिःसर्वैरजकःपरिवेष्टितः॥४४॥ जामातरंसमासाद्यकन्यांतस्मैन्यवेदयत्॥ततःक्रुद्धोऽब्रवीद्वाक्यंसृक्किणीपरिलेलिहन्॥ ४५॥ जामाताहस्तमुद्यम्यरामोहमितिवोमतिः॥राक्षसानांगृहेसीतांवसंतीमाजहारयः॥४६॥ एतावदेवरघुनंदनसोऽब्रवीत्तद्वाक्यंपुनःपुनरिदंरजकोऽत्रकोपात्॥ राज्ञासमर्थपदवीमधितिष्ठतातद्रामेणचेत्कृतमहंनतथाकरोमि॥४७॥इत्थंवचांसिस्मवदत्यवश्यंनान्योजनोवक्तुमलंबभूव॥ततोमयावाक्यमिदंविविक्तंसत्यंब्रवीत्येषकुतोहिरामः॥४८॥गंगातटद्वीपनिखातयूपःस्वधर्मनिष्ठःपितृवाक्यकर्त्ता॥जेतादशास्यस्यजगच्छरण्यःसराघवःकेनसमोऽस्तिलोके॥४९॥आचारेषुनिषण्णोऽयंनगुणेषुचसस्पृहः॥मूढोनवेत्तितंरामंगुणिनंरजकोत्ययं॥५०॥ मनसाचिंतयित्वैवंरामत्वामहमागमं ॥दूतंतंतुविसृज्याशुचिंतयामासराघवः॥५१॥ शुद्धाऽपिजानकीवह्नौलोकेऽस्मिन्परिगर्ह्यते॥ तस्मात्त्यजेयंनोवेतिचिरंदध्यौसजानकीं ॥५२॥ कथंतांमृगशावाक्षींसीतांपद्मनिभाननां॥ त्यजामिश्रोत्रियोमुख्यामाचारस्यैवपद्धतिं॥५३॥ अथचेमांपरित्यक्ष्येकलौविप्रायथाश्रुतिं॥ इतिचिंतयतस्तस्यप्रातःकालोभवत्तदा ॥५४ ॥ जैमिनिरुवाच ततोऽसौजानकीत्यागेमनःकृत्वारघूद्वहः ॥ आह्वयामासभरतंशत्रुघ्नंलक्ष्मणंतथा ॥ ५५ ॥ एतस्मिन्नंतरेप्राप्तोभरतोलक्ष्मणस्तथा॥ शत्रुघ्नश्चमहाबाहुःसेवितुंरघुनंदनं॥५६॥ ददृशुस्तेततोरामंविषण्णंदीनचेतसं ॥ प्रोचुस्तेऽन्योन्यमासीनंरामंशीघ्रंनचाग

ताः॥५७॥ तस्मात्किंकुपितोभ्राताद्दृष्ट्वाऽस्मान्दानवर्जितान्॥किमस्माभिर्द्विजश्रेष्ठाःप्रातर्नोपूजिताइति॥५८॥ नप्रा
तर्जागृताःकिंवाकिंवाशीघ्रंनमस्कृताः॥इत्येतत्संवदंतस्तेभ्रातरोवह्नितेजसः॥५९॥ आयातारघुनाथंतंनमस्कृत्येदम
ब्रुवन्॥ त्वन्मनस्कान्सदारामत्वत्समर्पितकर्मणः ॥ ६० ॥ त्वद्दर्शनसमुत्कंठान्किमस्मान्नाभिनंदसे॥ रामस्तेषांवचः
श्रुत्वासशनैर्वाक्यमब्रवीत्॥ ६१ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेरामवाक्यंनामषड्विंशतित
मोऽध्यायः॥ २६॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

जैमिनिरुवाच रामस्तुकथयामासचारेणोक्तंयथानिशि ॥ सीताचगर्ह्यतेलोकैर्यथापाखंडिभिःश्रुतिः ॥ १ ॥ लो
कापवादभीतेनत्यज्यतेजानकीमया॥ संसारभयभीतेनयोगिनाममतायथा ॥ २ ॥ तद्रामवाक्यमाकर्ण्यवज्रपातो
पमंतदा॥ भ्रातरस्तेत्रयोऽभूवन्रोमांचितवपुर्धराः॥ ३ ॥ अब्रवीद्भरतस्तेषांरघुनाथमिदंवचः॥ कृपालुस्त्वंरामचंद्रत्व
य्येवपरिगीयते॥ ४ ॥ अंत्यजेभ्योबलात्कश्चित्कपिलांगांसमानयेत्॥ पश्चात्संसर्गदुष्टत्वात्त्यजेत्तांविपिनेतुकः॥५॥
जानकींत्वंतथादायराक्षसात्त्यक्तुमिच्छसि॥ सीतातुभ्यंददौशुद्धिमात्मनोऽग्निमुखेपुरा॥ तत्त्वयाविस्मृतंरामकिंवा
पित्रापुरोदितं॥ ६ ॥ वह्नौप्रदीप्तेज्वालाभिर्लिहंतीभिरिवांबरं ॥सीतायांचप्रविष्टायांतदादशरथोब्रवीत्॥ ७॥ विमा
नस्थोऽवरेरामत्वांप्रतीदृग्वचःशुभं॥ इमांशुद्धांविद्धिपुत्रजानकींभर्तृतत्परां ॥ ८ ॥ अस्याश्चरित्रेणकुलंनःसर्वंविम
लीकृतं॥ येमृताःपुत्रशोकेनतेषांगतिरनुत्तमा॥ ९ ॥ जानकीनःस्नुषायेनतेनवासस्त्रिविष्टपे ॥ एतद्दशरथेनोक्तंवचनं
विस्मृतोभवान्॥ १० ॥ब्रह्मादिभिर्देवगणैर्यत्प्रोक्तंतच्चसंस्मर ॥वह्नौविशुद्धावैदेहीफुल्लासत्कलिकायथा॥ ११॥ गुं
फितावानरैर्दृष्टामालेवरघुसत्तम॥ तथाऽपितेमनोरामकठिनंपरिलक्ष्यते॥ १२ ॥ जैमिनिरुवाच भरतेनेदृशै
र्वाक्यैःप्रोक्तोरामोऽब्रवीद्वचः॥ सत्यमुक्तंत्वयाभ्रातःशुद्धाजनकनंदिनी ॥ १३ ॥ लोकापवादोदुर्वारोराज्ञांकीर्तिवि
नाशनः॥ कीर्तिहीनंजन्मयेषांजीवंतोऽपिमृताहिते॥ १४ ॥पुरूरवाहरिश्चंद्रोनहुषोवैन्यएवच ॥ वरिष्ठान्नृपमुख्यास्ते
गीयंतेयशसाभुवि॥ १५॥ मांधातासगरश्चैवत्वंबरीषोभगीरथः॥ ऋतुपर्णोनलश्चैवयेचान्येपुण्यकीर्त्तयः॥ १६ ॥

ख्यातिंप्राप्ताहिराजानःसत्कीर्त्यैवरघूद्वह ॥ नकीर्तिसदृशंकिंचिन्नराणामिहविद्यते ॥ १७ ॥ पापत्राणंपुण्यदंचस्वर्गा
दिप्राप्तिकारकं ॥ अपकीर्तिस्तुयस्यैवगीयतेमानवैर्भुवि ॥ १८ ॥ तस्यजन्मवृथामन्येजीवितंचनिरर्थकं ॥ मुहूर्तमपि
जीवेतनरःशुद्धेनकर्मणा ॥ १९ ॥ युगांतमपिनैवेहनरःकीर्तिविनाक्वचित् ॥ किन्नजीवंतिहिचिरंकाकोलूकादिपक्षि
णः ॥ २० ॥ तथातज्जीवितंमन्येनृणांकीर्तिविवर्जितं ॥ यैःपुत्रैर्बंधुभिर्दारैःपुंसामपयशोभवेत् ॥ २१ ॥ त्याज्याःपुत्रा
बांधवाश्चदाराःप्राणप्रियाअपि ॥ श्रूयतेहिपुराराज्ञाशिबिनासत्यवादिना ॥ २२ ॥ कीर्त्यर्थंहिस्वदेहस्यदत्तंमांसंहिवि
ष्णवे ॥ तथैवकवचंकर्णोवासवायददौपुरा ॥ २३ ॥ जीवनंवैनतेयायददौजीमूतवाहनः ॥ ददौदधीचिरस्थीनिकीर्त्य
र्थंकीर्तिरुद्दषिः ॥ २४ ॥ तस्मादिमांपरित्यक्ष्येजीर्णांत्वचमिवोरगः ॥ जीवितेममचेदिच्छातवकैकेयिनंदन ॥ २५ ॥
पुनस्त्वयानवक्तव्यंतर्हीदंवचनंमयि ॥ तावत्सलक्ष्मणःक्रुद्धोधुन्वन्हस्तावथाब्रवीत् ॥ २६ ॥ निष्पिष्यपाणिनापाणिंनिः
श्वसन्नुरगोयथा ॥ विसृजंश्चस्वनेत्राभ्यांकवोष्णंवारिदुःखजं ॥ २७ ॥ लक्ष्मणउवाच आःकिंलोकापवादेन
त्याज्यासीतारघूद्वह ॥ भार्याकलहतःकश्चिन्मातरंत्यक्तुमर्हति ॥ २८ ॥ तथात्वंसर्वलोकस्यजननींहातुमिच्छसि ॥ पा
पिनस्तान्हनिष्यामियेसीतांदूषयंतिहि ॥ २९ ॥ म्लेच्छपूज्यैरधर्मुंडैर्यवनैर्दूष्यतेश्रुतिः ॥ साकिंत्याज्याद्विजवरैरितिराम
विचारय ॥ ३० ॥ शत्रुघ्नःकुपितस्तावद्राघवंप्रत्यवोचत ॥ शत्रुघ्नउवाच रामत्वंयद्वचोब्रूषेत्यक्ष्येप्राणानहंय
था ॥ त्वयायेत्याजिताःप्राणास्तेऽमरत्वंप्रपेदिरे ॥ ३१ ॥ यदित्वंहास्यसिप्राणानमरस्त्वंभविष्यसि ॥ तथायेत्वांसमा
श्रित्यवर्तेयुःपापयोनयः ॥ ३२ ॥ निर्दुःखानीरुजास्तेस्युःकिंपुनर्जनकात्मजा ॥ अथवात्वांमृतंसीताजीवयेत्पतिला
लसा ॥ ३३ ॥ त्वंचतांमृगशावाक्षींमृतांजीवयसेकथं ॥ शत्रुघ्नस्यवचःश्रुत्वाऽवोचद्रामःशनैःशनैः ॥ ३४ ॥ राम
उवाच आत्मानमप्यहंजह्यांयुष्मांश्चपुरुषर्षभ ॥ अपवादभयाद्भीतःकिंपुनर्जनकात्मजां ॥ ३५ ॥ जैमिनिरुवा
च रामेब्रुवतिराजेंद्रसीतांत्यक्तुंकृतोद्यमे ॥ ततोभरतशत्रुघ्नौगृहंस्वंस्वमगच्छतां ॥ ३६ ॥ लक्ष्मणोनययौरामंत्य
क्त्वादुःखाद्दवीगतं ॥ लक्ष्मणंकेवलंदृष्ट्वारामोवाक्यमथाब्रवीत् ॥ ३७ ॥ सौमित्रेछिंधिखड्गेनशिरोमेनविचारय ॥

सीतांभागीरथीतीरेत्यक्तुंवागच्छमाचिरं ॥ ३८ ॥ सीतापरित्यागभवोदोषोममतवास्तुन ॥ नौमितेचरणौभ्रातःसी
तांमुंचसरित्तटे ॥ ३९ ॥ रामेणोक्तोलक्ष्मणस्तुलज्जयावनतःश्वसन् ॥ संशयाक्रांतचित्तःसन्चिंतयामासचेतसि ॥ ४० ॥
श्रूयतेधर्मशास्त्रेषुगुरोराज्ञागरीयसी ॥ पुरापरशुरामेणस्वपितुर्वचनात्तथा ॥ ४१ ॥ परश्वधेनवैछिन्नमाशुस्वजननी
शिरः ॥ मनसानिश्चयंकृत्वाकर्तुंरामवचोनृप ॥ ४२ ॥ यंतारमब्रवीद्वीरोरथमानयसाश्वकं ॥ तेनानीतंरथवरंसमारु
ह्यजगामसः ॥ ४३ ॥ सीताभवनमुद्दिश्यततोऽश्वान्यपतन्भुवि ॥ अथयंत्राकशाघातैस्ताडितास्तेययुःशनैः ॥ ४४ ॥
संप्राप्यसीताभवनंलक्ष्मणोऽवतरद्रथात् ॥ प्रविश्यभवनंसीतांनमश्चक्रेप्यवाङ्मुखः ॥ ४५ ॥ सीतैवंविधमालोक्यल
क्ष्मणंवाक्यमब्रवीत् ॥ सीतोवाच मनोरथप्रदोभर्त्तामभराजीवलोचनः ॥ ४६ ॥ मयाहसंत्यायद्रात्रौयाचितं
तद्ददौरघुः ॥ दत्तेऽपिनिष्फलंदेवयावत्त्वंनैवदृश्यसे ॥ ४७ ॥ अधुनातद्रघोर्वाक्यंसत्यंकर्तुंत्वमागतः ॥ गृहीष्यामिविचि
त्राणिवासांस्यगुरुचंदनं ॥ ४८ ॥ मुनिभ्योमुनिपत्नीभ्योदातुंश्रेयोऽभिवृद्धये ॥ तत्तस्यावचनंश्रुत्वालक्ष्मणोत्दृदिवि
व्यथे ॥ ४९ ॥ मुंचन्नश्रूणिशनकैरेवंकुर्विंतिसोऽब्रवीत् ॥ भ्रातुर्वचनपाशेनबद्धःपरवशस्तदा ॥ ५० ॥ जैमिनिरु
वाच ततःसीतादुकूलानिनिदधौस्यंदनोपरि ॥ अजिनानिविचित्राणिखाद्यानिविविधानिच ॥ ५१ ॥ पादुकेराम
चंद्रस्यसौवर्णेमणिचित्रिते ॥ एवंसंस्थाप्यवस्तूनिश्वश्रूंप्रष्टुमथोययौ ॥ ५२ ॥ कौसल्यांरामजननींसीतानत्वेदमब्रवी
त् ॥ दोहदोममसंजातोरंतुंभागीरथीतटे ॥ ५३ ॥ तंचपूरयितुंप्राप्तोलक्ष्मणोममदेवरः ॥ अनुज्ञायुष्मदीयाचेत्ततोग
च्छामितद्वनं ॥ ५४ ॥ सीतावचनमाकर्ण्यकौसल्याप्राहजानकीं ॥ कौसल्योवाच सीतेकथंवनंयासिवृक्षकं
टकसंयुतं ॥ वराहव्याघ्रसिंहादिसत्त्वैर्व्याप्तंभयंकरं ॥ ५५ ॥ शीतोष्णवातवर्षादिदुःखदंत्वमनिंदिते ॥ चिरात्प्राप्तंराज्य
सुखंपरित्यज्यशुचिस्मिते ॥ ५६ ॥ कठोरहृदयैःसेव्यंवनंगंतुमिहेच्छसि ॥ त्वंतुरामंपरित्यज्यवनंगंतुंनचार्हसि ॥ ५७ ॥
मुखंप्रभातेमलिनंतवोष्ठौशुष्यतःश्रमात् ॥ सीतोवाच मद्भर्त्तावनवासीचसदाकंटकमर्दनः ॥ ५८ ॥ निर्मलो
जीवयेद्यस्तुवानरान्कोटिशोरणे ॥ तंस्मरंतींतादृशींमांदुःखदंनवनंभवेत् ॥ ५९ ॥ रामनामजपंत्याश्रममोष्ठौशुष्य

तःकथं॥ मनोवाक्कर्मभिःसेवायुष्मदीयाकृतामया ॥ ६० ॥ ततोममवनेनार्तिर्भविष्यतिचनौमिवः ॥ इतिप्रदक्षिणीकृत्यश्वश्रूंसीताभिनंदिता ॥ ६१ ॥ कैकेयींचसुमित्रांचनत्वापृष्ट्वाजगामसा ॥ यत्रासौलक्ष्मणःशूरोरथमादायतस्थिवान् ॥ ६२ ॥ आरुरोहरथंसीताहर्षनिर्भरमानसा ॥ सगद्गदितकंठोऽसौसौमित्रिःप्राहसारथिं ॥ ६३ ॥ चोदयाश्वान्कशाघातैर्यथाशीघ्रंप्रयांतिहि ॥ जैमिनिरुवाच तस्यतद्वचनंश्रुत्वोवाचसूतोथलक्ष्मणं ॥ ६४ ॥ अहमश्वमनोवेद्मियथावत्पुरुषर्षभ ॥ चलाचलप्रोथतयावक्तुकामाइमेहयाः ॥ ६५ ॥ शीघ्रंहियदिगच्छेमततोनश्वरणैर्मही ॥ दूयेतसीतादुःखेनदुःखिताऽद्यौविशेषतः ॥ ६६ ॥ संग्रामेनोगतिःश्लाघ्यानेदृशेकुत्सितेपथि ॥ इत्येवंत्वदिमन्यंतेवाजिनोभरतानुज ॥ तथाऽपिप्रेरयाम्यद्यपश्यमेहस्तलाघवं ॥ ६७ ॥ इत्येवमुक्त्वावचनंससारथिःपाण्योस्तलेनाभिजघानकंधरां॥ रश्मीन्समादायकशामुदीरयन्प्राचोदयत्तीव्ररयान्हयांस्तदा ॥ ६८ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेलक्ष्मणप्रस्थानंनामसप्तविंशतितमोऽध्यायः ॥ २७ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

जैमिनिरुवाच गच्छंतींतांसमालोक्यसीतांपद्मनिभाननां ॥ अयोध्याऽतीवदुःखेनव्यथितावातचंचलैः ॥ १ ॥ ध्वजानांपल्लवैरेनांवारयंतीवदृश्यते ॥ ततस्तेनरथेनासौगच्छंतीजानकीपथि ॥ २ ॥ ददर्शदुर्निमित्तानिघोराणिसुबहून्यपि शिवासंमुखमागत्यव्यरावीद्भैरवंयथा ॥ ३ ॥ हरिणामार्गमुल्लंघ्यप्रधावंतिस्मसर्वशः ॥ स्फुरतिस्मततोनेत्रंदक्षिणंपुरुषर्षभ ॥ ४ ॥ जैमिनिरुवाच ततस्तुविपरीतानिदुश्चिन्हानिविलोक्यसा ॥ विस्मिताजानकीवीरंलक्ष्मणंप्रत्यवोचत ॥ ५ ॥ पश्यलक्ष्मणचिन्हानिशिवागोमायवोमृगाः ॥ मार्गमावृत्यतिष्ठंतिरुदंतिभयसूचकाः ॥ ६ ॥ परंस्वस्त्यस्तुरामायकौसल्याहर्षकारिणे ॥ तस्यवाङ्कोर्बलंभूयादायुष्यंपरिवर्धतां ॥ ७ ॥ येनरामेणघोराणिरक्षोवृंदानिभूतले ॥ पातितानिशरैस्तीक्ष्णैःशुभंतस्यास्तुसर्वदा ॥ ८ ॥ खरश्चदूषणोयेनत्रिशिरायमसादनं ॥ प्रापितावैजनस्थानेसराज्यंकुरुतांध्रुवं ॥ ९ ॥ अगाधोगाधतांनीतोवानरैर्येनसागरः ॥ बिभीषणोभयात्रातःसोऽस्त्वयोध्यापतिःसुखी ॥ १० ॥ महाबलौरावणकुंभकर्णौलंकापतीतौप्रथितौपृथिव्यां ॥ पापस्यसाक्षादिवमूर्तिभाजौभिन्नौरणेयेनशरैःसुतीक्ष्णैः ॥ ११ ॥ मंदो

दरीनेत्रजलैश्चलंकामभ्युक्ष्यवीरंहरिसूनुमग्रे॥ यःप्रेरयामासमदर्थमेवसराघवोविश्वसुखप्रदोऽस्तु॥ १२॥ एवंवदंती
जनकात्मजासौप्रायात्रिमार्गांजनपापहंत्रीं॥कल्लोलजालंगगनेवितन्वतींपयोऽतिगौरंदधतींपवित्रं॥ १३॥जंब्वाम्र
चंपककुलिंदपटाश्मसारखर्जूरपूगकदलीपनसाढ्यतीरां॥ द्राक्षाफलस्तबकशोभितमंडपालींसौवर्णकेतकवनावलि
मुद्वहंतीं॥ १४॥ तांदिवलोकतटिनींप्रसमीक्ष्यसीताहृष्टाबभूवसफलंममजन्मचैतत् ॥ रामस्यकीर्तिमिवशुभ्रतमांप्र
वाहैःपापानिसर्वजगतःखलुनाशयंतीं॥ १५॥ जैमिनिरुवाच लक्ष्मणस्तुरथात्तस्मादवतीर्ययथाभुवं ॥ नावं
नाविकसंयुक्तामारुरोहतयासह॥ १६ ॥ गंगायास्तटमासाद्यपरंभयविवर्धनं ॥ अवातरत्ततःसीतानावोलक्ष्मणए
वच॥ १७॥ सौमित्रिर्जानकीचापिसस्नतुर्जाह्नवीजले॥ परिधायततोवस्त्रेजग्मतुर्वनगह्वरं॥ १८॥ यस्मिन्धवाश्चख
दिराधात्र्योबदरिकास्तथा॥ बकुलाःपिप्पलाःशुष्काःकोटरैश्चोपलक्षिताः ॥ १९ ॥ कुशानांकंटकास्तीक्ष्णास्तथागो
क्षुरकादयः॥ निंबाश्चबहवःसंतिक्रूराःपक्षिगणास्तथा॥ २० ॥ जीर्णबोधिद्रुमस्थाश्चकाकाःकेंकारकारिणः ॥ तेषां
कोटरमध्यस्थाःसर्पाःफूत्कारकारिणः॥ २१ ॥ चित्तकारण्यमहिषाःसूकराःस्थूलदंष्ट्रिणः ॥ कृष्णांगाऊर्ध्वपुच्छाश्चवृ
श्चिकाबहवस्तथा ॥ २२ ॥ व्याघ्रामृगगणंधर्तुंनिश्चलायोगिनोयथा ॥ बिडालामूषकबिलंसमाश्रित्यखनंतिवै ॥
॥ २३॥ तथाविधंवनंदृष्ट्वासीतारोमांचिताबभौ ॥ यथारामस्यकीर्तिस्त्रीकंटकैःपरिवेष्टिता॥ २४ ॥ सौमित्रिमब्रवी
द्भीतादुर्निमित्तानिपश्यती ॥ सीतोवाच सौमित्रेनचपश्यामिमुनीनामाश्रमानहं ॥ पवित्रवेषास्ताःसाध्वीर्न
पश्यामितपस्विनीः॥ २५॥ मौंजीकृष्णाजिनभृतोद्वादशाब्दान्शिखाभृतः ॥ ऋषिपुत्रान्नपश्यामिमुनीन्वल्कलवास
सः॥ २६॥ नाग्निहोत्रोत्थितोधूमोदृश्यतेभरतानुज॥ सर्वतोदृश्यतेचायंदावःकाष्ठतृणंदहन्॥ २७॥ नवेदध्वनिरत्रा
स्तिश्रूयतेपक्षिणांरुतं॥ कथंवेदध्वनिःश्राव्यस्त्यजंत्यारघुनंदनं॥ २८ ॥ मयासौरघुनाथश्चत्यक्तोबुद्ध्याततोनहि ॥ दृ
श्यंतेमुनिपत्न्यस्तामुनिपुत्रामुनीश्वराः ॥ २९ ॥ पवित्रैरेवदृश्यंतेपवित्राश्रमवासिनः ॥ मयारामपराङ्मुख्यापवित्रा
णिकुरूपया॥ ३० ॥ कथंतान्यग्निहोत्राणिदृश्यंतेवनवासिनां ॥ जैमिनिरुवाच वचांसितानिसौमित्रिःशृण्व

न्नश्रूण्यमुंचत॥ ३१ ॥ अधःपश्यन्नुवाचासौलक्ष्मणोविह्वलोबहु॥ लक्ष्मणउवाच सीतेसआश्रमोदूरेगम्यतां
वैशनैःशनैः॥ ३२ ॥ रामेणत्वंपरित्यक्तासत्यंलोकापवादतः॥ तवापिदोहदोजातोद्रष्टुंभागीरथींनदीं॥३३॥ मामसौ
प्रेरयामासत्वांहातुंगहनेवने॥ किंकरोम्यवशोमातर्भ्रातुस्तस्यवचोहरः॥३४॥ इतितस्यवचःश्रुत्वापपातधरणीतले॥
मूर्छिताजानकीतस्मिन्नंबराद्रोहिणीयथा॥ ३५॥ छिन्नमूलायथावल्लीगृष्टिःशूलाभिपीडिता॥ कुमारीसर्पदष्टेवतद्व
त्साभूतलेऽपतत्॥ ३६॥ ततस्तांलक्ष्मणस्त्रस्तोवस्त्रांतेनाभ्यवीजयत्॥ हस्तेनैकेनचच्छायांकुर्वंश्चमुखपंकजे॥ ३७॥
उवाचयदिरामस्यसाक्षात्सेवाकृतामया॥ तर्हीयंजानकीशीघ्रंसमुत्तिष्ठतुतादृशी॥ ३८॥ इत्येवंवदतस्तस्यचेतनां
लभतेस्मसा॥ नेत्रेसमुन्मिलंतीवैलक्ष्मणंददृशेपुरः॥ ३९॥ अवोचतशनैरेवमांत्यक्त्वागहनेवने॥ कथंयास्यसिसौ
मित्रेजनस्थानेयथापुरा॥ ४०॥ देवराणांदेवरस्त्वंमेममपूज्यतमोमतः॥ त्वयाऽहंदंडकेत्राताविराधांकगतापुरा॥४१॥
फलमूलांबुभिःशुद्धैःपरिचर्याकृतात्वया॥ पर्णशालाविचित्रास्तामदर्थमुपकल्पिताः॥ ४२॥ इदानींत्वदृतेतास्ताःकः
करिष्यतिलक्ष्मण॥ अग्रतःपातिरामोमांपृष्ठतस्तुभवान्वने॥ ४३॥ हादुःखंतुमयाप्राप्तंरामोमांविजहौयतः॥ अपरा
धादृतेवीरोराजाराजीवलोचनः॥ ४४॥ मनसाकर्मणावाचानापराध्यामितंपतिं॥ सदातच्चरणौचित्तेचिंतयामिम
नोरमौ॥ ४५॥ मुखंपद्मविशालाक्षंनिर्मलंचंद्रबिंबवत्॥ चारुदंष्ट्रंश्मश्रुलंचकुंडलाभ्यांसुशोभितं॥ ४६॥ मुक्तामा
णिक्ययुक्तेनकिरीटेनोपलक्षितं॥ द्रक्ष्यामिरामस्यकथंपतितागहनेवने॥ ४७॥ काकपक्षधरःपूर्वंरामःकौशिकसंयु
तः॥ आगतोमिथिलांपूर्णस्त्वयासहमहामते॥४८॥ त्र्यंबकंद्विधाचक्रेपरिणेतुंचमांधनुः॥ मदर्थेवानरैःसार्धंसख्यं
योव्यदधाद्रघुः॥ ४९॥ मद्वियोगेसतिपुरावृक्षानालिंगतिस्मयः॥ सरामोव्यजहात्सीतांदैवमेवहिकारणं॥५०॥ नदो
षस्तस्यरामस्यममायमितिचिंतये॥ अथवाप्राक्तनानांहिविपाकोममकर्मणां॥ ५१॥ लक्ष्मणत्वंमहाबाहोनिर्दोषश्चै
वराघवः॥ अयोध्यांगच्छशीघ्रंत्वंयतोहिपरवानसि॥ ५२॥ योगभैरक्षितादेवोयोवैलंकाधिवासिनीं॥ मांसवैरक्षि
ताचाद्यनदुःखंकर्तुमर्हसि॥ ५३॥ लक्ष्मणत्वंमहाबाहोश्वश्रूंविज्ञापनंकुरु॥ युष्माकंचरणौनित्यंचिंतयामिवनेचरा॥

॥५४॥ ससत्वाहंवनेत्यक्तारामेणापिविजानता ॥ इत्येवंविलपंतीसाजानकीगहनेवने ॥५५॥ पुनरेवशुभाचारालक्ष्म
णंवाक्यमब्रवीत् ॥ सीतोवाच व्यापारेऽस्मिन्कथंरामस्त्वांकृपालुमयोजयत् ॥५६॥ प्रेरणीयःससुग्रीवःकठिनो
भ्रातृघातकः ॥ विभीषणोवाबलवान्रावणद्रोहकारकः ॥५७॥ योयत्रविषयेदक्षःसतत्रविनियोज्यते ॥ वृथात्वांप्रेर
यामासत्यागेममरघूद्वहः ॥ गच्छलक्ष्मणभद्रंतेस्वांपुरींरामपालितां ॥ ५८ ॥ मार्गेक्षेमंभवतुतेभ्रातातेकुप्यतेरघुः ॥ इ
तितस्यावचःश्रुत्वासौमित्रिर्दुःखितोभृशं ॥ ५९ ॥ प्रदक्षिणीकृत्यतदानमश्चक्रेप्यवाङ्मुखः ॥ गच्छन्नुवाचसौमित्रि
स्त्वांमातर्वनदेवताः ॥ ६० ॥ रक्षंतुविपिनेचास्मिन्नेषगच्छामितद्वशः ॥ निर्ययौलक्ष्मणोवीरःपश्यंस्तांजनकात्मजां ॥
॥ ६१ ॥ पादौनचलतस्तस्यकृच्छ्रेणमहताययौ ॥ पश्यतीजानकीमूर्तिंलक्ष्मणस्यापिनिश्चला ॥ ६२ ॥ नददर्शतदातं
तुनिपपातधरातले ॥ मूर्छिताजानकीतत्रमुहूर्तंस्मावतिष्ठति ॥ ६३ ॥ अथैत्यवीरःसौमित्रिस्तीर्त्वाभागीरथींययौ ॥
एकाकिनीवनेबालाविललापमृगीयथा ॥ ६४ ॥ हापापंकिंमयाचीर्णंयत्त्यक्तागहनेवने ॥ जनकस्यकुलेजातादत्ता
स्मैरघवेपुरा ॥ ६५ ॥ दिशोवलोकयामासशून्याश्चविदिशस्तथा ॥ आगमिष्यतिचैवायंलक्ष्मणोऽपिहसेच्चकिं ॥ ६६ ॥
पुनर्मूर्छामवाप्यासौजानकीभयविह्वला ॥ तद्दुःखदुःखिताहंसारुदंतिक्रूरनिस्वनं ॥ ६७ ॥ मृणालानिपरित्यज्यतद्दु
तमिवाभवत् ॥ तृणांकुरंविहायाशुसीतांपश्यंतितादृशीं ॥ ६८ ॥ एणशावाहरिण्यश्चकृष्णसाराविशेषतः ॥ मयूरान्नृ
त्यमुत्सृज्यतस्मिन्कालेप्रधाविताः ॥ ६९ ॥ शकुंताविजहुर्भक्षंछायांपक्षैःस्मकुर्वते ॥ जलस्थाःपक्षिणश्चाभिसिषिचु
र्जनकात्मजां ॥ ७० ॥ चमर्यःपुच्छचमरैर्वीजयंतिस्मजानकीं ॥ अथभागीरथीतीरेस्नातःपुष्पाण्युपाहरन् ॥ ७१ ॥ अ
र्चयामासपवनःसीतांसौगंध्यसंयुतः ॥ तदास्थिताविशालाक्षीरामरामेतिभाषिणी ॥ ७२ ॥ विचेष्टंतीमुक्तकेशाभूमौ
पांसुभिरावृता ॥ यदिप्राणानिमान्हास्येभ्रूणहत्याभविष्यति ॥ ७३ ॥ किंकरोमिक्वगच्छामिकोमेत्राताभविष्यति ॥ इ
तस्ततोधावमानास्खलंतीचपदेपदे ॥ कुशानांकंटकास्तीक्ष्णाःपादयोराचरन्व्यथां ॥ ७४ ॥ सुस्रुवेरुधिरंपद्भ्यांवैदेह्या
भरतर्षभ ॥ एवंदुःखातुराबालावर्ततेस्मतदावने ॥ ७५ ॥ तावत्सधीमान्बहुभिःसमावृतोवाल्मीकिरुग्रैश्चतपोभिरीडि

तः ॥ यूपानथच्छेदयितुंमखार्थंसमागतस्तांददृशेविषण्णां ॥ ७६ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्या
नेवाल्मीकिसमागमोनामाष्टाविंशोऽध्यायः ॥ २८ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥
जैमिनिरुवाच वाल्मीकिस्तांततोदृष्ट्वाविषण्णांदीनचेतसं ॥ तपःसिद्धिमिवक्लिन्नांस्वकीयामनवेक्षणात् ॥ १ ॥
उवाचकात्वंकल्याणिपुत्रीकस्यपरिग्रहः ॥ कस्मादस्मिन्वनेशून्येतिष्ठसेविस्तराद्वद ॥ २ ॥ ततःसीतानमस्कृत्यप्रोवा
चातीवदुःखिता॥ सुतावैजनकस्याहंस्नुषादशरथस्यच॥ ३॥रामस्यभार्याभूदेवसदापतिपरायणा॥त्यक्तास्मितेनवी
रेणनजानेकेनहेतुना॥ ४ ॥वाल्मीकिस्तांसमाश्वास्यप्रोवाचवचनंशुभं॥ वाल्मीकिरुवाच सीतेलभस्वपुत्रौद्वौ
माशोकंकुरुसुव्रते ॥ वाल्मीकिरितिनामाहंमुनिर्जनकपूजितः ॥ ५ ॥ प्राप्ताश्रमंमेरुचिरंपत्रपुष्पफलावृतं ॥ पर्णशा
लांविधास्यामित्वदर्थंवरवर्णिनि ॥ ६ ॥ यत्रप्रसूतिर्भवितारुचिरातवजानकि ॥ मुनेस्तद्वचनंश्रुत्वाहर्षिताजनकात्म
जा ॥ ७॥ निदाघार्तामयूरीवश्रुत्वावैघननिस्वनं॥ वाढमित्येवमुक्त्वासाप्रययौपृष्ठतोमुनेः ॥ ८ ॥ तयासहमहाभागो
वाल्मीकिःप्रापआश्रमं ॥ यस्मिन्व्याघ्राश्चसिंहाश्चगोभिःक्रीडंतिहर्षिताः ॥ ९ ॥ बिडालास्येषुलीयंतेमूषकाःस्वबिलेय
था ॥ नकुलाउरगाश्चैवमयूरायत्ररेमिरे ॥ १० ॥ रमंतेस्ममृगैःसार्धंचित्तकास्त्यक्तमत्सराः ॥ सरसीषुविचित्रासुबको
मत्स्यान्नहंतिहि ॥ ११ ॥ साचैनमाश्रमंदृष्ट्वावाल्मीकेस्तांस्तपोधनान् ॥ ऋषिभार्याःशुभाचाराऋषिपुत्रांश्चशोभना
न् ॥ १२ ॥ हर्षेणमहताविष्टानमश्चक्रेपुनःपुनः ॥ ताभिस्तैश्चप्रयुक्ताशीर्जानकीशुभलक्षणा ॥ १३॥ कल्पितांमुनिपुत्रै
श्चपर्णशालामुपाविशत्॥ दत्तानिमुनिपत्नीभिःफलानिबुभुजेपयः ॥ १४ ॥ पीत्वासुनिर्मलंतस्यांशालायांसास्मति
ष्ठति ॥ नौतिस्मचरणौनित्यंवाल्मीकेःशृणुतेकथाः ॥ १५ ॥ एवंतस्मिन्वसंत्याश्चसीतायात्व्यगमन्नव ॥ मासागर्भस्य
वाल्मीकेराश्रमेफलितद्रुमे ॥ ॥ १६ ॥ अतीतेनवमेमासेजानकीसुषुवेयमौ ॥ निशीथेसुमुहूर्तेचमुनिपत्न्योविचक्ष
णाः ॥ १७॥ तत्रत्यमुपचारंतुकल्पयामासुरागताः॥ गायंतिगीतंहर्षेणसीतेयंसुषुवेयमौ ॥ १८ ॥ अनयोःप्रभयावे
श्मदीप्तमासीत्समंततः ॥ दिशस्तुविमलाजाताववौवातोऽतिसौरभः ॥ १९ ॥ प्रदक्षिणार्चिस्तत्रासौव्यशोभतहुताश

नः॥ ततःशिष्याःप्रधावंतिवाल्मीकिंप्रतिशंसितुं॥ २०॥ असूतपुत्रौभोब्रह्मन्जानकीविस्मयोमहान्॥ ततोमुनिःकुशान्रम्याँल्लवान्मुष्टिमितान्दधन्॥ २१॥ आगतोयत्रतौबालौदृष्ट्वाहर्षसमन्वितः॥ तावभ्यषिंचद्दर्भैश्चलवैःसार्धमुनिस्तदा॥ २२॥ तन्नामानौमुनिश्चक्रेकुशोलवइतिस्वयं॥ दिनेदिनेवर्धमानौचंद्रसूर्याविवोदितौ॥ २३॥ जातकर्मादिकंसर्वंचक्रेसऋषिसत्तमः॥ द्वादशाब्देततोमौंजीबंधनंव्यदधात्तयोः॥ २४॥ प्रार्थयित्वाकामधेनुंवसिष्ठान्मुनिपुंगवः॥ वाल्मीकिर्भोजयामासब्राह्मणान्वनवासिनः॥ २५॥ कामधेनोःसकाशाद्विभक्तःप्रादुरभूच्छुभः॥ सूपंविचित्रंमुद्गानांशाकाश्चविविधाअपि॥ २६॥ चंद्रबिंबसमाजाताःपूपाःशतसहस्रशः॥ पूरिकाघृतपक्वाश्चशतछिद्राउदुंबराः॥ २७॥ फलान्यमृतकल्पानिप्रादुर्भूतानिधेनुतः॥ करंजिकामोदकाश्चतथावैसूत्रकोद्भवाः॥ २८॥ निस्तुषाणांतिलानांचनारिकेलसमुद्भवाः॥ चारबीजोद्भवावृक्षनिर्यासकृतबंधनाः॥ २९॥ फेणिकाश्चंद्रबिंबाभाःसहस्रपुटसंयुताः॥ पर्पटामाषसंभूतास्तथातंडुलचूर्णजाः॥ ३०॥ एवंविधानिचान्नानिपक्वान्नानिददातिगौः॥ तेनचान्नेनवाल्मीकिस्तर्पयामासतान्जनान्॥ ३१॥ ततःकृतोपनयनावागतौद्वौकुमारकौ॥ अध्येषातांशिशूवेदंसांगंवाल्मीकिनोदितं॥ ३२॥ तस्माद्रामचरित्रंतज्जगतुर्मधुरस्वनौ॥ लवस्तालधरश्चासीद्वीणाहस्तःकुशोजगौ॥ ३३॥ आलापैर्गगनंसर्वंव्याप्नुवञ्श्रृण्वतांमनः॥ ततस्तेमुनयोहृष्टाःसाधुसाध्वितिचाब्रुवन्॥ ३४॥ धनुषीप्रददौधीमान्वाल्मीकिःसगुणेदृढे॥ इषुधीचाक्षयौरैभ्यस्ताभ्यांतस्यमुनेःसखा॥ ३५॥ तपोधनास्ततःसर्वेअस्त्रग्रामंतयोर्ददुः॥ तपोबलेनतेसर्वेमुनयःप्रददुःशरान्॥ ३६॥ किरीटकवचान्येकेददुःखड्गौचचर्मणी॥ एवंधनुर्धरौवीरौतनुत्राणभृतौयमौ॥ ३७॥ काकपक्षधरौतस्मिन्नाश्रमेचरतःस्मतौ॥ सीतांशुश्रूषमाणौतौकंदमूलफलैःशुभैः॥ ३८॥ पादसंवाहनैश्चापिपरांप्रीतिंवितेनतुः॥ जैमिनिरुवाच अयोध्यायांमहाबाहुःपालयन्रघुवंशजः॥ ३९॥ नशर्मलेभेरामोऽसौब्रह्महत्याभिपीडितः॥ अश्वमेधंक्रतुवरंकर्तुकामोऽप्यभूद्रघुः॥ ४०॥ वसिष्ठंचसमाहूयविश्वामित्रंचगालवं॥ वामदेवंसजाबालिमिदंवचनमब्रवीत्॥ ४१॥ रामउवाच अश्वमेधंकरिष्यामिकथ्यतांतस्यवैविधिः॥ अश्वश्चकीदृशो

भाव्योदानंकीदृग्विधीयते ॥ ४२ ॥ किंमयाचरणीयंस्याद्भतंतच्चनिरूप्यतां ॥ ततोवसिष्ठःकथयांबभूवदुःखेनसाध्यः
किलयज्ञएषः ॥ अश्वश्चभाव्यःकुमुदेंदुवर्णःपीतश्चपुच्छेमलिनश्चकर्णे ॥ ४३ ॥ सरक्षणीयोऽब्दमलंत्ववीरैर्धृतःपरैश्चा
पिविमोक्षणीयः ॥ आरंभएवास्यहिविप्रवर्याःपूज्याःसहस्रंश्रुतिपारगाश्च ॥ ४४ ॥ एकोरथोवारणएकएवदशाश्वमु
ख्याश्चसुवर्णभारः ॥ शतंगवांहेमविभूषितानांप्रस्थश्चदेयोवरमौक्तिकानां ॥ ४५ ॥ एकैकशोभत्यचतुष्टयंचकार्येषु
दक्षंकिलदेयमत्र ॥ ४६ ॥ असिपत्रव्रतंरामकथंत्वन्नुविधास्यसि ॥ यज्ञकर्मणिवैभार्याद्वितीयासहधर्मिणी ॥ ४७ ॥
तयाविरहितंरामविफलंपरिकथ्यते ॥ रामउवाच सौवर्णीप्रतिमाकार्याजानकीसदृशीप्रभो ॥ तादृश्यासीत
यासार्धंकरिष्येव्रतमुत्तमं ॥ ४८ ॥ अश्वमेधसमारंभःक्रियतांमुनिपुंगवैः ॥ अश्वशालासुरुचिरंशास्त्रोक्तैर्लक्षणैर्युतं ॥
॥ ४९ ॥ निरीक्ष्यवाजिनंमत्यंततोदीक्षाप्रदीयतां ॥ तद्भाषितमुपश्रुत्यवसिष्ठोमुनिभिर्वृतः ॥ ५० ॥ वाजिशालासुधव
लमश्वमाहारयन्नरैः ॥ गोक्षीरवर्णमुखतःकुंकुमाभंसुकेसरं ॥ ५१ ॥ एकतःश्यामकर्णंतंहयमालोक्यविस्मितः ॥ व
सिष्ठोब्राह्मणान्सर्वान्सहस्रंपर्यपूजयत् ॥ ५२ ॥ वस्त्रालंकरणैर्दिव्यैर्वाजिभिश्चमनोजवैः ॥ रथैश्चवारणैर्मत्तैःकलधौ
ततरैःशुभैः ॥ ५३ ॥ दोग्ध्रीभिर्धेनुभिश्चैवपूजयामासतान्द्विजान् ॥ ततश्चदीक्षितोरामस्तादृश्यासीतयासह ॥ ५४ ॥ ह
यंतंपूजयामासचंदनेनसुगंधिना ॥ पुष्पैःस्रग्भिश्चचमरैःशोभितंरघुनंदनः ॥ ५५ ॥ भालेबध्वाचसौवर्णपत्रंतस्यहरेः
पुनः ॥ तस्मिन्पत्रेविलिखितंरामोदशरथात्मजः ॥ ५६ ॥ एकवीराग्र्यकौसल्यातस्याःपुत्रोमहाबलः ॥ तेनमुक्तंहरिवरं
गृह्णातुबलवान्नृपः ॥ ५७ ॥ इत्यभिप्रायसहितंपत्रंभालेव्यशोभत ॥ शत्रुघ्नंचादिदेशाथत्वयारक्ष्यस्तुरंगमः ॥ ५८ ॥
ततःसतुरगोमुक्तःपृष्ठतोलक्ष्मणानुजः ॥ अक्षौहिणीभिस्तिसृभिर्जगामसहितोबली ॥ ५९ ॥ नानादेशान्व्यतिक्रम्य
नगरोपवनानिच ॥ लीलयाविचचाराशुशत्रुघ्नसहितोहयः ॥ ६० ॥ राजानस्तंहयंदृष्ट्वानमश्चक्रुःपराङ्मुखाः ॥ येशूरा
बलवंतश्चतेगृह्णंतिहयोत्तमं ॥ ६१ ॥ तान्जित्वाबलवान्वीरान्शत्रुघ्नोमोचयद्धयं ॥ ततःसतुरगःप्राप्तोवाल्मीकेराश्र
मेशुभे ॥ ६२ ॥ वाल्मीकिर्वरुणाहूतोमखार्थंतलमभ्यगात् ॥ आश्रमोपवनंरम्यंप्रविशेशतुरंगमः ॥ ६३ ॥ दाडिमाः

 

फलितायत्रचूताःपल्लविनोनवाः॥ मुनिद्रुमाःपुष्पवंतोराज्यःकिंचंद्रिकांचिताः ॥ ६४॥ अनेकाःपुष्पजात्यश्चपुष्पिता देवताइव॥ मृद्वीकामंडपारम्याघटयंत्रैःसुशोभिताः॥ ६५ ॥ रंभास्ताःफलितायत्रस्वर्लोकात्किंसमागताः ॥ तद्रक्ष माणोवीरोसौधनुःपाणिर्लवोबली ॥ ६६ ॥ दूर्वांकुरांश्चरंतंतुवाजिनंददृशेपुरः ॥ ऋषिपुत्रान्समाहूयहयाभ्याशंज गामसः॥ ६७॥ हरेर्भालगतंपत्रंवाचयामासबालकः ॥ एकवीराद्यकौशल्यातस्याःपुत्रोरघूद्वहः ॥ ६८॥ तेनरामेण मुक्तोऽसौवाजीगृह्णात्विमंबली॥ तत्पत्रस्थमभिप्रायंज्ञात्वाशीघ्रंलवोऽब्रवीत् ॥ ६९ ॥ अस्माकंजननीवंध्यात्वेकवी रानसाकिमु॥ इत्येवमुक्त्वावचनंलवोदधेतुरंगमं॥७०॥ उत्तरीयंसमुत्क्षिप्यबबंधकदलीतरौ॥ वारयंतिस्मतंवीरंमुनि पुत्राभयान्विताः॥७१॥ मुनिपुत्राऊचुः लवत्वयारामवाजीवृथाऽयंबध्यतेबलात् ॥ अस्ययेरक्षकास्तेत्वांनेष्यं तित्यज्यतामयं॥ ७२॥ अनादृत्यवचस्तेषामब्रवीत्कुपितोलवः॥ लवउवाच ऋषिस्त्रीकुक्षिजायूयमहंसीतोदरो द्भवः॥ ७३॥ सीतायाश्चोदरेजातःक्रमिरेवनसंशयः॥ यद्यमुंवाजिनंबध्वामुच्येयंभयशंकया ॥ परंश्रेयस्तुमरणंनल ज्जामामुपाव्रजेत्॥७४॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेतुरगग्रहणोनामएकोनत्रिंशोऽध्यायः ॥ २९॥ ॥ ७॥ ॥ ७॥ ॥ ७ ॥ जैमिनिरुवाच ततःप्राप्तंमहत्सैन्यंरथवाजिसमा कुलं॥ मत्तद्विरदसंबाधंपत्तिभिश्चसमावृतं॥ १ ॥ कुतोऽश्वश्चकुतोऽश्वश्चव्याहरंतोमहाबलाः॥ रथिनःशतसाहस्राः प्राप्ताःशत्रुघ्नपालिताः॥ २॥ ददृशुःकदलीवृक्षेबद्धमश्वंमहारथाः॥ पप्रच्छुःकेनबद्धोऽयंलघूंस्तान्ब्रह्मचारिणः॥ ३॥ तेऽब्रुवन्नाम्रवृक्षस्यमूलेतिष्ठतिनिर्भयः॥ लवश्चनाम्नाविख्यातस्तेनायंविधृतोहयः॥ ४॥ प्रहस्यरथिनस्तेतुप्रोचुर्मूर्खो ऽस्तिबालकः॥ बलंहयंपालयन्नोनजानात्येषवैशिशुः ॥ ५॥ मुच्यतांमुच्यतांचाश्वोयथाशीघ्रंव्रजेद्धरां ॥ तावत्प्राप्तो महाबाहुर्धनुष्पाणिर्लवोबली ॥ ६॥ किमिदंगर्वितैर्वीरैःक्रियतेहयमोचनं ॥ मांजित्वामुच्यतामश्वोमयितिष्ठतिनक्व चित्॥ ७॥ अशृण्वतांवचस्तेषांमोक्तृणांहयमुत्तमं॥ चिच्छेदहस्तान्सलवोबलेननिशितैःशरैः॥ ८ ॥ तेछिन्नहस्तायो द्धारोब्रुवंतिस्मनिपात्यतां॥ ततस्तंशरवर्षेणववृषुस्तेसमागताः॥९॥ केचिच्छक्तीश्चपाशांश्चचिक्षिपुःशतशोबलात्॥

आपतच्छरसंघातोनपस्पर्शलवंतदा ॥ १० ॥ यथाहिगौतमीतोयेस्नातंपापचयोमहान् ॥ तच्छस्त्रसंघंचिच्छेदयोगी
वभववबंधनं ॥ ११ ॥ पंचभिःपंचभिर्बाणैरेकैकंहृद्यताडयत् ॥ निषंगाभ्यामक्षयाभ्यांगृह्णन्बाणान्मुमोचसः ॥ १२ ॥
गजाभिन्नाद्विधाबाणैःशुंडाश्छिन्नाद्विधाद्विधा ॥ शिरांस्याधोरणानांचचिच्छेदनिशितैःशरैः ॥ १३ ॥ काश्मीरकंबला
न्वीरोघंटाश्चिच्छेदलंबिताः ॥ हस्तिमंचान्पताकाश्चव्यलुनात्सलवोबली ॥ १४ ॥ रथान्कांचनसन्नाहानच्छिनद्धन्विनांव
रः ॥ चक्राणिचक्ररक्षांश्चत्रिवेणून्सारथींस्तथा ॥ १५ ॥ अश्वांश्चव्यधमद्बाणैस्तथावैरथसारथीन् ॥ चामराणिध्वजस्तं
भान्धनूंषिसुदृढानिच ॥ १६ ॥ तूणीरान्निशितैर्बाणैश्चिच्छेदसकुशानुजः ॥ अवधीत्तुरगांश्चापिसाश्वारोहान्रघूत्तमः
॥ १७ ॥ पदातीन्सायुधान्प्रासान्चिच्छेदतिलशस्तदा ॥ एवंलवोमहत्कर्मचक्रेसंग्राममूर्धनि ॥ जैमिनिरुवाच स
दृष्ट्वानिहतंसैन्यंबालकेनपदातिना ॥ १८ ॥ शत्रुघ्नःकुपितोवीरोरथमारुह्यचागमत् ॥ विस्फारयन्धनुःश्रेष्ठंतिष्ठतिष्ठेतिचा
ब्रवीत् १९ ॥ एवंवदंतंशत्रुघ्नंविव्याधदशभिःशरैः ॥ श्रयन्माहेश्वरंस्थानंलवोनिर्भयमानसः ॥ २० ॥ हृदिचैकेनविव्या
धचतुर्भिश्चतुरोहयान् ॥ अच्छिनत्ध्वजमेकेनचतुर्भिश्चक्ररक्षकान् ॥ २१ ॥ ततश्चैकेनबाणेनधनुर्ज्यामाच्छिनल्लवः ॥
आरोपयित्वाशत्रुघ्नोज्यांद्वितीयांशरासने ॥ २२ ॥ ततोनालीकनाराचांस्तीक्ष्णभल्लान्मुमोचसः ॥ त्रिभिर्ललाटेवि
व्याधलवंतंलक्ष्मणानुजः ॥ २३ ॥ त्रिभिस्तैस्ताडितोबालःप्रहसन्वाक्यमब्रवीत् ॥ लवउवाच ललाटेममपुष्पा
णिलग्नानिकमलानिकिं ॥ २४ ॥ एतावत्तेबलंवीरसमग्रंपरिलक्ष्यते ॥ इत्येवमुक्त्वावचनंचतुर्भिश्चतुरोहयान् ॥ २५ ॥
अनयन्निशितैर्बाणैर्यमस्यसदनंमहत् ॥ सारथेश्चशिरःकायाच्छरेणैकेनचाहरत् ॥ २६ ॥ द्वाभ्यांशराभ्यांचिच्छेदध्व
जंचास्यसमुच्छ्रितं ॥ द्विधाचक्रेलवोबाणैःशत्रुघ्नस्यधनुर्दृढं ॥ २७ ॥ सच्छिन्नधन्वाविरथोहताश्वोहतसारथिः ॥ शत्रु
घ्नःकुपितोवीरोधनुरन्यत्समाददे ॥ २८ ॥ सगुणंधनुरादायशरंचैकंसमाददे ॥ पीतवर्णंसुनिशितंगार्ध्रपत्रैरलंकृतं ॥
॥ २९ ॥ ततोऽब्रवीत्सशत्रुघ्नःपलायस्वशिशोऽधुना ॥ अन्यथामरणंतेस्यात्कृपामांबाधतेत्वयि ॥ ३० ॥ तदाकर्ण्यवच
स्तस्यकुपितोबलवाँल्लवः ॥ चिच्छेदतंशरंदिव्यंसद्विधाव्यपतद्विभो ॥ ३१ ॥ यथाहिपूर्वजाःपापात्स्वर्गाद्वैनिपतंत्यधः ॥ कू

टसाक्ष्यंचयेकुर्युर्व्यवहारच्युतास्तथा॥३२॥शत्रुघ्नोविस्मयाविष्टोबाणंचान्यंसमाददे॥ तंशरंकालसंकाशंयावद्धनुषि संदधे ॥ ३३ ॥ तावत्सचापंसशरंचिच्छेदकुपितोलवः॥ ततोजग्राहशत्रुघ्नोलवणंयेनचावधीत्॥ ३४ ॥ तद्धनुस्तंशरं दिव्यंसूर्यवैश्वानरप्रभं॥ मुमोचबाणंरुचिरंहतोऽसीतिवचस्तथा ॥ ३५ ॥ अमोघंसशरंज्ञात्वालवःसस्मारतंकुशं ॥ अस्मिन्नवसरेभ्राताकुशोमेविद्यतेयदि॥ ३६ ॥ तदाऽस्यबाणस्यभयंनस्यान्ममकदाचन॥ अथतेजानकीसत्यात्पा तिव्रत्यादमुंशरं॥ ३७॥ छेद्मिमेस्यात्ततःकीर्तिरितिबाणंमुमोचसः॥ तेनबाणेनतंबाणंमध्येचिच्छेदबालकः॥ ३८ ॥ जैमिनिरुवाच पूर्वार्धंन्यपतद्भूमावुत्तरार्धंचनापतत्॥ तेनार्धेनधनुश्छिन्नंलवस्यहृदयंतथा॥ ३९ ॥ सच्छिन्नध न्वात्हृदिताडितोभृशंविभग्नचापोनिपपातभूतले॥ शिखीसुवेषोरुधिरावलिप्तोमुमोहबालोनविवेदकिंचन ॥ ४० ॥ ततःशंखाश्चभेर्यश्चवादयंतःसुहर्षिताः॥ योधाःशत्रुघ्नसैन्यस्थाम्तशेपाजगर्जिरे ॥ ४१ ॥ मुमुचुस्तंहयंवीराभीतंह ष्ट्वाचतंलवं॥ मुक्तःसतुरगोयोधैर्बभ्रामोपवनेतदा ॥ ४२ ॥ कृपाविष्टश्चशत्रुघ्नोलवमुत्थाप्यपाणिना॥ रामाकृतिर यंबालःसिच्यतांपयसाऽधुना॥ ४३ ॥ ततस्तेसेवकाःशीघ्रमंभोभिःसिषिचुर्लवं ॥ सजीवंरथमारोप्यपृष्ठतोऽश्वस्यते ययुः॥ ४४॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेलवमूर्छाप्राप्तिर्नामत्रिंशोऽध्यायः॥ ३०॥ ॥श्री॥

जनमेजयउवाच लवेधृतेयथायुद्धंघोररूपंबभूवह ॥ जगामकुत्रचकुशःकथंसीतानवेदतत्॥ १ ॥ जैमिनेसर्व माचक्ष्वपवित्रांकुशसत्कथां॥ जैमिनिरुवाच शृणुराजन्प्रवक्ष्यामिकुशस्यचरितंमहत्॥ २ ॥ यच्छ्रुत्वासर्व पापेभ्योमुच्यतेस्त्रीपुमानपि॥ अश्वेप्रचलितेतस्मिँल्लवेनीतेमहारथैः॥ ३ ॥ अश्रुपूर्णमुखाःसीतांमुनिपुत्रास्तदाययुः॥ सीतेबद्धोलवेनाश्वःकस्यचिन्नृपतेर्बलात्॥ ४॥ नृपतेस्तस्यसैन्येनपुत्रस्तेयुयुधेलवः॥ निहत्यसैन्यंबालोऽसौश्रांतोवी रेणकेनचित्॥ ५ ॥ धृतोहस्तगतंछित्वाधनुर्नीतःपुरंप्रति ॥ तद्वाक्यमाकर्ण्यबभूवजानकीचित्रस्थितादेववरांगनास ती ॥ यथाहिविद्युत्ध्वनिनाकुमारिकाधनीनरोवस्त्वपहारतोयथा॥ ६ ॥ सीतोवाच मनसाकर्मणावाचायद्य हंरामतत्परा॥ तेनसत्येनमेपुत्रोलवोऽस्तुकुशलीरणे॥७॥ तावज्जीव्याल्लवःपुत्रोयावज्जयेष्ठःसमाव्रजेत्॥ एकाकीनिह

तोबालःपापिष्ठैस्तैर्महारथैः ॥ ८ ॥ रुरोदसाभृशंबालापुत्रशोकेनपीडिता ॥ मामनापृच्छ्ययातोऽसिशासनेनेरितोल
व ॥ ९ ॥ चंद्रबिंबसमानंतेमुखंबाणैरभिघ्नत ॥ गात्रंचशकलीजातंलवस्यनिशितैःशरैः ॥ १० ॥ कंदमूलफलाशी
चद्वादशाब्दोविचक्षणः ॥ परंतुयुध्यतांतेषांशूराणांतंचबालकं ॥ ११ ॥ कराःकथंप्रवृत्तास्तेनिर्दयानांचपापिनां ॥ अ
स्मिंश्चसमयेतातोवाल्मीकिर्नकुशोबली ॥ १२ ॥ कस्येदंपुरतोवक्ष्येदुःखंप्राप्तंसुदारुणं ॥ जैमिनिरुवाच ता
वत्समित्कुशाहारीवनान्निवर्ततेकुशः ॥ आगच्छतःकुशस्याथदुर्निमित्तानिभारत ॥ १३ ॥ बहूनिपथिजातानिचित्तो
द्वेगकराणिच ॥ अपसव्यंमृगायांतिनदंतोभैरवंरवं ॥ १४ ॥ ततःसव्यथयाविष्टोरामपुत्रोरघूद्वहः ॥ चिंतयामाससमन
साकेशवंविघ्नहारिणं ॥ १५ ॥ चिंतयाविष्टमनसोबाहूतौस्फुरितौभृशं ॥ नेत्राभ्यांस्वयमेवांभःसुस्रुवेविव्यथेमनः ॥
॥ १६ ॥ एवंसआश्रमद्वारंकुशःप्राप्योव्यचिंतयत् ॥ लवोजवेनचायातिकथंमेसंमुखोनहि ॥ १७ ॥ आयांतंतंलवंप्रा
तर्निवारयितवानहं ॥ तस्मात्किंकुपितोनैतिकेनचासौधृतोलवः ॥ १८ ॥ इत्येवंचिंतयन्वीरोददर्शजननींस्वकां ॥ सी
तांनमस्कृत्यकुशोजगादवचनंशुभं ॥ १९ ॥ मातःकस्मात्प्रलापोऽयंक्रियतेक्कलवोगतः ॥ सीतोवाच वत्सत्व
यिगतेरण्येफलान्याहर्तुमंजसा ॥ २० ॥ सहितोमुनिपुत्रैस्तुलवःक्रीडापरायणः ॥ उद्यानंगतवांस्तत्रकस्यचिन्नृपतेर्ह
यः ॥ २१ ॥ विचरन्निच्छयाप्राप्तोत्यग्रहीत्तंबलाल्लवः ॥ यथाबलंयुध्यमानोरणेमूर्च्छामुपागतः ॥ २२ ॥ तैर्नीयतेपुरंब
ध्वाजीवन्वामृतएववा ॥ कस्तंमोचयिताबालंत्वांविनाकुशपुत्रक ॥ २३ ॥ यथाविष्णुःस्मृतोभक्तंसंसारान्मोचये
द्द्रुतं ॥ तत्तस्यावचनंश्रुत्वात्रिशाखांभ्रुकुटींदधन् ॥ २४ ॥ नेत्रेविलोहितेबिभ्रन्कुशोवचनमब्रवीत् ॥ कुशउवाच
अद्यमद्बाणभिन्नानांवैरिणांरुधिरंधरा ॥ २५ ॥ पास्यतेरुचिरंकोष्णंशोषितंसूर्यभानुभिः ॥ इंद्रश्चवरुणोवापिकुबेरो
वामहाबलः ॥ २६ ॥ यमश्चयक्षगंधर्वास्तेषांसाहाय्यकारिणः ॥ भवंतुसर्वेदेवाश्चसाध्याश्चापिमरुद्गणाः ॥ २७ ॥ त
थाऽपितान्रणेजित्वालवंतंपरिमोचये ॥ एषगच्छामिभोमातर्निषंगौधनुरेवच ॥ २८ ॥ प्रदेहिचर्मखड्गंचकिरीटंकव
चंतथा ॥ तत्पुत्रवचनंश्रुत्वासत्वरंजानकीतदा ॥ प्रविश्यशालांतांरम्यांप्रददाविषुधीधनुः ॥ २९ ॥ चर्मखड्गंकिरीटंच

कवचंचकुशोऽग्रहीत्॥ सन्नद्धःकवचीखड्गीचापबाणधरोयुवा ॥ ३० ॥ कुशोययौनमस्कृत्यजननींतांचजानकीं॥
सीतयासौप्रयुक्ताशीःकुशोबाहूव्यताडयत्॥ ३१ ॥ विस्फारयन्धनुश्चोग्रंजगामत्वरितोबली ॥ यथामत्तद्विपान्सिंही
तनयोऽभ्येतिनिर्भयः॥३२॥ गच्छतस्तांस्ततोदृष्ट्वाशत्रून्दूरादथाह्वयत् ॥ तिष्ठंतुवैरिणःसर्वेयदिशक्तिर्हिविद्यते॥३३॥
नोचेद्द्वंधुर्मदीयोऽसौमुच्यतांवाथयुद्ध्यतां ॥ अनिर्जित्यकुशंवीरंनोपसर्पितुमर्हथ॥ ३४ ॥ तच्छ्रुत्वावचनंघोरंयोधावा
क्यमथाब्रुवन्॥ कोऽयमायातिवीरोसौखड्गचर्मधरोयुवा॥ ३५ ॥शरचापयुतःशूरःकिरीटीकवचीमहान् ॥ कालोनू
नंहिसर्वेषामयंनोभविताकिल॥ ३६॥ इतिजल्पंतिवैसर्वेसैन्यकाभयविह्वलाः ॥ध्वजाःकणकणायंतेद्रुमावातेरिता
इव ॥ ३७॥ किरीटानिचवीराणांगृध्राःपस्पर्शुरंबरात्॥ तस्मिन्कालेनिषंगेभ्यःस्वयंनिर्यात्यलंशराः॥ ३८॥ कोशेभ्य
श्चपृथग्भूताःस्वयमेवासयोययुः॥ चंडोवातःप्रववृतेद्रुमानुन्मूलयन्ध्वजान्॥ ३९ ॥रजसासंवृतंव्योमसूर्योऽतर्धान
मागमत्॥क्षणात्प्रशांतेरजसिवीरास्तंददृशुःकुशं ॥ ४० ॥ जैमिनिरुवाच आयांतंतंकुशंदृष्ट्वाशत्रुघ्नोवाक्यम
ब्रवीत् ॥ गच्छसेनापतेशीघ्रंनिवारयशिशुंशरैः॥४१॥ यावत्सैन्यंव्यूहयामस्तावद्युध्यस्वमारिष॥ सेनापतिरुवाच
अहमेनंहनिष्यामिप्रसादात्तवसुव्रत ॥ इत्युक्त्वाप्रययौबालंसेनाध्यक्षस्तदाबली ॥ ४२ ॥तिष्ठतिष्ठेतिचोवाचविव्या
धदशभिःशरैः॥ कुशस्तानच्छिनद्बाणान्सेनावाहमताडयत्॥ ४३ ॥ चतुर्भिश्चतुरोऽस्याश्वान्जघानकुपितःकुशः ॥
सारथेश्चशिरःकायाज्जहारप्रहसन्निव॥ ४४ ॥रथंचतिलशःकृत्वातान्हत्वापार्ष्णिसारथीन् ॥ चिच्छेदचधनुस्तस्यक
वचंचातिनिर्मलं॥ ४५॥ द्वाभ्यांशराभ्यांचिच्छेदहस्तौतस्यदुरात्मनः॥ चरणौव्यलुनात्तस्यजंघेतेमांसलेकुशः॥४६॥
जहारश्मश्रुलंवक्त्रंकंठाज्ज्वलितकुंडलं ॥ सेनावाहेहतेतस्मिन्हाहाकारोमहानभूत् ॥ ४७ ॥ सेनावाहंहतंदृष्ट्वाभ्रातात
स्यनगाह्वयः॥ आजगामगजारूढःशक्त्यातमहनत्कुशं॥ ४८॥ तांशक्तिंवह्निकूटाभांज्वलंतीमशनीमिव ॥ चिच्छेद
पंचभिर्बाणैःसीतासूनुर्महाबलः॥ ४९॥ चरणांश्चतुरोऽप्यस्यगजस्यव्यलुनात्कुशः॥ सच्छिन्नचरणात्तस्माद्गजादाप्लु
त्यधारयन्॥ ५० ॥ गदांविचित्रांमहतींनगोसौव्यगमत्कुशं॥ कुशस्तंगदिनंहस्तंचिच्छेदाशीविषोपमं ॥ ५१ ॥वाम

हस्तेनभूमिस्थंचक्रंजग्राहसत्वरः॥ तमप्यपातयद्भूमौबाहुंचक्रधरंकुशः ॥ ५२ ॥ तथाऽपिधावमानस्यचरणावच्छिनद्रुतं॥ सच्छिन्नचरणोवीरश्छिन्नबाहुर्नगोबली॥ ५३॥ धूलिधूसरसर्वांगोरुधिरेणपरिप्लुतः॥ आससादनगोबालं राहुःसूर्यमिवांबरे॥ ५४॥ छिन्नाभ्यामथबाहुभ्यांगदांचिक्षेपतंप्रति॥ सतयाताडितोवीरःपदान्नचलितःपदं॥५५॥ तुतोषास्यकुशोवीरःप्रतापेनचतादृशा॥ ततःसुनिशितंबाणंवधायास्यमुमोचसः ॥५६॥ शरेणतेनवैछिन्नंशिरःखे तल्लीयत॥ शंभुनामुंडमालार्थंगृहीतंतद्वरंशिरः॥ ५७॥ एवंनगेविनिहतेकुशःकोपसमन्वितः ॥ तत्सैन्यंव्यहनद्बाणै र्दंडपाणिरिवांतकः॥ ५८॥ गजान्पर्वतसंकाशान्विददार*वेषेवसः॥ उच्छलद्रुधिरेणाथवीरास्तेरक्तवाससः॥ ५९॥ अ जायंतभृशंविप्राःपुष्पिताइवकिंशुकाः॥ बाणैःपतद्भिस्तुबलादग्निःप्रादुरभून्महान्॥६०॥ रथनागेंधनोवह्निर्ववृधेस चबालकः॥ पतद्भिर्वारणैर्मत्तैर्घियंतेस्ममहारथाः॥६१॥स्वयमेवविदीर्यंतेरथाश्चक्राणितेध्वजाः॥ जहुःप्राणानश्वच राःशरैर्भिन्नकलेवराः ॥ ६२ ॥ हस्त्यश्वरथसंघाताःपदातान्यपतन्भुवि ॥ विष्णुभक्तिमकुर्वाणाःसंसृताविवचाध माः॥६३॥कन्यावित्तेनयोजीवेत्तदीयाःपितरोयथा॥ एवंविनिहतंसैन्यंरथनागसमाकुलं॥६४॥कुशेनतेनवीरेणस्व धर्मेणेवदुष्कृतं॥ ६५॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेकुशयुद्धवर्णनंनामएकत्रिंशोऽध्यायः ॥ ३१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ जैमिनिरुवाच ततःप्राप्तोमहाबाहुःशत्रुघ्नोधुनयन्ध नुः॥ विव्याधनवभिर्बाणैःकुशंतंकोपपूरितः॥ १ ॥ ततःकुशोऽपिबलवान्रथंसाश्वंव्यचूर्णयत् ॥ शत्रुघ्नंत्वदिविव्याध शरेणानतपर्वणा॥ २ ॥ पुनश्चषष्ट्याविव्याधनाराचानांस्तनांतरे॥ सोऽतिविद्धस्तुशत्रुघ्नोरथोपस्थेपपातह॥ ३ ॥ य थामत्तोहिमातंगःस्खलितःपर्वतेऽपतत्॥ हतशेषाश्चयेयोधास्तेऽप्ययोध्यांययुर्द्रुतं॥ ४॥ अथमूर्छांविहायासौलवोऽ पश्यत्स्वबांधवं॥ उत्थायपरिरभ्यैनंकुशंवीरंजहर्षच॥ ५॥ उवाचचकुशंभ्रातर्धारयामितुरंगमं ॥ तेनानुनीतःसलवो बबंधेतंतुरंगमं॥ ६॥ उभौतौभ्रातरौयुक्तौयथावायुविभावसू॥ प्रतीक्षमाणौवीराणामागमंतस्थतुर्बलात्॥ ७॥ जै

*इंद्रइवेत्यर्थः

मिनिरुवाच मृतशेषाश्चयेयोधास्तेगत्वाराममब्रुवन्॥ समासीनंदीक्षितंचमृगशृंगपरिग्रहं॥ ८॥ त्वचंरुरोर्वसानं
चदंडधारंसुमेखलं॥ भ्रातृभ्यांसहितंशूरंमुनिभिःपरिवारितं ॥ ९ ॥ तिलाज्यहोमसंभूतधूमेनारुणलोचनं ॥ सुवर्ण
सीतयायुक्तंमंडपस्थमिदंवचः ॥ १०॥ योधाऊचुः हेरामतेश्वःपृथिवींचचारवीरोऽपिकश्चिन्नदधारतंपुनः॥ए
कोऽग्रहीत्वादृशएवबालकस्तेनास्मदीयंनिहतंबलंच॥ ११॥धृतःकथंचित्तवचानुजेनच्छित्वाधनुःश्रांततनुर्हिबालः॥
तस्यापरोबंधुरदीनसत्त्वःप्राप्तःसचापासिधरोबलीयान्॥ १२ ॥ तेनापिशेषंनिहतंतवोग्रंसैन्यंचसेनापतिनासमेतं ॥
तस्मिन्हतेकश्मलमाशुसैन्यंजगामसर्वाःप्रदिशोदिशश्च ॥ १३ ॥ जैमिनिरुवाच तेषांतद्वचनंश्रुत्वारामोवि
स्मयमागतः॥ उवाचकिमयंजल्पोयुष्माकंकिमुतभ्रमः॥ १४॥ पैशाच्यंकिमुयुष्माकंशत्रुघ्नःकेनपात्यते ॥ योधा
ऊचुः नजल्पोऽस्मासुराजेंद्रनभ्रमोनपिशाचता ॥ १५ ॥स्मृतोयैस्त्वंसकृद्रामनजल्पोनपिशाचता ॥ भ्रमोनवि
द्यतेतेषांजायतेज्ञानमुत्तमं॥ १६॥साक्षाद्दृष्टेत्वयिविभोभ्रमोऽस्मासुकथंभवेत्॥जल्पःपिशाचतावापिकुतःस्याद्रघुनं
दन॥ १७॥ रणेशेतेसशत्रुघ्नःशिशोर्बाणैःप्रपीडितः ॥ ततःसुदुःखितोरामोविलपन्निदमब्रवीत् ॥ १८ ॥ रामउ
वाच विप्रद्विट्लवणोयेनघातितोनिशितैःशरैः॥ मदीयंवचनंकर्तासशत्रुघ्नोऽर्भकैर्हतः ॥ १९ ॥ केनदोषेणमेभ्रा
तात्यवस्थांतादृशींगतः॥ एहिलक्ष्मणभद्रंतेशृणुमेपरमंवचः॥ २० ॥ अहंहिदीक्षितोभ्रातर्नमयायोद्धुमिष्यते॥ सैन्ये
नमहतायुक्तोभ्रातातिष्ठतियत्रते॥ २१॥तत्रगत्वाप्रयोद्धव्यंमोच्योऽश्वःसचबांधवः॥तद्वाक्याल्लक्ष्मणस्तूर्णंप्रययौसैनि
कैःसह॥ २२॥ ततोमत्ताश्वमातंगारथाःकांचनभूषणाः ॥ सादिनोनगरात्तस्मात्पत्तयश्चविनिर्ययुः ॥ २३ ॥ सर्वैर
क्तपताकाश्चसर्वैरक्तांबरध्वजाः॥ चंदनेनावलिप्तांगारणत्कंकणमंडिताः ॥ २४ ॥ वीरश्रीपरिणेतारोमालाभिर्बद्धमू
र्धजाः॥ साक्षात्कालावताराःकिंयुद्धसंस्थामभीप्सवः॥ २५ ॥ युवानःश्मश्रुलावीरायुद्धशौंडाःप्रहारिणः॥ श्वेतांबर
धराःसर्वेधीराःश्वेतपताकिनः॥ २६॥ एकपत्नीव्रतयुताधर्मिष्ठाश्चजितेंद्रियाः॥ निर्ययुर्नगरात्तस्माच्छतशोऽथसहस्र
शः॥ २७॥ तेषामधिपतिर्ह्यासील्लक्ष्मणोबलवत्तरः॥ सेनानीःकालजिच्चासीद्धर्मिष्ठोब्राह्मणप्रियः॥ २८ ॥ गच्छता

तेनसैन्येनकृताःशुष्काःसमुद्रगाः॥सरितःपर्वताश्चूर्णीभूतावाजिखुरैर्दृढैः॥ २९ ॥ विपिनानिस्थलान्यासंस्तृणंशत्रु
मुखेस्थितं॥तत्परिग्रहणैस्तैस्तुपयोनसरितामपि ॥ ३० ॥ चक्रैरथानामश्वानांखुरैःप्रादुरभूद्रजः ॥ मेघानामुपरिष्टा
त्तद्रजःपंकीबभूवह॥ ३१ ॥ तेनपंकेनमेघेषुघनत्वमभवत्तदा॥उच्चानांवारणानांचशुंडादंडैर्भृशंहताः॥३२ ॥ घनाः
पलायंतशनैःपंकभारविनामिताः ॥पुरस्ताद्दुत्प्लुवंतिस्मखड्गचर्मधरानराः ॥ ३३ ॥ अश्ववाहाःप्रधावंतिकुर्वंतोवि
विधागतीः॥मेघनिर्घोषगंभीरंगर्जंतःप्रययूरथाः॥ ३४ ॥ कंपयंतोधरांनागाःपर्वताइवनिर्ययुः ॥ जैमिनिरुवाच
बबृंहिरेगजामत्ताहयायुद्धेजिहेषिरे ॥ ३५ ॥ जगर्जिरेरथाश्चक्रैःपत्तयश्चडिंडिंबिरे ॥ ततःप्राप्तमनीकंतल्लक्ष्मणस्यभ
यानकं॥ ३६ ॥ यत्रासौमूर्च्छितःशेतेशत्रुघ्नःसैनिकैःसह॥ततःसुमित्रातनयःपुरस्ताज्ज्येष्ठोययौकालजितासमेतः॥
ददर्शवीरंविकलंसुकेशंशत्रुघ्नमात्यंतिकजीवशेषं॥ ३७॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेल
क्ष्मणागमनंनामद्वात्रिंशोऽध्यायः॥ ३२॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥
जैमिनिरुवाच तत्सैन्यंभीषणंदृष्ट्वातत्प्रभुंलक्ष्मणंतथा॥उवाचनिर्भयोवीरःशत्रूणामंकुशःकुशः॥ १ ॥ किमिदा
नींचकर्तव्यंलवसैन्यंसमागतं॥वारणानांरथानांचसंख्यांकर्तुंनपार्यते॥२॥ लवउवाच युद्धमत्रप्रकर्तव्यंहंतव्याः
सैनिकास्त्वमी॥ कूष्मांडफलवद्छेद्यारथाश्छेद्यारसालवत्॥ ३ ॥ शिरांसिपक्वफलवत्पातनीयानिभूतले ॥ भ्रातःकुश
महाबाहोसमग्रस्यबलस्यते॥ ४ ॥ नयोग्यमेतत्सैन्यंस्यादगस्त्यस्येवसागरः ॥ नचसिंहस्यपुरतोजंबूकालीप्रसर्पति॥
॥ ५॥ पुण्यांभागीरथींदृष्ट्वापापराशिःक्षयंव्रजेत्॥तथात्वांसमरेसेनादृष्ट्वाशीघ्रंविनश्यति॥६॥ केवलंश्रोत्रियैरेवधार्य
स्त्वंनचसैनिकैः॥अहंहिवाहिनीवेगान्नभग्नःस्यांकथंचन ॥ ७ ॥ उत्तिष्ठधनुरुद्यम्यबाणान्योजयमाचिरं ॥ अहंसैन्य
मिदंसर्वंरुणध्मिनिशितैःशरैः॥ ८ ॥ किंकरोमिधनुश्छिन्नंततःसूर्यमुदैक्षत ॥ लवोनिश्चलयादृष्ट्यामनसाप्रार्थयन्ध
नुः॥ ९॥ लवउवाच नमःसवित्रेसूर्यायपूष्णेज्योतिष्मतेनमः॥नमःसप्ततुरंगायनित्यंव्योमचरायच॥ १०॥मे
षादीनामधीशायमासिमासिनमोनमः॥अयनद्वयकर्त्रेचप्रकाशायनमोऽस्तुते॥ ११ ॥मूकांधबधिराणांचवाङ्नेत्र

श्रोत्रदायच॥ शिरोर्तिशूलकुष्टानांनाशकायनमोऽस्तुते॥ १२॥ नमःसुवर्णवर्णायसहस्रकिरणायच॥ जगतामेक
नेत्रायभवतेभास्करायच॥१३॥दिवाकरायपिंगायपयःस्रष्ट्रेघनायतु॥नमःपर्यायरूपायजन्मत्राणक्षयायते॥१४॥
ऋग्वेदरूपिणेतुभ्यंनमोब्राह्मणरूपिणे॥यजुःसामाथर्वकर्त्रेपुराणागमकारिणे॥ १५॥ गाथेतिहासकर्त्रेतेनमोब्रह्म
स्वरूपिणे॥नमोविश्वस्वरूपायरुद्ररूपायतेनमः॥ १६॥विश्वस्यवांछितकरायमनोरमायविश्वेश्वरायपुरुषायसदाऽम
लाय॥हंसायचंडघृणयेमणिकुंडलायनौम्याहवेजयकरंधनुरग्र्यमेऽस्तु॥१७॥ जैमिनिरुवाच स्तोत्रेणानेनसंतुष्टोरवि
र्दिव्यंशरासनं॥ ददौलवायसौरंचपठतांश्रेयउत्तमं॥१८॥सुवर्णपट्टैरुचिरैर्निबद्धंसगुणंदृढं॥धनुःप्राप्यमहाबाहुर्लवः
कुशमथाब्रवीत्॥ १९॥ लवउवाच उपदिष्टंहियत्स्तोत्रंमुनिनागुरुणामम॥ सौरंतज्जपितंभ्रातस्तस्माल्लब्धंम
याधनुः॥२०॥ यद्यदस्त्रमयंवस्तुतदहंप्राप्तवान्महत्॥इत्येवमुक्त्वावचनंसंजग्मातेमहाबलौ॥ २१॥ दग्धुंसैन्याटवींकिं
तौप्राप्तौवायुविभावसू॥तौप्रविष्टौचमूंघोरांलक्ष्मणेनाभिपालितां॥२२॥ वर्षमाणौशरान्घोरान्जीमूताविवपर्वते॥
आवर्तःसुमहानासीत्तयोःसैन्येप्रविष्टयोः॥२३॥मैनाकमंदराभ्यांतुमथ्यमानेइवार्णवे॥ सिंहनादात्तयोरेवयोजनार्धं
गतंबलं॥ २४॥ कालजिल्लक्ष्मणौक्रुद्धौरुरुधातेशरैःकुशं॥ लक्ष्मणस्यचसैन्येनलवोरुद्धोतिपौरुषः॥ २५॥ अन्योन्यो
गजानांहिशतेनजातास्ततोधिकास्ताहिशतंशतेन॥ गजेगजेतत्ररथादशासन्रथेरथेवाजिशतंबभूव॥ २६॥हरौ
हरौपत्तिशतंहितस्थावेवं*अक्षौहिणीणांशतकेनरुद्धः॥ ततोनिजघ्नुःशरवज्रमुद्गरैःप्रासैर्लवंतेशतशश्चयोधाः॥ २७॥ ग
दासिशक्त्यर्ष्टिपरश्वधैश्चकुंतैस्तथासंभ्रमवाजियुक्ताः॥ पाशैःकरग्राहकरैश्चबालमेकाकिनंतेपरिवव्रुरेनं॥ २८॥ द्वि
षोनिजघ्नेनिशितैःक्षुरप्रैःशिरांसिभूमावपतन्स्फुरंति॥ लवोलवेनाहवकर्मकुर्वन्ननादकल्पांतकरोयथायमः॥ २९॥
शतंशतेनविव्याधद्विशतंद्विशतेनच॥ सहस्रार्धंतदर्धेनसहस्रमयुतेनच॥ ३०॥ वीराणामहनत्क्रुद्धःप्रयुतंप्रयुतेन
च॥ जैमिनिरुवाच चत्वारिंशद्धमीर्हत्वागजानांसिंहविक्रमः॥ ३१॥ शरैःसंभिन्नसर्वांगोदिशःसर्वाव्यलोक

*हस्तिनः १०० अश्वसादिनः १०००० रथिनः १००० पादचारिणः १००००००

यत् ॥ इतःसैन्यंप्रचलितंरथवारणसंकुलं ॥ ३२ ॥ लसत्खड्गप्रभाभिश्चश्यामीभूतंगजैरपि ॥ ददर्शघोरंसलवोनकु
शंपृष्ठतस्तथा ॥ ३३ ॥ तदादध्यौचिरंबालोभ्रातामेकगतःकुशः ॥ इतिचिंतयतस्तस्यलवस्यधनुरुत्तमं ॥ ३४ ॥ जहार
राक्षसःक्रुद्धोमातुलोलवणस्ययः ॥ रुधिराक्षइतिख्यातोरामंशरणमागतः ॥ ३५ ॥ लवोजवात्पलायंतंधनुरादायरा
क्षसं ॥ तिष्ठतिष्ठेतिचोवाचमत्तोजीवन्क्वयास्यसि ॥ ३६ ॥ इत्येवमुक्त्वावचनंचक्रंजग्राहपाणिना ॥ जनन्याश्चरणौचित्ते
चिंतयित्वामहाभुजः ॥ ३७ ॥ सचक्रमादायखमुत्पपातश्येनोयथाभक्षमिवप्रगृह्णन् ॥ शिखीवपुष्मान्क्षतजाव
लिप्तोरराजसाक्षादिवचक्रपाणिः ॥ ३८ ॥ गगनस्थंलवंदृष्ट्वायोधाबिभ्युःपतेदिति ॥ ततश्चापेषुरुचिरांश्छरांस्तेयुयुजु
र्भयात् ॥ केचिद्दधुश्चचर्माणिसुदृढानिस्वमूर्धसु ॥ ३९ ॥ अस्मानुपरिवीरोऽसौपतिष्यतिनसंशयः ॥ इतिकृत्वामतिं
केचित्स्यंदनस्याधआगमन् ॥ ४० ॥ बाणनिर्भिन्नवर्म्माणोवारणाभुविशेरते ॥ तेषामुदरमध्यस्थाःकेचिच्छन्नामहा
रथाः ॥ ४१ ॥ एवंस्मभीतावीरायेतेप्येवंचक्रिरेतदा ॥ अवशिष्टामहावीरानिर्यातास्तुदशैवहि ॥ ४२ ॥ राज्ञोदशरथ
स्यासीन्मंत्रीसुज्ञोहितत्सुताः ॥ जितश्रमोधार्मिकश्चसुकेतुःशत्रुसूदनः ॥ ४३ ॥ चंद्रोमदःशलःकालोमल्लःसिंहश्चतेद
श ॥ विव्यधुःसायकैस्तीक्ष्णैर्लवंखेचक्रपाणिनं ॥ ४३ ॥ दशभिर्दशभिर्बाणैश्चिच्छिदुश्चक्रमुच्छ्रिताः ॥ छिन्नचक्रो
लवःशीघ्रंजग्राहपरिघंभुवि ॥ ४५ ॥ जघानमंत्रिपुत्रांस्तान्परिघेणहसन्निव ॥ तेछिन्नचर्मवर्माणोनिपेतुःशोणितो
क्षिताः ॥ ४६ ॥ वेदबाह्याःकुशास्त्रज्ञाविष्णुभक्तिविवर्जिताः ॥ मातापित्रोर्भक्तिहीनानास्तिकारौरवेयथा ॥ ४७ ॥
तावत्सराक्षसःप्राप्तोरुधिराक्षोगदांदधन् ॥ गदयाताडयामासमूर्ध्नितंलवमोजसा ॥ ४८ ॥ जगाममूर्च्छांबालोसौमु
हूर्त्तंभूतलेऽपतत् ॥ मूर्च्छांविहायसलवस्तदातस्थौगजेंद्रवत् ॥ ४९ ॥ कुंतमादायभूमिस्थंप्रययौराक्षसंप्रति ॥ के
शेष्वाक्षिप्यतंदुष्टंकुंतेनाभ्यहरच्छिरः ॥ ५० ॥ स्वधनुर्जगृहेवीरःसूर्यदत्तंननादच ॥ मुमोचनिशितान्बाणान्सैन्य
क्षयकरान्बहून् ॥ ५१ ॥ ततःसैन्येनमहतावेष्टितःपुनरेवसः ॥ गर्भस्थोहियथाजंतुरज्ञानेनबहिःस्थितः ॥ ५२ ॥ वेष्ट्यते
तद्वदप्येषस्तेनसैन्येनवेष्टितः ॥ तृणैरावेष्टितोवह्निस्तान्येवदहतिध्रुवं ॥ ५३ ॥ तद्वत्सबालस्तत्सैन्यमदहत्कोपपूरितः ॥

॥५४॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेलवयुद्धविजयवर्णनोनामत्रयस्त्रिंशोऽध्यायः॥ ३० ॥

॥ श्री ॥ ॥ श्री ॥ जैमिनिरुवाच कुशस्तंलक्ष्मणंदृष्ट्वाप्रययौसिंहविक्रमः॥ आयांतंपंचभिर्बाणैर्लक्ष्मणोऽभिजघानतं॥ १ ॥ तैस्ताडितःकुशोवीरस्त्विदंवचनमब्रवीत्॥ कुशउवाच स्थिरोभवमहावीरमापदंपृष्ठतः कुरु॥ २ ॥ इत्येवमुक्त्वावचनंबाणंचैकंमुमोचसः॥ तेनबाणेनसरथोबभ्रामघटिकाद्वयं॥३॥ अतिभ्रमेणचत्वारोवाजिनःपंचतांययुः॥ ततोऽन्यंरथमारुह्यलक्ष्मणोमुमुचेशरान्॥ ४ ॥ द्वाभ्यांशराभ्यांचिच्छेदकवचंचातिनिर्मलं॥ किरीटंचत्रिभिर्बाणैस्तदद्भुतमिवाभवत् ॥ ५ ॥ सभिन्नकवचोवीरोमुक्तत्वक्सर्पराडिव ॥ तस्मिन्रणेरराजाथसीतासूनुर्गतक्लमः॥ ६ ॥ अब्रवील्लक्ष्मणंवीरःकुशोविनयपूर्वकं॥ द्विषद्भावंपरित्यज्यममभारस्त्वयाहृतः॥७॥ उपकारःकृतोनूनंत्वयाकर्तातथाऽप्यहं॥सैन्यभारोमहानस्तितवलक्ष्मणसांप्रतं॥८॥तंसर्वंनाशयिष्यामिपश्यमेहस्तलाघवं॥अथसूक्तंजपन्नुच्चैराथर्वश्रुतिविश्रुतं ॥ आग्नेयमस्त्रंमुमुचेसीतासूनुर्महाबलः ॥ ९॥ आग्नेयास्त्रात्ततोज्वालाःप्रादुर्भूताःसहस्रशः॥ ताभिस्तस्यरथोदग्धोलक्ष्मणस्यमहात्मनः॥१०॥सैन्यंदग्धंपताकाश्ववासांस्याभरणानिच॥ज्वलत्कंचुकिनोवीरादग्धश्मश्रुशिरोरुहाः॥ ११ ॥ दह्यंतेस्मसटापुच्छंवाजिनांहंसवर्णिनां॥ रथाश्वचक्राणिदह्यंतेछत्राणिचामराणिच॥ ॥ १२॥ आयुधानिचसर्वाणिदग्धान्यासन्हविर्भुजा॥ दह्यमानंततोदृष्ट्वासैन्यंशत्रुनिबर्हणः ॥ १३ ॥ लक्ष्मणःशमयामासतदस्त्रंवारुणास्त्रतः ॥ ततःकुशोमहावीरोवायव्यंसंदधेशरं ॥ १४ ॥ वायव्यास्त्रेणतेसर्वेवीरावियतिउड्डिरे॥ तदारथगजामत्ताःपतंत्यनिलरंहसा ॥ १५॥ जैमिनिरुवाच सेनानीःकालजित्क्रुद्धोलक्ष्मणंवाक्यमब्रवीत् ॥ संहरिष्याम्यहंबालंवेलेवमकरालयं॥ १६ ॥ यावत्कनिष्ठोनायातितावत्कुर्वेपराक्रमं॥ इत्येवमुक्त्वावचनंकुशंप्रायात्सकालजित्॥ १७॥ सेनाध्यक्षउवाच त्वमद्यनूनंसंप्राप्तोरामचंद्रबलक्षयः ॥ जातोयद्यपिकुर्वेहंकुशस्योन्मूलनंध्रुवं॥१८॥कालजिद्भाषितंश्रुत्वाकुशोवचनमब्रवीत्॥ कुशउवाच अजागलस्तनस्येवव्यर्थंनामविभाव्यते॥बधिरस्ययथाकर्णौवृथाश्रवणवर्जितौ ॥ १९ ॥ बालानांहियथाब्रह्मतृणस्याग्निर्यथावृथा ॥ सेनाध्यक्षःकृतःकेनत्वाद्द

शोबहुजल्पकः॥ २०॥ त्वयिपश्यतिरेमूढसैन्यंहंतिममानुजः॥ बाणंछिंधिमयामुक्तंतवजिह्वाविदारकं॥ २१॥ इत्यु
क्त्वाकालजिज्जिह्वामलुनादिषुणाकुशः॥ मौनीत्वंसांप्रतंजातोवाहिन्यांसंस्थितंलवं॥ २२॥ आनयाशुचसंपूज्यत्वंमौ
नव्रतमाचर॥ अत्यंतंकालजित्क्रुद्धःशरेणानतपर्वणा॥ २३॥ कुशंतंहृदयेविध्वावामहस्तमताडयत्॥ चिच्छेदतस्या
पिकुशोबाणैर्हस्तंचदक्षिणं॥ २४॥ ततोऽर्धचंद्रेणशिरश्चिच्छेदास्यसकुंडलं॥ हतेकालजितिप्रौढेकुशंसौमित्रिरभ्य
गात्॥ २५॥ वर्षन्बाणगणान्घोरान्शालतालवटच्छिदः॥ कुशंजघानहृदयेबाणैःषड्भिरथोद्दढं॥ २६॥ शक्तिंचिक्षे
पसौमित्रिःकुशंप्रतिगदामपि॥ कुंतंखड्गंचपरशुंतोमरंचर्मचाक्षिपत्॥ २७॥ कुशस्तुसन्नधातानिशस्त्राणिपरिचि
च्छिदे॥ ननर्दसिंहवद्वीरस्तिष्ठतिष्ठशरान्सह॥ २८॥ इत्येवमुक्त्वानाराचान्पंचवाल्मीकिनाऽर्पितान्॥ गार्धपत्रान्सुनि
शितान्विषमान्पन्नगानिव॥ २९॥ ज्वलदग्निकणान्वीरःकुशोधनुषिसंदधे॥ अथमुक्ताःशराव्योम्निज्वलंतोमर्मभेदि
नः॥ ३०॥ बिभिदुर्हृदयंतस्यलक्ष्मणस्यमहात्मनः॥ सौमित्रिश्चपपातोर्व्यांसूर्यःखादिवनिष्प्रभः॥ ३१॥ जैमिनिरु
वाच ततःशुश्रावनिनदंलवस्यसकुशोरणे॥ खड्गचर्मधरश्चायंपुप्लुवेपक्षिराडिव॥ ३२॥ ददर्शतंलवंशूरंवेष्टितंग
जपंक्तिभिः॥ खड्गेनाभ्यहनत्क्रुद्धोगजांश्चरथिनोबहून्॥ ३३॥ भ्रमीर्जघानताःसर्वाःक्षणाल्लवममोचयत्॥ वाल्मी
केराश्रमेताभ्यांसैन्यंसर्वंनिपातितं॥ ३४॥ तस्थतुर्निर्भयौवीरौवीक्षमाणौस्वमाश्रमं॥ ३५॥ इत्याश्वमेधिकेपर्व
णिजैमिनीयेकुशलवोपाख्यानेलक्ष्मणसेनापराजयोनामचतुस्त्रिंशोऽध्यायः॥ ३४॥ ॥ ७॥ ॥ ७॥
जैमिनिरुवाच गंगातीरेरामचंद्रोदीक्षितोयज्ञमंडपे॥ भरतंप्रत्युवाचाथमुनिभिःपरिवारितः॥ १॥ रामउवाच
कथंनायातिवीरोसौविजित्यहयहारिणौ॥ याभ्यांपराजयंप्रापशत्रुघ्नःसतवानुजः॥ २॥ सौमित्रिंवीक्ष्यसंग्रामेत्रैलो
क्यंसचराचरं॥ स्वप्नमध्येविलीयेतप्रत्यक्षंकःसहिष्यति॥ ३॥ तमद्यबहुभिर्वीरैःसेवितंरोषपूरितं॥ पतनादनुजस्या
पिमयाज्ञप्तंनतौक्षमौ॥ ४॥ योधितुंवनजावज्ञौचपलौनाथवर्जितौ॥ लक्ष्मणस्यभयात्त्रस्तौशरणंकंगमिष्यतः॥
॥ ५॥ आनयिष्यतिसौमित्रिःशत्रुघ्नंधर्मलोकतः॥ स्वप्रतापेनपतितंजनन्यैदर्शयिष्यति॥ ६॥ लक्ष्मणंकुपितंश्रुत्वासं

हरंतंस्वबालकौ ॥ प्रार्थयिष्यत्यनाथाकंरक्षणायतयोःप्रसूः ॥ ७ ॥ कुतःप्राप्तौस्वनाशायदारकौविघ्नकारकौ ॥ दिनद्व
यंविहीनंमेवर्षमध्येतुरंगमः ॥ ८ ॥ शत्रुघ्नरक्षितःप्रापयाभ्यांपार्श्वेनिबंधनं ॥ मामनादृत्यभरतंसुग्रीवंचविभीषणं ॥
॥ ९ ॥ अंगदंवालितनयंहनूमंतंमहाबलं ॥ अन्यान्ममसुहृद्वृंधूंस्तृणीकृत्यापहारकौ ॥ १० ॥ वाजिनंकरसंप्राप्तंपश्य
तांबालचेष्टितं ॥ भरतप्रेरयजनान्तंदेशंयत्रमेहयः ॥ ११ ॥ लक्ष्मणंप्रतिसंग्रामेयथानयतिवाजिनं ॥ वचनंकुरुतेक्रु
द्धःसौमित्रिर्मामकंसदा ॥ १२ ॥ जैमिनिरुवाच भरतेनसमाहूताःपंचदूतामहाबलाः ॥ रामपार्श्वेक्षणादेत्य
तानुवाचस्वयंप्रभुः ॥ १३ ॥ श्रीरामउवाच यातलक्ष्मणमानेतुंब्रूतमद्वाक्यमेवतं ॥ जीवितेनयुतौयुद्धेमोहना
स्त्रेणमोहितौ ॥ १४ ॥ रक्षणीयौत्वयाबालौसागसावपिलक्ष्मण ॥ त्वंवीरोऽसिव्रतश्चासिशूरैःसर्वास्त्रकोविदैः ॥ १५ ॥
रथस्थोऽसिसमर्थोऽसिविरथौतौनिराश्रयौ ॥ अत्रानयशिशूवेगान्मापातयरणेऽबलौ ॥ १६ ॥ परबालेदयायुक्तं
चित्तंकुर्वंतियेजनाः ॥ तेपुत्रपौत्रैःसहिताजायंतेभुविसाधवः ॥ १७ ॥ मयानपुत्रवदनंसीतावदनसन्निभं ॥
वीक्षितंभुविजातेनततस्तौमोचयाम्यहं ॥ १८ ॥ प्रष्टव्यौकस्यपुत्रौतौकिमर्थंवनचारिणौ ॥ पुत्रयोर्जननीकुत्रतत्पृ
ष्ट्वातांसमानय ॥ १९ ॥ जैमिनिरुवाच एवंदिशतिरामेतुदूतान्प्रतिविशांपते ॥ तावद्दूताःशरैर्भिन्नाःक्षतजौ
घप्रवाहिणः ॥ २० ॥ लक्ष्मणस्यमहावीरारामंशरणमाययुः ॥ रामरामेतिजल्पंतःशंसंतःसुमहद्भयं ॥ २१ ॥ राममम
हाबाहोत्राह्यस्मान्महतोभयात् ॥ बहुलेनबलेनापिव्रतःशूरःसलक्ष्मणः ॥ २२ ॥ प्रापतत्काननंघोरंशत्रुघ्नोयत्रमूर्च्छि
तः ॥ ससैनिकःक्षतोबाणैःकुशस्यपरितिष्ठति ॥ २३ ॥ कुशसायकभिन्नांगैरुधिरापीडवाहिभिः ॥ वीरैर्नज्ञायतेकिंचित्किं
शुकेःपुष्पितैरिव ॥ २४ ॥ वज्रपातसहावीरानानाशस्त्रैःप्रपीडिताः ॥ नजानंतिव्यथांयेवैतेकुशेनविमूर्च्छिताः ॥ २५ ॥
लवेनैकेनशिशुनाकृतासावाहिनीघना ॥ विमुखाभूभ्दतंप्राप्ताद्दृष्ट्वाबालस्यचेष्टितं ॥ २६ ॥ लक्ष्मणस्यबलाध्यक्षःपतितो
भुविराघव ॥ कालजिद्वहुभिःसार्धंकुशबाणैःप्रपीडितः ॥ २७ ॥ लक्ष्मणेनकृतंयुद्धंभ्रातरौवीक्षितौवने ॥ स्वमनःकृप
यायुक्तंवैरंत्यक्त्वाऽनुजस्यतत् ॥ २८ ॥ ततःकुशंप्रत्युवाचसौमित्रिःसतवानुजः ॥ गच्छबालकमुक्तोऽसिकनिष्ठेनसमं

मृहं ॥ २९ ॥ जनन्यैब्रूहिमुक्तोऽस्मिसामयुक्तेनकेनचित् ॥ लक्ष्मणस्यवचःश्रुत्वाकुशोलक्ष्मणमब्रवीत् ॥ ३० ॥ त्वंगच्छ
राममुक्तोऽसिदुःखितंत्वांनयोधये ॥ नक्षमाल्पाप्यहोरामेसांप्रतंहिविलोक्यते ॥ ३१ ॥ यःसानुजंभवंतंतुक्लेशयन्ना
गतःस्वयं ॥ भीतोऽवमानसंसर्गकारकाद्राघवादसि ॥ ३२ ॥ कृपाधृतात्वन्निमित्तमक्षतोयाहिलक्ष्मण ॥ प्रहराशुशरौ
घैर्मापौरुषंचेद्विभातिते ॥ ३३ ॥ लक्ष्मणस्तंजघानाथहृदयेसप्तभिःशरैः ॥ तेशरास्तंतदाभित्वाबालंयुद्धेतथाविधे ॥ ३४ ॥
पतिताःकाननेतीक्ष्णाबिभिदुःपादपानपि ॥ ततःकुशस्यबाणौघैर्लक्ष्मणस्यकलेवरं ॥ ३५ ॥ समाकीर्णंत्वग्विहीनं
क्षणादेवरणेकृतं ॥ कर्तुंकिंलक्ष्मणोवेत्तिनवीनंस्वंकलेवरं ॥ ३६ ॥ पूर्वाभ्यासेनकेनापितस्माद्बालंप्रयोधितः ॥ पश्चात्पपा
तधीरोऽसौकुंडलीसायकैःक्षतः ॥ ३७ ॥ भग्नंबलंतेपतितंगतंरामदिशोदश ॥ भ्रातरौतौमहावीरौक्षतौशत्रुघ्नलक्ष्मणौ
॥ ३८ ॥ ताभ्यांविहीनाहिवयंतुभ्यंशंसितुमागताः ॥ त्यजदीक्षांरघुपतेकुरुयुद्धंवनेव्रज ॥ ३९ ॥ यावन्नायांतितेबा
णाःकुशकार्मुकनिःसृताः ॥ नान्यस्यगणनातस्यकुशस्यपुरतःप्रभो ॥ ४० ॥ जैमिनिरुवाच एवंविधानिवा
क्यानिश्रुत्वातेषांसराघवः ॥ मूर्छितोनिपपातोर्व्यांभरतस्याग्रजस्तदा ॥ ४१ ॥ गृहीतोभरतेनाथसिक्तश्चैवांभसार
घुः ॥ परिमृज्यास्यनेत्रेचसमाश्वास्यपुनःपुनः ॥ ४२ ॥ चेतनासहितंवीक्ष्यभरतोवाक्यमब्रवीत् ॥ भरतउवाच मा
विषादेमनःकार्षीर्लक्ष्मणंप्रतिराघव ॥ ४३ ॥ शत्रुघ्नेनसमंयुद्धेतवार्थेविनिपातितं ॥ लक्ष्मणस्त्यक्तुकामोऽयंस्वदेहंदुः
खितोभृशं ॥ ४४ ॥ परित्यज्यागतोदेवींयदाप्रभृतिकानने ॥ सीतादुःखेननोजीवन्पुनरायातितेंऽतिकं ॥ ४५ ॥ शंसितुं
सपुराप्राप्तस्त्वादेशोमयाकृतः ॥ तथाऽपिनकृपाजाताजानक्यांनचलक्ष्मणे ॥ ४६ ॥ संस्मृत्यसमयेमृत्युमकरोल्लक्ष्म
णोहृदि ॥ अथरामनिमित्तंहियज्ञकार्येसबांधवः ॥ ४७ ॥ स्मृत्वात्यागंहिसीतायायुद्धेतत्याजजीवितं ॥ निरापराधांत्य
क्तायांवनेसीतांसमागतः ॥ ४८ ॥ तत्रत्यंकिल्बिषंदेहेधारयन्संस्थितःसदा ॥ तस्याद्यकुशकोदंडप्रचंडशरगंगया ॥
॥ ४९ ॥ क्षालितंकिल्बिषंगात्राद्रामपूतोऽद्यलक्ष्मणः ॥ भरतंमामपूतंहिनप्रेरयसिकिंचन ॥ ५० ॥ अद्यराघवयास्या
मितत्कर्तुंपावनंवपुः ॥ विचारःसकलोजातःसीतात्यागेचतेवने ॥ ५१ ॥ अयोध्यायांस्थितोजीवन्नतथाऽद्यकरोम्यहं ॥

कथंहीनोऽत्रतिष्ठामिसीताशत्रुघ्नलक्ष्मणैः॥५२॥एवंवदंतंभरतंजगादभरताग्रजः॥ श्रीरामउवाच कोऽसौभर
तजानीहिसबालोव्रजकानने॥५३॥तमानयकुशंजित्वासानुजंममसन्निधौ॥समुत्थापयवीरौतौमूर्छितौममबां
धवौ॥५४॥हनूमानपियात्वेषोजांबवान्वानरैःसह॥तवानुवर्त्तिकुर्वाणःकुरुवाक्यंममोदितं॥५५॥पितृवाक्यंमया
ऽकारिव्रजताकाननंप्रति॥त्वयातुनकृतंतस्यजनकस्यवचोमहत्॥५६॥नंदिग्रामेप्रवसताजटावल्कलधारिणा॥
इदानींतस्यपापस्यनिष्कृतिंकुरुराघव॥५७॥मद्वाक्यकरणादेवपूतोभवमहामते॥भरतस्त्वब्रवीद्वाक्यंकथयामिर
घूद्वह॥५८॥द्वौश्रुतौबालकौवीरौतवसैन्यनिपातकौ॥नतौभवान्विजानातिहनूमान्वेत्तिवानवा॥५९॥अंग
दोवाविजानातिनीतिज्ञःसचिवस्तव॥ अंगदउवाच मन्येऽहंबालकौतौतुरामदुर्मंत्ररूपिणौ॥६०॥सीतांलो
कापवादेनयज्जहौरघुनंदनः॥ जैमिनिरुवाच एवंरामसमादिष्टोहनुमत्प्रमुखैर्वृतः॥६१॥निर्ययौभरतःक्रो
धाद्रथमारुह्यसत्वरः॥निर्गतंबहुलंसैन्यंगगनेभूतलेऽपिच॥६२॥राघवस्यपुराद्रम्यान्नरवानरसंकुलं॥भरतःका
ननंप्राप्यहनूमंतमुवाचह॥६३॥ भरतउवाच हनूमन्पश्यसंग्रामेकुशबाणैर्निपातिताः॥रामस्यवीराबहवोवि
शिरस्काविबाहवः॥६४॥गजान्रथान्हयान्वीरान्करभान्गतमस्तकान्॥धावमानान्पुरःपश्यगतस्वास्थ्यानितस्ततः
॥६५॥कुतस्तौपतितौवीरौरणेशत्रुघ्नलक्ष्मणौ॥शोणितेनात्रनीयंतेबहुलेनमहाबलाः॥६६॥भागीरथींप्रतिबला
न्नीतौकिंममबांधवौ॥क्वचित्कराःक्वचित्पादाःक्वचिद्दंतान्नृणामिह॥६७॥दृश्यंतेवाहनानांतुक्वचित्केशाःक्वचित्स्र
जः॥नदीमिमांसमुल्लंघ्यव्रजपारंनिरीक्षय॥६८॥यथागतोऽसिलंकांत्वंतीर्त्वाजलनिधिंपुरा॥तत्रतौपश्यपतितौ
बांधवौमामकौभुवि॥६९॥विलोकनीयौतौबालौत्वयाकुशलवौक्वचित्॥ हनूमानुवाच तदातीर्णोऽस्मि
भरतसागरंसीतयास्वयं॥७०॥संमुखासापुराजाताविमुखाद्यविलोक्यते॥शोणितौघांनदींमन्येदुस्तरांलक्ष्मणाग्र
ज॥७१॥तथापितववाक्येनवीक्षितुंयामिबांधवौ॥इत्युक्त्वातांनदींतीर्त्वाददर्शपतितावुभौ॥७२॥शरनिर्भिन्न
सर्वांगौरणेशत्रुघ्नलक्ष्मणौ॥प्रार्थयंताविवधरांसीतात्यागेनदुःखितौ॥७३॥माकोपंव्रजनौस्थानंदेहिसीताद्रुहोरि

ति ॥ हनूमांस्तौगृहीत्वाथबाहुभ्यांपुनरागतः ॥७४॥ भरतस्यसमीपंहिमूर्छितौतरसान्नृप ॥ ददर्शभरतोभिन्नौकुशबा
णैःसमंततः ॥ ७५ ॥ रथेसंस्थापयामासभ्रातरौविस्मयान्वितः ॥ रक्षणेचांगदंदत्वाहनूमंतमुवाचह ॥७६॥ क्वगतौबा
लकौवीरौरामसैन्यनिपातकौ ॥ हनूमन्पश्यकुत्रापिबालवेषधरौसुरौ ॥ ७७ ॥ गतौलक्ष्मणशत्रुघ्नौपातयित्वामहार
णे॥ हनूमानुवाच मेघनादशरैर्नार्यंमूर्छितोलक्ष्मणस्तथा ॥ ७८ ॥ यथाकुशशरैर्व्याप्तोनजहातिहिकश्मलं ॥
मूर्छनामामुपैत्येषावीक्ष्यलक्ष्मणमातुरं ॥ पश्यंतिसैनिकाःसर्वेबालाभ्यांनिहतंबलं॥७९ ॥ इत्याश्वमेधिकेपर्वणि
जैमिनीयेकुशलवोपाख्यानेहनूमद्वाक्यंनामपंचत्रिंशोऽध्यायः ॥ ३५ ॥ ॥छ॥ ॥छ॥ ॥छ॥
जैमिनिरुवाच एतस्मिन्नंतरेप्राप्तोधनुर्विस्फारयन्कुशः ॥ खड्गचर्मधरोवीरोलवःसंग्राममागमत् ॥ १ ॥ प्रकाश
यित्वापृथिवींकरैःसागरमेखलां ॥ सूर्योऽतर्धानमापेदेध्वांतंचसमपद्यत ॥ २ ॥ आत्मनश्चपरेषांचवीरोनज्ञायतेतदा॥
अन्योन्यंनामभिस्तेवैक्रोशंतिरणकोविदाः ॥ ३ ॥ गजामत्ताश्चधावंतिचूर्णयंतोरथान्बहून् ॥ रथवेगेनाश्ववीराःपतं
तिहयपृष्ठतः ॥ ४ ॥ हयवेगेनाश्ववीराःपत्तयोभुविशेरते ॥ दोधूयखड्गंसलवःप्रविवेशमहाचमूं ॥ ५ ॥ शिरस्याधायच
र्माशुखड्गेनाश्वपदोऽच्छिनत् ॥ हस्तिहस्तान्विशालांश्चचिच्छेदसकुशानुजः ॥ ६ ॥ दीर्घहस्तौसमालंब्यव्रजन्नुपरिहस्ति
नं ॥ विदारयतिकुंभौसकाष्ठानीवकुठारकः ॥ ७ ॥ मुक्ताफलानिजगृहेमुष्टिभिर्भुविचाक्षिपत् ॥ हस्तिदंतेषुपतितैः
खड्गैर्भृशभयानकाः ॥ ८ ॥ समुत्थिताश्चाग्निकणास्तेदहंतिस्मसैनिकान्॥ तावत्क्रुद्धोमहाबाहुःकुशोबाणान्मुमोचसः
॥ ९ ॥ शिरांसिचिच्छिदेवीरोबाहूनंगदभूषितान् ॥ शिरांसिकरिणांबाणैरनयद्दिवमोजसा ॥ १० ॥ आकाशेद्यापिते
प्राप्ताएकीभावंव्यवस्थिताः ॥ अतःपरंहिनक्षत्रंनभूतंनभविष्यति ॥ ११ ॥ तस्मान्नक्षत्रतांप्राप्ताःखेहस्ताहस्तिनांत
था ॥ वर्षंत्यद्यापिभूपृष्ठेहस्तादानोदकंबहु ॥ १२ ॥ सावित्रंतस्यपानीयंनिदानंमौक्तिकस्यच ॥ एवंहिकरिशीर्षाणि
छिन्नानिशतशोरणे ॥ १३ ॥ कुशेनतेनवीरेणतदद्भुतमिवाभवत् ॥ अथकोदंडटंकारबधिरीकृतदिग्गजः ॥ १४ ॥ द
दर्शभरतःकिंतौकार्तिकेयगणेश्वरौ ॥ संहरंतौनिजंसैन्यंवनंवायुविभावसू ॥ १५ ॥ मुमोचनिशितान्बाणांस्तोयधार

राइवांबुदः॥ जैमिनिरुवाच बालकौकार्मुकयुतौघनश्यामौचसंगतौ ॥ १६ ॥ काकपक्षधरौवीक्ष्यहनूमानिद
मब्रवीत्॥ हनूमानुवाच एतौरामाकृतीबालौबलंरामस्यवीक्षकौ ॥ १७ ॥ सज्जास्तिष्ठंतुसर्वत्रभरताद्यामहाब
लाः॥ एवंब्रुवतिवीरेतुतदापवननंदने ॥ १८ ॥ तावत्कुशःप्रत्युवाचलवंरणगतंतदा ॥ पश्यसैन्यंलवप्राप्तंतुरंगंनेतुमि
च्छति ॥ १९ ॥ व्रजाम्येतद्बलंभ्रातस्तुरंगंत्वंहिपालय ॥ ततोरामानुजंवीक्ष्यकुशोवचनमब्रवीत् ॥ २० ॥ कुशउ
वाच शत्रुघ्नोलक्ष्मणश्चोभौशयातेनिहतंबलं॥ किन्नाममेनजानासिशत्रुंमांकुशमागतं॥ २१ ॥ भरतउवाच
त्वांनयिष्याम्यहंयुद्धात्पराजित्यनिजांपुरीं ॥ सानुजंत्वरितंबालंघोटंमुंचव्रजाधुना ॥ २२ ॥ जननींतेतापसींमेकरुणा
वीक्ष्यजायते॥जनन्यैब्रूहिमुक्तोऽस्मिसबंधुर्भरतेनच॥२३॥क्षामितंस्वबलस्याद्यपातनंयत्त्वयाकृतं ॥ तच्छ्रुत्वावचनंत
स्यकुशोबाणैरथार्दयत् ॥ २४॥ भरतंसप्तभिर्वीरंवानरान्पंचसप्तभिः॥ हनूमंतंशतेनायंताडयामाससंगरे॥ २५॥ बाणा
नांवालिपुत्रंचसहस्रेणहसन्निव ॥ नीलंपंचशतैर्विव्याधसप्तत्याचनलंरणे॥ २६॥ जांबवंतंत्रिसाहस्रैर्बाणैर्विव्याधरोषि
तः॥ यस्ययस्यशरोलग्नोनितरांहृदयेबलात् ॥ २७ ॥ मूर्च्छान्वितश्चपतितःसीतापुत्रेणताडितः ॥ बाणैःषड्भिश्चराजेंद्र
लवेनातिबलीयसा ॥ २८ ॥ भरतस्यधनुश्छिन्नंरथश्चशकलीकृतः ॥ कुशकोदंडनिर्मुक्तैर्मुमोहभरतःशरैः ॥ २९ ॥
गिरिमुत्पाट्यहनुमान्भरतंवीक्ष्यमूर्च्छितं ॥ चिक्षेपसीतासुतयोर्मूर्ध्नियोजनमायतं ॥ ३० ॥ तंपर्वतंदीर्घनेत्रौबाणैश्च
क्रतुरंबरे॥ त्रसरेणुनिभंरुद्रगात्रभूतिसुखप्रदं ॥ ३१ ॥ पंचभिस्तंहरिसुतंप्रभिन्नमपिमूर्च्छितं ॥ शरैःकनकचित्रैश्च
कुशश्चक्रेस्वपौरुषात् ॥ ३२ ॥ ततोभग्नंबलंभूयोरामायपतितंजनः ॥ कथयामासराजेंद्रश्रुत्वारामोविनिर्ययौ॥ ३३ ॥
ससुग्रीवोमहाबाहुर्भ्रातृदुःखेनदुःखितः॥विभीषणयुतःश्रीमान्विस्मयोत्फुल्ललोचनः॥३४ ॥ वनंप्राप्यरथारूढस्तौदद
र्शबलंचतत्॥हतप्रहतविध्वस्तंरामेतिपरिभाषिच॥३५॥ जैमिनिरुवाच पप्रच्छरामस्तौबालौस्वाकृतीधन्विनांवरौ॥
कुतोऽधीतोधनुर्वेदोभवद्भ्यांयद्धतंबलं॥३६॥केनोपनीतौविधिवत्किंस्विद्वेदेकृतश्रमौ ॥ किंस्वित्कलासुकुशलौधर्मश्र
वणतत्परौ ॥ ३७॥ कच्चिन्नपरदारेषुविरुद्धाद्दृष्टिरीर्यते ॥ कच्चित्तेषुचविप्रेषुप्रतिज्ञायाश्चपालनं॥३८॥कस्तातःकाचज

ननीकुत्रवासोनिवेद्यतां ॥ तद्भाषितमुपश्रुत्यकुशोवचनमब्रवीत् ॥३९॥ कुशउवाच किमस्मदीयकथयावंश जोद्भवयानृप ॥ क्षात्रंपौरुषमुत्सृज्यकथ्यतेत्वादृशैर्जनैः ॥४०॥ शीघ्रंयुध्यस्वराजेंद्रविलंबःक्रियतेकथम् ॥ नतुरंगोत्य स्मदीयउच्यतांवाथयुध्यतां ॥४१॥ इतिवाक्यंतयोःश्रुत्वारामोऽवोचद्विशांपते ॥ नकरिष्याम्यहंयुद्धंभवान्कथयतांकुलं ॥४२॥ कुशउवाच केवलंसुषुवेसीताक्षमाशीलौचनौवने ॥ आवयोःकृतवान्सर्वंजातकर्मादिकंमुनिः ॥४३॥ उपनिन्येचवाल्मीकिर्वेदंसम्यगपाठयत् ॥ तथारामस्यचरितंसन्मनोनिर्वृतिप्रदं ॥ ४४ ॥ तत्तदभ्यासयोगेनदृष्टिर्विम लतांव्रजेत् ॥ बुद्धिस्वास्थ्यंमनःस्वास्थ्यंप्रतापश्चापिवर्धते ॥ ४५ ॥ तस्माद्भूतंबलंसर्वंयोधानांतवपश्यतां ॥ ममताना स्तितेरामपुत्रदारधनेषुच ॥ ४६ ॥ तस्माद्भूतस्यसैन्यस्यगणनातेनविद्यते ॥ नशक्तिर्विद्यतेरामसात्यक्ताकिंत्वयावने ॥ ४७ ॥ शक्तिहीनोनरःकस्तुयुध्येतनिशितैःशरैः ॥ जैमिनिरुवाच रामोमन्यतपुत्रौतौसीतातनयकीर्तनात् ॥ धिगस्तुखलुनोयुद्धमित्युक्त्वाधनुरुज्झहौ ॥ ४८ ॥ पपातरथनीडेथमूर्छितोजनमेजय ॥ जैमिनिरुवाच मूर्छां विहायधर्मात्माधीरःसत्यपराक्रमः ॥ ४९ ॥ सुग्रीवंपरिपप्रच्छरामःपरपुरंजयः ॥ एतौकस्यात्मजौवीरौजानीहिकपि सत्तम ॥ ५० ॥ सुग्रीवउवाच पुराणपुरुषाज्जातावेतौमन्येऽत्रराघव ॥ प्रतिबिंबंतावकंहिवनमध्येविलोक्यते ॥ ५१ ॥ नापरंसंगरेमन्येजययुक्तंविनाप्रभुं ॥ तवाग्रेयामिबालौहियुधियोधयितुंनृप ॥ ५२ ॥ गृहीत्वाशाखिनंराज न्मुमोचपुरतस्तयोः ॥ तौवृक्षंतिलशःकृत्वाचक्रतुर्मूर्छितंहरिं ॥ ५३ ॥ शरैःसुनिशितैस्तावन्नीलोयुध्यतवानरः ॥ नीलंबा णेनविव्याधकुशःकोपसमन्वितः ॥ ५४ ॥ बभूवुर्बहवोनीलारुधिरात्तस्यचापरे ॥ तैश्चव्याप्तंरणंसर्वंतत्प्रमाणैर्महाबलैः ॥ ॥ ५५ ॥ तावत्कुशेनवीरेणबुद्ध्यासम्यग्विचारितं ॥ जलौकास्त्रेणतेसर्वेविद्धाःपेतुर्धरातले ॥ ५६ ॥ सचापिपतितोनीलःप रेभग्नाश्चसैनिकाः ॥ एकएवस्थितोरामोनाभवन्सैनिकाश्चते ॥ ५७ ॥ रामोमुमोचनाराचांस्तीक्ष्णान्कालानलप्रभान् ॥ मार्गणानिष्फलाःपेतुःकृपणस्येवमंदिरे ॥ ५८ ॥ मनोरथानिर्धनस्यशरन्मेघाइवांबरे ॥ यंयंबाणंमुमोचासौराघवः कुपितोमृधे ॥ ५९ ॥ तंतंद्विधाचक्रतुस्तौसचतुर्धाभवच्छरः ॥ एवंतदाऽभवद्युद्धंलोकविस्मयकारकं ॥ ६० ॥ दृष्ट्वातुल्यं

बलंसम्यग्बालयोरघुनंदनः ॥ सीतावदनवद्वक्रौद्दष्ट्वाबाणैश्वताडितः ॥ ६१ ॥ पपातरथनीडेथमूर्च्छितोजनमेजय ॥ त
तःकुशलवौज्ञात्वामूर्च्छितंजानकीपतिं ॥ ६२ ॥ समुत्तीर्यरथात्तस्माज्जगृहातेऽस्यकुंडले ॥ केयूरंकंठहारंचलक्ष्मणस्यापि
मंडनं ॥ ६३ ॥ सर्वेषामपिवीराणांपतितानांरणांगणे ॥ एतस्मिन्नंतरेराजन्लवःकुशमथाब्रवीत् ॥ ६४ ॥ भ्रातःकुशग्रही
ष्यामिहनूमंतंमहाबलं ॥ सीतावीक्ष्यकपिंद्दष्टाभविष्यतिनसंशयः ॥ ६५ ॥ रामस्यचरथंरम्यमध्यारोहसुदुर्जयं ॥ लक्ष्मण
स्यरथंरम्यमधिरुह्यव्रजाम्यहं ॥ ६६ ॥ जांबवत्प्रमुखान्वीरान्स्वरथेपरिपातय ॥ जैमिनिरुवाच हनूमज्जांबवं
तौचमूर्च्छाविरहितौभुवि ॥ ६७ ॥ वानरावूचतुस्तथ्यंमीलयावोऽत्रलोचने ॥ हनूमानुवाच ॥ ६८ ॥ पश्यरामाद
योवीरामूर्च्छिताबालसायकैः ॥ जांबवन्मांचकुरुतेमूर्च्छितंरामसंभवः ॥ ६९ ॥ किंकरिष्यामियदिमांसनेष्यतिबलात्कु
शः ॥ सीतासमीपेमरणंभविष्यतिनसंशयः ॥ ७० ॥ एवंब्रुवाणेवीरेतुप्राप्तोरणगतोलवः ॥ जग्राहवानरौतौहिमुदाकपट
मूर्च्छितौ ॥ ७१ ॥ सीतासमीपेगत्वाथसर्वंनिगदतुश्चतौ ॥ जितोरामःससैन्योहिसमानीतंचभूषणं ॥ ७२ ॥ वानरौकौतु
कार्थंतेमयानीतौनिरीक्षय ॥ मातर्भ्रात्राकृतंयुद्धंविजयीपुनरागतः ॥ ७३ ॥ सीतापुत्रौपरिष्वज्यवचनंचेदमब्रवीत् ॥
सीतोवाच मानिनौवानरौमुंचरणमध्येचपुत्रक ॥ ७४ ॥ मांनिरीक्ष्यमृतावेतौजीवहीनौभविष्यतः ॥ ततोलवोमु
मोचैतौरणमध्येमहामतिः ॥ ७५ ॥ एतस्मिन्नंतरेराजन्वाल्मीकिर्वरुणालयात् ॥ आजगाममहातेजाऋषिभिःपरि
वारितः ॥ ७६ ॥ तौगत्वाथाकथयतांसर्वंकृत्यमशेषतः ॥ ततोज्ञात्वामुनिवरःसर्वानुत्थाप्यवारिणा ॥ ७७ ॥ प्रोक्ष्या
मृतमयेनैवमुवाचरघुनंदनं ॥ वाल्मीकिरुवाच तवपुत्रौमहाराजगृह्यतांरघुनंदन ॥ ७८ ॥ मन्यसेयदिसीतां
चनिर्दोषांनेतुमर्हसि ॥ उत्थायरामोनगरींप्रविवेशससैनिकः ॥ ७९ ॥ विस्मयन्नेवचहयंमुक्तंवाल्मीकिनाचतं ॥ पा
लयामासवीरैस्तैःपश्चाद्यज्ञोमहान्कृतः ॥ ८० ॥ यज्ञोत्सवेवर्तमानेवाल्मीकिर्मुनिपुंगवः ॥ सीतांनीत्वापुत्रयुतांसंस्थाप्यर
घुसन्निधौ ॥ ८१ ॥ रामःपुत्रयुतोजातःसीतयासहितःस्थितः ॥ मुनीन्विसर्जयामासयज्ञांतेचपुरस्कृतान् ॥ ८२ ॥ रामः
सीतागतंस्नेहंनिदधेतदपत्ययोः ॥ युद्धंतुपुत्रयोर्यद्वज्जातंरामेणवैपुरा ॥ ८३ ॥ तथापार्थस्यपुत्रस्ययुद्धंप्रावर्तताद्भुतं ॥

सूतउवाच पारिक्षितायसकलंकथयामासजैमिनिः ॥ ८४ ॥ तत्तुयुष्मभ्यमाख्यातंमयावैमुनिपुंगवाः ॥ नाख्यात
वानिदंयुद्धंवाल्मीकिःपितृपुत्रयोः ॥ यद्याख्यास्यदमज्जिष्यल्लोकोयंकरुणार्णवे ॥ ८५ ॥ इदमाख्यानकंरम्यंयेश्टण्वं
तिनरोत्तमाः ॥ तेपुत्रपौत्रसहिताभुक्त्वाभोगान्मनोरमान् ॥ सर्वपापविनिर्मुक्तालभंतेविष्णुमव्ययं ॥ ८६ ॥ श्टणोती
दंपुण्यशीलंश्रावयेच्चेदमुत्तमं ॥ नरःफलमवाप्नोतिराजसूयाश्वमेधयोः ॥ ८७ ॥ कांचनेनविमानेनस्वर्गंयातिनरोत्तमः ॥
पुनर्लक्ष्मीरूपयुतोजायतेविमलेकुले ॥ ८८ ॥ श्रुत्वात्विदमुपाख्यानंश्राव्यमन्यन्नरोचते ॥ पुंस्कोकिलरुतंश्रुत्वारूक्षा
ध्वांक्षस्यवागिव ॥ ८९ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुशलवोपाख्यानेरामाश्वमेधपरिसमाप्तौफलस्तुतिव
र्णनंनामषट्त्रिंशोऽध्यायः ॥ ३६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥

जैमिनिरुवाच हंसध्वजेनतुमलंकृतंयुद्धंनराधिप ॥ सबाणैर्बभ्रुवाहस्यच्छित्वारथसहस्रकं ॥ १ ॥ सरथंपातयित्वा
ग्रेबिभेदास्यवपुःशरैः ॥ अस्त्राणिपार्थपुत्रस्यविफलानिकृतानिवै ॥ २ ॥ अक्षौहिणीपंचकंतुविजितंजनमेजय ॥ स्मृ
त्वाकृष्णस्यवचनंपुत्रयोःपतनंमृधे ॥ ३ ॥ बभ्रुवाहस्तुपार्थायबाणंचपरिमुंचति ॥ तेनवीरसहस्राणांबलंभवतिपाति
तं ॥ ४ ॥ पार्थपुत्रस्यबाणौघैर्मरालध्वजवाजिनः ॥ रथोऽपिपरमाणुत्वंप्राप्तवान्समरेतदा ॥ ५ ॥ सभिन्नहृदयोराजा
हंसकेतुःक्षितिंययौ ॥ पतितेचमहावीर्येहंसकेतौमहात्मनि ॥ ६ ॥ सुवेगःसंगरेयोद्धुंबभ्रुवाहनमागतः ॥ जघाननव
भिर्बाणैःपार्थसूनुसंवक्षसि ॥ ७ ॥ छत्रंध्वजंधनुश्चास्यत्रिभिर्बाणैर्द्विधाकरोत् ॥ शतेनचसहस्राणांताडयामासवक्ष
सि ॥ ८ ॥ पुनर्वीरसहस्रस्यकदनंकृतवानसौ ॥ गजानांचंद्रशुभ्राणांशतानिचमहाहवे ॥ ९ ॥ निहत्यपृथिवींचक्रेमां
सपंकांसुदारुणां ॥ युद्धक्षेत्रंतुतत्सर्वंकर्षित्वागजमस्तकैः ॥ १० ॥ अधश्चोर्ध्वंकरैर्वाजिगजस्कंधनियंत्रितैः ॥ अंत्रैस्त्रि
गुणितैर्योक्त्रैर्गजमुक्ताफलानिच ॥ ११ ॥ कृत्वाबीजंवपंतश्चतस्मिन्कालेविशांपते ॥ शिरांसिमूलफलवत्स्रवपंतिचभै
रवाः ॥ १२ ॥ यक्षिण्योनागचरणैश्छिन्नैर्मुसलकंडनं ॥ नृशीर्षाणांस्मकुर्वंतिगायंत्यःशतशोभृशं ॥ १३ ॥ यंत्रैर्गजा
ननमयैश्छिन्नैःपिष्यंतिचापराः ॥ पुनःसुवेगःसंधायशरंकालानलोपमं ॥ १४ ॥ मुमोचार्जुनपुत्रायमध्यतःसद्विधा

करोत्॥ अग्रभागंतथाप्यस्यसंमुखंचागतंरणे ॥ १५॥ तंचापिद्विदलीकृत्ययावत्पश्यतिचार्जुनिः॥शकलेपुनरायाते
तेद्विधाकारितेऽमुना॥ १६ ॥ शकलानांचतुष्कंयत्तद्भूमौपतितंनृप ॥ पंचमंबाणशकलमग्रभागगतंतुयत् ॥ हृदये
ऽस्यप्रविष्टंतन्मूर्च्छितोऽभूत्तदाऽर्जुनिः॥ १७॥ विहायपुनरेवायंकश्मलंसहसोत्थितः॥ ततःपरंप्रज्वलितःप्रलयेपाव
कोयथा ॥ १८ ॥ जघानपांडवींसेनांस्थितांपार्थरथंप्रति॥ तस्मिन्दिनेस्थितौद्वौतुपार्थकर्णसुतावुभौ॥१९॥ काय
नाशेविलीयंतौयथाजीवौपरस्परं ॥ अन्येयेमूर्च्छितानीताजीवशेषारणात्पुरं ॥२०॥ उलूपीपालयामासविशल्यैर्वि
विधौषधैः॥पुरासमुद्धृतायस्माद्गुरुशापात्सुमानिनी॥ २१ ॥नागराजसुतादेवीदिष्ट्यापार्थेनसंगता ॥ तीर्थयात्राप्र
संगेनतथाचित्रांगदाचसा ॥ २२ ॥उवाचपांडवस्तत्रवृषकेतुंमहाबलं ॥ अर्जुनउवाच सैन्यंनष्टंकर्णपुत्रवस्तु
जातंचमेत्वृतं॥ २३॥ हंसध्वजमुखावीराःपतितामममसन्निधौ॥ प्रद्युम्नःसहपुत्रेणनीतोमणिपुरंप्रति ॥ २४॥ मदर्थेयो
धितौवीरौनिर्भिन्नौसायकैश्वतौ॥ अनुशाल्वोऽपिसमरेपतितोनैवदृश्यते॥ २५ ॥सुवेगोनिहतश्वाघनीताश्वममवी
रकाः॥ छत्रैर्ध्वजैःकार्मुकैश्वचामरैश्ववरांशुकैः॥ २६ ॥ एकस्त्वमसिपुत्रात्रनापरःकोऽपिदृश्यते ॥ निर्गच्छत्वंतुनगरे
यत्रतौधर्ममाधवौ॥ २७॥ कुलपुत्रोऽसिभद्रंतेदातॄणांबीजमेवच॥ एवंब्रुवतिपार्थेचयावत्तस्याग्रतोनृप॥ २८॥ ता
वत्पार्थकिरीटस्थोगृध्रस्तीव्रंववाशह ॥ ज्ञात्वागृध्रंमस्तकेस्वेशंसंतंवैशसंस्वकं ॥ २९ ॥ तथाकपोतंनीडेचरथस्यकिल
शायिनं॥ शिरोहीनांनिजांछायांनासाविरहितंमुखं॥ स्फुलिंगवर्जितेनेत्रेप्रत्युवाचपुनर्वचः॥ ३०॥ पुत्रप्रयाहिनगरं
धर्मभीमजनार्दनान्॥शंसत्वंवैशसंघोरंदुर्निमित्तानिमेरणे॥ ३१ ॥भवान्यदिमयासार्धंप्राप्नोतिमरणंरणे॥ तवाद्य
नाशेनष्टास्तेभविष्यंतिपरंक्षितौ॥ ३२ ॥ बहुधायोधितश्वासिभिन्नंबाणैर्वपुस्तव ॥ विनात्वांनपृथाजीवेत्तस्मान्मामु
च्यगम्यतां॥ ३३॥ अकार्यंचमहज्जातंमत्तोराजाचदीक्षितः॥ असिपत्रव्रतचरोकथंयज्ञक्रियाभवेत्॥ ३४॥युधिष्ठिर
स्यनस्नानंयज्ञांतेऽवभृथादिकं॥ जलयात्राचतुःषष्टिदंपतीभिःकृतानच ॥ ३५ ॥ युधिष्ठिरमुखावीराभीमाद्यामम्बां
धवाः॥ छत्रंशतशलाकंतद्व्याघ्रचर्मसमन्वितं॥ ३६॥ युधिष्ठिरस्यपुरतोयज्ञारंभेनधारितं॥ गौरीणांनैवनारीणांसहस्रं

चामरान्वितं ॥ ३७ ॥ अग्रतोधर्मराजस्यगतंलाजप्रवर्षणं ॥ विप्राणांवेदनिर्घोषोनैवस्वर्मंडपंगतः ॥ ३८ ॥ नसुवाःक
नकाबद्धानसुचोबहुसंस्कृताः ॥ वैकंकताश्चयज्ञेचचषालैर्मंडितानते ॥ ३९ ॥ यूपाबैल्वाबादराश्चपालाशाःखादिराः
शुभाः ॥ नतत्पताकावेदीनांपूजनंमामकैःकृतं ॥ ४० ॥ वासुदेवंपुरस्कृत्यरुक्मिणीनैवतोषिता ॥ अनुसूयारुंधती
नांवृद्धानाम्रपियोषितां ॥ ४१ ॥ सभर्तृकाणांयज्ञांतेनमस्कृत्ययुधिष्ठिरः ॥ आशीर्भिरभियुक्तोनमयापार्थेनका
रितः ॥ ४२ ॥ धिग्जीवितंममव्यथामन्येयुद्धंकरोम्यतः ॥ वृषकेतुरुवाच नव्रजामिभयान्मृत्योरणेत्यक्त्वाधनंज
यं ॥ ४३ ॥ सूर्यःपितामहोभातिमद्भंगात्पतितोभवेत् ॥ अभग्नोभंगमायातितस्मान्मृत्युस्तुकीदृशः ॥ ४४ ॥ त्वंप्रयाहि
महाबाहोगमनंकीदृशंमम ॥ एकपत्नीचसारम्यानमांप्राप्तंनिरीक्षते ॥ ४५ ॥ विमुखंत्वांपरित्यज्यसत्यमेतद्वदामिते ॥
पश्चाद्यपौरुषंपार्थबभ्रुवाहनमागतं ॥ ४६ ॥ योधयामिसमक्षंतेससैन्यमपिसंगरे ॥ मित्रार्थेयस्त्यजेत्प्राणानृगवा
र्थेचद्विजन्मनां ॥ ४७ ॥ स्वामिकार्येचसमरेतस्यलोकाःसनातनाः ॥ जायंतेनात्रसंदेहःकैवल्यमपिचिंतितं ॥ ४८ ॥
यावत्पार्थोमहाबाहुःसंग्रामेपरितिष्ठति ॥ तावत्क्रतुरयंजातःकिंवृथामांप्रभाषसे ॥ ४९ ॥ एतावदुक्त्वावचनंनमस्कृ
त्ययर्यौमुदा ॥ रथेनातिपताकेनबभ्रुवाहनमाह्वयत् ॥ ५० ॥ तिष्ठंतियेरणेधीराःपांडवस्यत्वयाहताः ॥ तेषामेवाद्यसर्वे
षांकरिष्येशांतिकंमहत् ॥ ५१ ॥ एवंब्रुवंतंबलिनंकर्णसूनुंशरैस्त्रिभिः ॥ विव्याधहृदयेशीघ्रंतेभित्वाधरणींगताः ॥ ५२ ॥
तृषिताइवराजेंद्रपातुंभोगवतीजलं ॥ वृषकेतुःशरैःषड्भिस्तंजघानस्तनांतरे ॥ ५३ ॥ सशरैरर्दितःकार्ष्णिर्भ्राम्यमा
णःकथंचन ॥ संस्थाप्यात्मानमव्यग्रोयोधयामासकर्णजं ॥ ५४ ॥ तिलशस्तद्रथंकृत्वानिपात्यरथसारथिं ॥ हयान्हत्वा
चसमरेशंखंदध्मौप्रतापवान् ॥ ५५ ॥ तस्यांगंपूरयित्वाथशरैःकनकचित्रितैः ॥ ततोजघाननाराचैःकर्णसूनुंमहाब
लं ॥ ५६ ॥ रथंतस्यसुचित्रंतंससूतंचयुगैर्युतं ॥ छित्वाशतसहस्रेणताडयामासपांडविः ॥ ५७ ॥ आग्नेयमस्त्रंतरसाप्र
युयोजनृपात्मजः ॥ वारुणंकर्णजेनापिबभ्रुवाहेप्रयोजितं ॥ ५८ ॥ स्वयमेवाथतेनापिवायव्यास्त्रंसुरोपितं ॥ पार्वता
स्त्रंचशाक्रंचकौबेरमतिदारुणं ॥ ५९ ॥ त्वाष्ट्रंचातिबलःश्रीमान्प्रेरयामासवैरिणं ॥ सौरंचशांभवंचास्त्रंसर्वशस्त्रविदार

णं ॥ ६० ॥ कार्तिकेयकृतंचास्त्रंयाम्यंशस्त्रंस्वमाहवे ॥ एवंशस्त्रास्त्रसंपातैःकदनंचाभवद्भृशं ॥ ६१ ॥ बहवोनिहतावीरा
स्तस्मिन्युद्धेमहात्मनोः ॥ संवर्तकालेराजेंद्रयमेनेवनिपातिताः ॥ ६२ ॥ रुद्राक्रीडनकंजातंभूततुष्टिकरंमहत् ॥ निधनं
रथनागानांपदातीनांचकर्णजात् ॥ ६३ ॥ तस्यास्त्रैर्वेष्टितःकार्ष्णिश्चितयित्वाथवैष्णवं ॥ सर्वाण्यस्त्राणितेनायंबभ्रुवा
होमहाबलः ॥ ६४ ॥ शमयित्वाशरैर्घोरैर्वाडवास्त्रंसमाददे॥उवाचकर्णपुत्रंतंबहवोनिहतामया ॥ ६५ ॥ नाहंवैतादृशो
व्याप्तोयथाकर्णात्मजेनच ॥ एनमत्रहनिष्यामिवत्रंनमुचिहायथा ॥ ६६ ॥ एवंतमुद्दिश्यरणेचिक्षेपाशुगमाहवे ॥ हृ
दयेऽस्यशरोलग्नोवृषकेतोर्महात्मनः ॥ ६७ ॥ बाणोगृहीत्वागगनेभ्रामयामासकर्णजं ॥ दिशश्चप्रदिशःसर्वाःसरितः
सागरानपि ॥ ६८ ॥ नपपातधरादेशेतदद्भुतमिवाभवत् ॥ अनेनैवस्वगात्रेणभिनत्स्येषपितामहं ॥ ६९ ॥ त्रिमुहू
र्तपरंसंख्येयत्रयत्रशरोगतः ॥ तत्रतत्ररणेप्राप्तौपितापुत्रावुभावपि ॥ ७० ॥ निरीक्षंतौकर्णपुत्रंनीयमानंशरेण
च ॥ मुहूर्तत्रितयादूर्ध्वंनिपपातधरातले ॥ ७१ ॥ तस्मिन्मणिपुरेराजन्पार्थस्यपुरतस्तदा ॥ ततःकर्णात्मजःक्रुद्धः
पुनरेवोत्थितोऽक्षिपत् ॥ ७२ ॥ शरान्पंचरथेतस्ययुक्तस्यसहसाहसन् ॥ तेशरास्तंरथंसाश्वंससूतंसपताकिनं ॥
॥ ७३ ॥ आनयन्सहितास्तेननाकलोकंमनोरमं ॥ रविमंडलमत्युग्रंप्रविशंतंरथंस्वकं ॥ ७४ ॥ बाणनिर्भिन्नकायोऽ
पिवीक्ष्यात्मानंमुमोचसः ॥ सरथोभानुनादग्धोयथासंपातिरंडजः ॥ ७५ ॥ पतंतंबभ्रुवाहंचवृषकेतुःशरैःपुनः ॥ प्रेष
यामासगगनेस्वपितामहमंडले॥७६॥ हंसध्वजोमदीयोऽत्रजितोवीरस्त्वयापुरा॥तदर्थंबभ्रुवाहत्वांप्रेरयामिसुरालये
॥ ७७ ॥ ईदृशंकुपितोवाक्यंप्रत्युवाचविशांपते ॥ तावच्छरांस्त्रिधाकृत्वास्वगात्राद्बभ्रुवाहनः ॥ ७८ ॥ पपातकुपितोऽ
तीवतस्योपरियथाचलः ॥ घर्षयामासचकरौचकंपेकंधरांचह ॥ ७९ ॥ पंचभिःसायकैस्तत्रविव्याधरविपौत्रकः ॥ ए
वंकर्णात्मजोवीरोबभ्रुवाहश्चभूतले ॥ ८० ॥ युध्यमानौशरैर्घोरैःपार्थःप्रस्यतिकौतुकं ॥ ऊचेपार्थकर्णसुतोयुद्धेतस्मिं
स्तथाविधे ॥ ८१ ॥ रथचक्रंहिकर्णस्यनिमग्नंपुरुषर्षभ ॥ कथंतेनतदाप्रोक्तंतिष्ठेतिवचनंप्रभो ॥ ८२ ॥ कर्णेनचमहायु
द्धेनायंतद्वत्प्रभाषते॥ मयाभिन्नशरीरोपिपरंयुद्धंनमुंचति॥८३॥एवंब्रुवाणेवीरेतुपार्थस्यपुरतःपुनः॥ पपातकार्ष्णिःकु

पितोमूर्ध्निकर्णसुतस्यहि ॥ ८४ ॥ भिद्यमानौरणेबाणैःशस्त्रैर्नानाविधैरपि ॥ उभौतौस्यंदनारूढौक्षणेनविरथौदिवि ॥ ॥ ८५ ॥ उत्पततौपातयंतौरथस्थौददृशुर्जनाः॥ अन्योन्यंस्वशरैर्घोरैर्नीयमानौसुरालये ॥ ८६ ॥ उभयोर्गात्रजंमांसं छिन्नंबाणैःसहस्रधा ॥ नीयतेगगनेगृध्रैस्तथाऽन्यैःश्येनपत्रिभिः ॥ ८७ ॥ एकःक्षितौद्वितीयःखेपुनरेवक्षितौचखे ॥ तावेतौतादृशौराजन्दिनानांपंचकंरणे ॥ ८८ ॥ पंचमेदिवसेकार्ष्णिःकर्णपुत्रंतथाविधं ॥ बहुभिःसायकैस्तीक्ष्णैःसमं ताड्यकिरत्पुनः ॥ ८९ ॥ उवाचक्रोधनयनोधन्यस्त्वमसिनापरः ॥ वृषकेतोनमेयुद्धंकृतंकेनापिमानिना ॥ ९० ॥ इदा नींस्मरवीरत्वंतथादेवंजनार्दनं ॥ अथबाणैर्जीवितंतेपातयिष्यामिसंगरे ॥ ९१ ॥ जैमिनिरुवाच अर्धचंद्रंमु मोचास्मैकर्णपुत्रायमारिष ॥ तमायांतंत्रिधाकृत्वायावन्नदतिकर्णजः ॥ ९२ ॥ तावत्तेनापरोबाणोमुक्तःकनकचि त्रितः ॥ सकंठनालात्तच्छीर्षंजहारगगनेगतः ॥ ९३ ॥ छिन्नंशिरःखात्प्रपतत्प्रलग्नंहृदयेतदा ॥ बभ्रुवाहस्यराजेंद्रपात यित्वाकलेवरं ॥ पश्चात्कंदुकवत्प्राप्तंपार्थस्यपदयोःशुभं ॥ ९४ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेबभ्रुवाहनविजये वृषकेतुवधोनामसप्तत्रिंशोऽध्यायः ॥ ३७ ॥ ॥ छ ॥ जैमिनिरुवाच वृषकेतोस्तदाराजन्संग्रामेतुमहद्भिरः ॥ जप त्केशवरामेतिनृसिंहेतिमुदायुतं ॥ १ ॥ अगृहीत्तरसापार्थःकराभ्यांकुंडलान्वितं ॥ कबंधोधावमानःसन्निपपातरणेरिपू न् ॥ २ ॥ पातयित्वापिसुमुखंरिपुंनृत्यतिसंगरे ॥ तत्सुरूपंसमालोक्यविललापार्जुनस्तदा ॥ ३ ॥ हाकर्णसुमहप्राप्तंविनात्वांपु त्रसंगरे ॥ कथयिष्यामिकिंगत्वाधर्मात्मानंयुधिष्ठिरं ॥ ४ ॥ त्वांविनापुरुषव्याघ्रकुंतींदेवींचपार्षतीं ॥ मात्राहंशिक्षितश्चा स्मिरक्षणीयस्त्वयाशिशुः ॥ ५ ॥ किमुत्तरंनुतांवक्ष्येभीमसेनंचसांप्रतं ॥ नकुलंसहदेवंचकृष्णदेवंचमेप्रियं ॥ ६ ॥ यौवना श्वस्यतुरगःसमानीतःस्वपौरुषात् ॥ कथंत्वयासुतप्राणास्त्यक्ताकृष्णंविनाग्रतः ॥ ७ ॥ तवप्राणश्चकिंकृष्णोयथाप्रा णाहरेर्वयं ॥ शरीरंतावकंपुत्रभक्षितंगगनेखगैः ॥ ८ ॥ स्वगात्रंहिसमुत्कृत्यपिताशक्रायतेददौ ॥ शक्रपुत्रस्यकार्येऽत्र विहंगेभ्यस्त्वयाऽर्पितं ॥ ९ ॥ बहुवारंभीमसेनोगन्धत्येकोमहारणे ॥ द्वितीयोननरःकश्चित्तस्ययातिसहायतां ॥ १० ॥ त्वयाशत्रुशिरांस्येवपंकजानिकरेणच ॥ गृहीत्वारुधिराक्तानिमौक्तिकानिरणांगणे ॥ ११ ॥ पितामहायसूर्यायदत्तो

ऽर्घःप्रत्यहंमुदा ॥ प्रथितौद्वौस्थितौवीरौदिवाकरधनंजयौ ॥ १२ ॥ आवयोःपतनंभाव्यंत्वयिवीरेद्यपातिते ॥भास्करः
सत्कृतोनाकेयशसातावकेनच ॥ १३ ॥ अहंतुशिरसाऽनेनकृष्णगोविंदवादिना ॥ एतत्कृतंमहद्वैरंमयासार्धंहिपुत्रक॥
॥ १४ ॥ पितामेनिहतःकर्णःपार्थेनचरणांगणे ॥ कृत्वादुःखातुरंपार्थंततोसिप्रथमंगतः ॥ १५ ॥ यथारथस्यचक्रंहि
ग्रस्तंभूम्यापितुश्चते ॥ शापितातेनवीरेणकृतामातंगसंगिनी ॥ १६ ॥ उपकारकरंश्रीमन्नान्यंपश्यामिसांप्रतं ॥
अद्यमेनिहतंसैन्यमद्यमेनिहतःसुतः ॥ १७ ॥ सुभद्रानंदनःशूरोनष्टमद्यकुलंमम ॥ कृष्णेनापिपरित्यक्तोवृषकेतौ
चपातिते ॥ १८ ॥ यथासूर्यंविनाभूमिर्गृहंदीपविवर्जितं ॥ लिंगहीनायथापिंडीजयश्रीस्त्वांविनातथा ॥ १९ ॥ इत्यु
क्त्वामुक्तकंठस्तंसंस्मरन्नर्जुनोऽरुदत् ॥ क्वगतोसिहृषीकेशदुःखितंमांनर्विदसे ॥ २० ॥ नायासिस्मृतमात्रस्त्वंमन्येत्य
क्तोऽस्मिसांप्रतं ॥ एतावदुक्त्वावचनंमूर्च्छितोन्यपतद्भुवि ॥ २१ ॥ हृदयेतच्छिरःकृत्वातस्मिन्महतिसंगरे ॥ ततश्चित्रां
गदासूनुःपतितंधरणीतले॥ २२ ॥धनुष्कोट्याप्रताड्यैनंप्रहसन्वाक्यमब्रवीत् ॥कथंवैश्वभवाःपार्थतुलनार्थंसमागताः
॥ २३ ॥रणार्णवेयशःपोतमारूढोस्म्यधुनारणे ॥ धनानिकानिवीराणांशिरांस्यल्पानिकानिच ॥ २४ ॥ सर्वेषामेवसार्धं
हितुलितंतद्धनंजय ॥ वृषकेतोःशिरश्चित्रंशिवपूजनलिंगके ॥ २५ ॥ उत्तिष्ठार्पयदेवायशंकरायधनंजय ॥ तुष्टःप्रदा
स्यतिहरःशस्त्रंपाशुपतंचते ॥ २६ ॥ स्मारयिष्यतियुद्धार्थंक्षयंत्वंचगमिष्यसि ॥ जैमिनिरुवाच ततःप्रबुद्धोब
लवान्पार्थःकोपसमन्वितः ॥ तच्छिरोरथमादायस्थापयित्वादधद्धनुः ॥ २७ ॥ उवाचपुत्रंतरसाशूरंतंबभ्रुवाहनं ॥ सं
हाररूपिणंवीक्ष्यक्वयास्यसिममाग्रतः ॥ २८ ॥ सर्वेवीरामदीयाहिपातिताश्चापरेधृताः ॥ त्वांहत्वामोचयाम्येतान्कुपि
तोऽहंमहाहवे ॥ २९ ॥ गृहाणसायकंवीरवृषकेतुंचमामकं ॥ पातयित्वास्ववीर्येणकीदृशंजीवितंतव ॥ ३० ॥ सहस्व
मत्प्रहारंहिभिनद्मिगिरिमप्यहं ॥ जैमिनिरुवाच ततोमुमोचबाणौघान्तोयौघानिवतोयदः ॥ ३१ ॥ चित्रांग
दात्मजस्याग्रेतैर्भिन्नंप्रबलंबलं ॥ शरीरंतस्यवीरस्यभित्वापार्थोमहाबलः ॥ ३२ ॥ ननादभैरवंनादंघनस्तनितवद्भृशं ॥
अर्जुनस्यशरैर्नागानीयमानारथाश्चते ॥ ३३ ॥ हयाःपदातयोराजन्द्विविचक्रीकृतादृढं ॥ पार्थबाणैर्जगद्व्याप्तंदुर्गप्रा

कारभंजकैः ॥ ३४ ॥ यथाप्रवर्धितोवायुःशुष्कपत्राणिभूतलात् ॥ तृणान्यावर्तयत्याशुगगनेपांडवःशरैः ॥ ३५ ॥ शर
वृष्ट्याशरीराणिपतितानिमृतानिच ॥ दह्यंतेतेजसायुद्धेपांडवस्यविशांपते ॥ ३६ ॥ शरपुंखभवेनाथवायुनानीयतेरजः ॥ सेनाजुषापांडवेनहतानांनरवाजिनां ॥ ३७ ॥ वडवानलवत्तीव्रमदहत्सधनंजयः ॥ यैर्दृष्टःसंगरेपार्थस्तेऽभवन्मोक्षसंयुताः ॥ ३८ ॥ यथाकाश्यामंतकालेभवभीतैर्जनैर्हरः ॥ तथापार्थोऽपिदेहांतेतेऽपिजातास्तथाविधाः ॥ ३९ ॥ बभ्रुवाहंशरैर्घोरैःसंछाद्यव्यनदद्बली ॥ नादानंनचसंधानंनमोक्षंपांडवस्यते ॥ ४० ॥ रणमध्येचददृशुःप्रलयंमेनिरेजनाः ॥
निर्वापयंतिसहसातेजसापांडवस्यतु ॥ ४१ ॥ बभ्रुवाहस्ततःक्रुद्धोविव्याधचधनंजयं ॥ चतुर्भिःसायकैस्तीक्ष्णैस्तुरंगान्सारथिंत्रिभिः ॥ ४२ ॥ छत्रंचेकेनबाणेनसप्तभिःपवनात्मजं ॥ प्रकुर्वाणौमहद्युद्धमन्योन्यजयकांक्षिणौ ॥ ४३ ॥
बभ्रुवाहनउवाच पार्थद्रोणाच्चदेवेभ्यस्त्वयास्त्राणिपुराविभो ॥ शिक्षितान्यधुनातानिविफलानिकथंतव ॥ ४४ ॥
नायातिसारथिःकस्मात्तन्नजानासिदुर्मते ॥ पतिव्रतामेजननीदूषितागतबुद्धिना ॥ ४५ ॥ त्वयाममसमक्षंहिसतांदोषोभयावहः ॥ यावद्भवांश्वसमरेयत्रकुत्रापिसंस्थितः ॥ ४६ ॥ तावत्समागतःकृष्णःस्मृतःपूर्वंत्वयार्जुन ॥ स्मरणंविस्मृतंचासीत्तस्यविष्णोर्महात्मनः ॥ ४७ ॥ क्षणंप्रतीक्षामिरणेयावत्स्मरसिकेशवं ॥ नयुद्धंप्रकरिष्यामित्वयापूर्वंधनंजय ॥ ४८ ॥ कृष्णविस्मृतियुक्तानांमहाहानिःपदेपदे ॥ स्मरत्वंनाथवत्त्वात्तुमागर्वंचवृथाकुरु ॥ ४९ ॥ कर्णस्यसुतेनसतांसंमतंशक्रनंदन ॥ यथापुराकृतंयुद्धंमयासार्धमहात्मना ॥ ५० ॥ तथाकुरुनिजंशौर्यंप्रदर्शयममार्जुन ॥ कर्णपुत्रोरणेधीरःसोऽपिस्वर्गंगतोधुना ॥ ५१ ॥ जैमिनिरुवाच एवंतेनतदाप्रोक्तःसव्यसाचीरुषान्वितः ॥ ववर्षमाहंसंत्यज्यभल्लान्कनकभूषितान् ॥ ५२ ॥ रथस्थंबलिनंपुत्रंविव्याधप्रहसन्निव ॥ तैःशरैरग्निसंकाशैःसविद्धोनरणंजहौ ॥
॥ ५३ ॥ गगनंपूरयामासस्वबाणैर्बभ्रुवाहनः ॥ सव्यसाचिनमत्युग्रोबिभेदनिशितैःशरैः ॥ ५४ ॥ कतव्यंविस्मृतःपार्थोगंगाशापेनमोहितः ॥ यंयंशरंससंधत्तेयच्छस्त्रंशापमोहितः ॥ ५५ ॥ तंतंशरंचतच्छस्त्रंयुधिचिच्छेदपुत्रकः ॥ एतस्मिन्नंतरेराजन्कुपितोबभ्रुवाहनः ॥ ५६ ॥ अर्धचंद्रंस्वकोदंडेसंदधेपरवीरहा ॥ ज्वालायुक्तंकालकल्पंवडवानलसन्नि

भं ॥ ५७ ॥ ततश्चकंपिरेदेवाःशक्राद्याःपितरस्तथा ॥ सूर्यादयोग्रहाःसर्वेभुजंगाश्चभयावृताः ॥ ५८ ॥ द्विधाभिन्ना
धरादेवीउल्कानांपतनंततः ॥ ववौसशर्करोवायूरुधिरंववृषुर्घनाः ॥ ५९ ॥ प्रसमीक्ष्यार्जुनोबाणंप्रलयानलरूपिणं ॥
स्वबाणैरपिभीमैस्तंनशशाकव्यपोहितुं ॥ ६० ॥ चिंतयामासगोविंदंयावत्पार्थोमहाबलः ॥ तावद्बाणेनतीव्रेणशिरो
ज्वलितकुंडलं ॥ ६१ ॥ छिन्नंपार्थस्यतरसानिपपातधरातले ॥ पश्चात्कबंधःपतितोवृषकेतोरणांतिके ॥ ६२ ॥ पार्थ
स्यकुंतीपुत्रस्यदेहोराजन्रणाजिरे ॥ अनेकरत्नसंयुक्तएकादश्यांनिशामुखे ॥ ६३ ॥ कार्तिकेमासिसौम्येचऋक्षेचैवो
त्तराभिधे ॥ मुखंपार्थस्यतच्छिन्नंवासुदेवेतिजल्पकं ॥ ६४ ॥ क्षणमासीदभिनवंछिन्नालंकारवर्जितं ॥ द्यौसूर्यौपति
तौभूमौमेनिरेशिरसीतयोः ॥ ६५ ॥ जनाःसकरुणास्तत्रवृषकेतुधनंजयौ ॥ चित्रांगदातदाप्राप्तामणिपूरंपुरोत्तमं ॥
॥६६॥ श्रुत्वायुद्धंचशापंचत्वर्जुनस्यैवनारदात् ॥ रथारूढाचाल्पजनाविनाधर्माज्ञयान्नृप ॥ ६७ ॥ हाहाकारोमहानासीत्त
स्मिन्कालेसुदारुणः ॥ बभ्रुवाहस्यचबलेहर्षश्चसुमहानभूत् ॥ ६८ ॥ वादित्राणिचसंजघ्नुःपुष्पवर्षंचकन्यकाः ॥ चक्रुर्मुदा
युताःसर्वाःस्वनाथविजयेतदा ॥ ६९ ॥ स्तुवंतोबंदिनःप्राप्ताबभ्रुवाहनपौरुषं ॥ राजापिसबलःप्रीतोरणेविस्मृतसौहृदः
॥ ७० ॥ प्रविवेशपुरंरम्यंपताकाभिःसुशोभितं ॥ पुष्पप्रकरसंयुक्तंसिक्तंचंदनवारिणा ॥ ७१ ॥ नृत्यंतीभिःस्मनारीभिःपरि
तःपरिवारितं ॥ सपुत्रादीपसंयुक्तादूर्वादलधराःस्त्रियः ॥ ७२ ॥ गोरोचनंकुंकुमंचदधिदिव्यांबरान्विताः ॥ नीराजयंत्योरा
जानमुलूप्यासहमारिष ॥ ७३ ॥ कथयंतिवचांसीहतदाचित्रांगदांप्रति ॥ धन्यासिदेविवीरंत्वंप्रसूतासिमहाबलं ॥ ७४ ॥
येनार्यनिहतःपार्थोविजयीयःसदाक्षितौ ॥ तासांवचनमाकर्ण्यवरालंकारमंडिता ॥ ७५ ॥ नीराजनार्थंपुत्रस्यआया
तासापपातह ॥ महानंदेविषादोऽभूद्बभ्रुवाहनमंदिरे ॥ ७६ ॥ सर्वाश्चनार्यःसहसापरिवार्यस्थितागृहे ॥ रुदंत्यःसिषि
चुस्तोयैःशीतलैश्चंदनान्वितैः ॥ ७७ ॥ वीजयंत्यस्ताडयंत्योहृदयंनिजमुष्टिभिः ॥ स्वामिनींपतितांवीक्ष्यराजानंचाप
रागता ॥ ७८ ॥ कथयामासपतितांपार्थपुत्रायमारिष ॥ नजानीमोनरश्रेष्ठजननीपतिताऽद्यते ॥ ७९ ॥ तामुत्थापय
भद्रंतेउलूपीमपिमाचिरं ॥ बभ्रुवाहःसमुत्तीर्यरथात्तस्माद्ददर्शतां ॥ ८० ॥ कंठसूत्रेणरहितांताटंकद्वयवर्जितां ॥ श्वसं

तींपन्नगसुतांद्वितीयांजननींचतां ॥ ८१ ॥ समुत्थाप्यतदातेननेत्राणिम्रजितानिच ॥ ततस्तेजीवितयुतेवीक्ष्यहृष्टोऽ
ब्रवीदिदं ॥ ८२ ॥ आनंदकालेपतितेजनन्यौमेकथंक्षितौ ॥ शृणुतांमातरौयुद्धंहयहेतोर्मयाकृतं ॥ ८३ ॥ पार्थोत्वर्जु
ननामात्रकश्चित्प्राप्तोऽश्वरक्षणे ॥ महावीरैर्वृतोधीरैःप्रद्युम्नप्रमुखैर्हितैः ॥ ८४ ॥ तेसर्वेनिर्जितामातःपार्थःसनिहतोयु
धि ॥ वीराणामपिसर्वेषांगुरुर्बालोप्यसौहतः ॥ ८५ ॥ वृषकेतुरितिख्यातःकर्णपुत्रोमहाबलः ॥ तेनाहंमोहितोभूरिवी
रेणैवरणांगणे ॥ ८६ ॥ महताचैवकृच्छ्रेणसंग्रामेनिहतःशुचिः ॥ गृहाणकंठसूत्रंत्वंताटंकेकर्णभूषणे ॥ ८७ ॥ अमं
गलंतेरूपंहिदृश्यतेमंडनंविना ॥ चित्रांगदोवाच किंकृतंपापरूपेणत्वयापुत्रेणसांप्रतं ॥ ८८ ॥ पितरंस्वंपातयि
त्वापार्थंधर्मानुजंनरं ॥ नारायणसखायंतंकुंत्यैनागेंद्रदायकं ॥ ८९ ॥ मंडनंमेत्वयाभग्नंकंठसूत्रंतथाहृतं ॥ तालपत्रं
तथानष्टंवदन्मूढनलज्जसे ॥ ९० ॥ धिकूतेप्रतिबलंतेजोयत्पार्थःपातितोरणे ॥ अद्यधर्मात्मजोराजाकामवस्थांगमि
ष्यति ॥ ९१ ॥ यज्ञेनष्टेदीक्षितश्चब्राह्मणैःपरिवारितः ॥ कुंतीपार्थविहीनाद्यत्वयापौत्रेणसाकृता ॥ ९२ ॥ कथंकृपायुतं
चित्तंनकृतंजनकंप्रति ॥ यस्माज्जातोऽसिपापत्वंपार्थाद्विनयकोविदात् ॥ ९३ ॥ सचात्रनिहतःशूरोममभर्त्तात्वथात्वया ॥
असंमंत्र्यमयासार्धंकथंयुद्धंकृतंरणे ॥ ९४ ॥ शस्त्राणांसंग्रहोनूनंतावकोदेहदारकः ॥ कथंनभिद्यतेवक्षस्तावकंपितृघात
क ॥ ९५ ॥ कर्णभूषांत्वमामुंचकिंमांवदसिदुर्मते ॥ कंठेमेखादिरांगारतप्तांघोरांचशृंखलां ॥ ९६ ॥ क्षिप्रंपातयकर्णे
मेलोहशंकुंचपुत्रक ॥ क्वपातितःसमेभर्तास्थानंदर्शयमाचिरं ॥ ९७ ॥ यथानेनसमंयामीत्युक्त्वापुत्रंचनिर्गता ॥ भूष
णानिपरित्यज्ययर्यौयत्रास्तिपांडवः ॥ ९८ ॥ उलूपीवारयामासक्षणेतस्मिन्विशांपते ॥ चित्रांगदांप्रत्युवाचउलूपीभ
रतर्षभ ॥ ९९ ॥ पार्थस्यमरणेदेविसंशयोवर्ततेमम ॥ यक्षराजसुतेपश्यप्रविशामिस्वकंवनं ॥ १०० ॥ यत्रपार्थेनक
थितंममाग्रेमरणंपुरा ॥ दाडिमीपंचकंदेवियदादग्धंभविष्यति ॥ १ ॥ स्वयमेवतदाज्ञेयंभवत्यामरणंमम ॥ आयाहि
यत्रपश्यामिसंकेतंतादृशंवने ॥ २ ॥ गृहीत्वातांतदादेवीनागेंद्रतनयावने ॥ ददर्शपंचकंदग्धंहाडिमीनांविनाग्निना ॥
॥ ३ ॥ ततोनागेंद्रदुहिताहाहानाथेतिभाषिणी ॥ चित्रांगदान्विताप्राप्तापार्थस्यशिरसोंऽतिके ॥ ४ ॥ तावद्देवससैन्या

सासपुत्रादीपभासिता ॥ मुक्तकेशाददर्शाथपतितंश्वेतवाहनं ॥ ५ ॥ छिन्नंचतच्छिरोदृष्ट्वासमीपेवैष्णवस्यहि ॥ पार्थ
स्यपादयोर्देहंकृत्वावचनमब्रवीत् ॥ ६ ॥ ममदेहोगतोनाथपादस्पर्शोस्तुतेऽनघ ॥ सार्धंत्वयापदंप्राप्स्येस्पृशंतीदेहसंयु
ता ॥ ७ ॥ इहत्वंयदिरुष्टोऽसिममपुत्रापमानतः ॥ तवदास्यंकरिष्यामिक्षमस्वाद्यधनंजय ॥ ८ ॥ उत्तिष्ठनाथगावोऽद्य
विराटस्यमहीपतेः ॥ नीयंतेकौरवैर्भूयोनिवर्तयितुमर्हसि ॥ ९ ॥ द्रोणंद्रुपदराजेनपुरावीरापमानितं ॥ बद्ध्वातंपार्थतां
तस्मैकिन्नदर्शयसेऽर्जुन ॥ १० ॥ द्रौपदीवरणेवीराःसंतिनाथसमागताः ॥ मत्स्ययंत्रंपरंभित्वातांत्वंपार्थसमानय ॥
॥ ११ ॥ नाहंसापत्नजंभावंकरिष्येपुरतस्तव ॥ एषप्राप्तोहुताशस्त्वांप्रार्थितुंखांडवंवनं ॥ १२ ॥ आच्छादितंकुरुवि
भोबाणैःपंजरकंपुनः ॥ किरातवेषप्रच्छन्नःसूकरंवनगंहरः ॥ १३ ॥ नयत्येषमहाकोलंत्वदीयंशरणागतं ॥ एवंब्रुवति
साबालातथाचित्रांगदाचसा ॥ १४ ॥ गृहीत्वापार्थशीर्षंतत्तथाऽन्यंकुंडलान्वितं ॥ वृषकेतोरुभेदेव्यौरुरुदातेघनस्व
नं ॥ १५ ॥ कर्णपुत्रमहाबाहोपितातेपांडवेनहि ॥ संग्रामेनिहतःपुत्रपितृवैरंनचस्थितं ॥ १६ ॥ हाहताऽस्मिविनष्टा
स्मिकर्णपुत्रेनिपातिते ॥ बभ्रुवाहनभद्रंतेकुरुमेत्वंमनोगतं ॥ १७ ॥ खड्गेनमामकंछिंधिशिरोरामाधिकोभव ॥ रामे
णनिहतामातारेणुकाकेवलापुरा ॥ १८ ॥ त्वंनिजंजनकंहत्वाजननीयुगुलंबलात् ॥ पातयस्वनतेरामःसमतांतुगमिष्य
ति ॥ १९ ॥ काष्ठान्याहरपुत्रात्रकुरुदीप्तंचपावकं ॥ उलूपीसहितांमांत्वंदग्धुमर्हसिसुव्रत ॥ २० ॥ एकंकष्टतरंकार्यंकृ
तंदुःखविवर्धनं ॥ अर्थिनांसुरवृक्षाख्यंवृषकेतुंघ्नतात्वया ॥ २१ ॥ आशामयाकृतापुत्रप्राप्स्येऽहंहस्तिनापुरं ॥ तत्रय
ज्ञक्रियारंभेपार्थेनसहितान्नृपं ॥ २२ ॥ कृष्णंचरुक्मिणींसत्यांद्रौपदींसात्वतीमपि ॥ उत्तरांचविशालाक्षीमूषांबाणसु
तामपि ॥ २३ ॥ तन्मातरंस्त्रीयुताहंप्रदास्येबहुलंधनं ॥ विलोक्यनिखिलंलोकंहताशाहंत्वयाकृता ॥ २४ ॥ बभ्रुवा
हनउवाच ज्ञातोमयापितामातर्गतोऽहंतस्यसन्निधौ ॥ तुरंगंतंपुरस्कृत्यनमस्कर्तुंधनंजयं ॥ २५ ॥ मामुवाचपरंदुष्टं
गदितुंतन्नशक्यते ॥ अतःपरंनसंदेहोभूमौकीर्तिविवर्जितं ॥ २६ ॥ पितृहंतारमालोक्यजनोमांत्यजतुस्फुटं ॥ नतीर्थंपा
वनंकर्तुंपितृघ्नंमांधरातले ॥ २७ ॥ नदानंनव्रतंयज्ञोनापिज्ञानंभविष्यति ॥ सचक्रपाणिर्मित्रस्यपातनात्पावनस्त

था॥ २८॥ रोषेणमहतायुक्तोनिरयेपातयिष्यति॥ सर्वाणियांतिकृष्णस्यस्मरणात्पातकानिच ॥ २९॥ नवैष्णवस्य
पार्थस्यमयाविनिहतस्यच ॥ कुत्सितंमामकंज्ञात्वास्वमित्रस्यातिदुःखितः॥ ३०॥ प्रत्यक्षमपिकृष्णोऽत्रप्राप्तःकि
ल्बिषनाशकृत्॥ धनंजयवधस्यांहोनाशयिष्यतिकेशवः॥ ३१॥ तस्माद्वह्निप्रवेशेमेमतिर्जाताद्यशोभना॥ एकंहिवि
स्मृतामाताउलूपीपन्नगीपुरा॥३२॥ जातमात्रंहिमांदुष्टंपितृघ्नंज्ञानसंयुता ॥ ज्ञात्वाप्रसूतिसमयेनहतोबालसर्पवत्
॥३३॥ ततोऽहंनाभवंदुष्टोजननीशोकदायकः॥वैधव्यदानदीक्षायामरिस्त्रीणामहंगुरुः॥३४॥यःपुरासांप्रतंजातोमा
तृवैधव्यदायकः॥वह्नितस्माद्विशाम्यद्यनान्यथाशुद्धिरस्तिमे॥३५॥ जैमिनिरुवाच ततःप्रेष्यानुवाचासौकाष्ठा
नांसंचयोमहान्॥ क्रियतांक्रियतांतूर्णंप्रवेक्ष्येजातवेदसं॥३६॥ चित्रांगदोवाच क्षणंप्रतीक्षवैपुत्रपितृघातकदुर्म
ते॥उपायःकरणीयोऽत्रयदिजीवेद्धनंजयः॥३७॥ उलूप्युवाच उपायोऽस्तिमयादृष्टःपार्थसंजीवनायवै॥पातालेविद्य
तेपुत्रमृतसंजीवकोमणिः॥३८॥शेषराजस्यकोशस्थोरक्ष्यतेचमहाविषैः॥ मृतान्मृतान्पन्नगान्हिपुनःसंजीवयंतिते॥
॥३९॥दृष्ट्वाचदाहयंत्येतेपर्वतान्सतृणान्द्रुमान्॥कर्कोटकश्चकुलिकोवासुकिस्तक्षकस्तथा॥४०॥शंखकोदीर्घजिह्वश्च
मूषकादश्चभासुरः॥फणानांशतसंयुक्ताद्विशतास्त्रिशताःपरे॥४१॥चतुःशताःपंचशताःषट्शताःसुविषोल्बणाः॥के
चित्सप्तशताःसर्पाःफणैर्मणिविदीपितैः॥४२॥फणैर्नवशताअष्टशतात्व्यासन्फणैःस्थिताः॥शेषंचवेत्सिबलिनंधरापर्व
तधारिणं॥४३॥शयनंवासुदेवस्यसश्रीकस्ययथासुखं॥निर्भयंजायतेयस्मात्तस्मात्कश्चानयेन्मणिं॥४४॥दृष्टोप्युपा
योविफलःपितुस्तेजीवनेऽर्घकिं॥वैधव्यंबाधतेपुत्रसहयास्यामिमाचिरं॥४५॥यावन्नकुंतीचायातिमांनपश्यतिपन्न
गीं॥पतिघ्नींतावदेवाहंहंतव्यापुत्रकत्वया॥४६॥ तथाचित्रांगदाचेयंसखीमेजननीचते॥ संजीवकंमणिंशंभुःपन्नगे
भ्योददौपुरा॥४७॥भीतेभ्योवैनतेयाच्चतंमणिंजीवरूपिणं॥ नतेदास्यंतिपार्थायतस्माच्छोचामिपुत्रक॥४८॥ बभ्रु
वाहनउवाच केसर्पाःप्राकृतामातःक्रुद्धेमय्यर्जुनांतके॥ नदास्यंतिमणिंधैर्यात्स्वबलाद्विषगर्जनात्॥ ४९॥ भिन
द्मिसप्तपातालानाहरिष्यामिचामृतं॥ मणिंचविफणान्कृत्वापन्नगांस्तान्महाविषान्॥ ५०॥ तोषितःशंकरोयेनवास

वाद्यास्तथासुराः ॥ तोषिताअमुनापित्रासमयायुधिघातितः ॥ ५१ ॥ मातामहवधोपायेकीदृशंमेभविष्यति ॥ प्रथमं
पातयिष्यामिसर्वान्सर्पान्समागतान् ॥ ५२ ॥ ततःपार्थेनसहितान्मणिनाजीवयेपरान् ॥ वृषकेतुमुखान्वीरान्क्षणंमा
तःप्रतीक्षतां ॥ ५३ ॥ तेसर्पाजीवितयुतागमिष्यंतियथासुखं ॥ मयासंजीविताःसर्वेगृहीत्वाजीवदंमणिं ॥ ५४ ॥ पा
लयाद्यार्जुनंनाथंममवीरैःसमन्विता ॥ अद्यपश्यंतुमेवीर्यंत्रयोलोकाःसदेवताः ॥ ५५ ॥ उलूप्युवाच किमिदं
भाषसेमूढपौरुषंमणिसंग्रहे ॥ महाविषान्पन्नगेंद्रान्कथंतानवमन्यसे ॥ ५६ ॥ शेषराट्सुमहाकायोमहामायोमनोज
वः ॥ दुर्बलोबलिनासार्धंवैरंकुर्वन्नलज्जसे ॥ ५७ ॥ बभ्रुवाहनउवाच उक्तंवचोनानृतंमेभविष्यतिकथंचन ॥
हरोऽपियदितान्सर्पान्पालयिष्यतिरोषितः ॥ ५८ ॥ कुबेरवासवयमैःसहितःसन्नमेभयं ॥ चित्रार्पितानिवबलैःकरि
ष्याम्यसुरानहीन् ॥ ५९ ॥ अर्जुनस्यसुतोयोऽहंपौत्रःपांडोश्चनिर्भयः ॥ उलूप्युवाच मापुत्रसाहसंकार्षीरुपायं
प्रदिशामिते ॥ ६० ॥ सखामेपुंडरीकोऽत्रमंत्रीमंत्रविदांवरः ॥ पातालेप्रेरयिष्येतंप्रथमंपितरंप्रति ॥ ६१ ॥ यथातेषां
मनोवीररूपायुक्तंकरिष्यति ॥ बध्याभवेद्वैयत्कार्यंतद्बलेननजायते ॥ ६२ ॥ बुद्ध्याशमेनचेत्कार्यंप्राणिनामिहजायते ॥
पौरुषंक्लेशसंयुक्तंकःकुर्याद्बुद्धिसंयुतः ॥ ६३ ॥ जैमिनिरुवाच एवंपुत्रंवारयित्वासमाहूयाशुपन्नगं ॥ पुंडरीकं
पांडवस्यजीवनार्थंसमादिशत् ॥ ६४ ॥ गच्छपन्नगनागेंद्रंगृहीत्वाकंठभूषणं ॥ मदीयेकर्णपत्रेचशेषंगच्छममाज्ञ
या ॥ ६५ ॥ पार्थस्यकर्णपुत्रस्यवृत्तांतंपुत्रकारितं ॥ समयेवर्तमानायकथनीयंमहात्मने ॥ ६६ ॥ महद्भिरनुयुक्तायदु
ष्टसंगच्युतायच ॥ यथामणिंतवकरेप्रयच्छतितथाकुरु ॥ ६७ ॥ शिवास्तेसंतुपंथानोमत्प्रियार्थंहिगच्छतः ॥ जैमि
निरुवाच ततःसमंत्रसहितंवचनंप्राहपन्नगः ॥ ६८ ॥ उलूपींशोकसंयुक्तांसांत्वयन्निवभारत ॥ देवियामित्वयाज्ञ
प्तःसर्पराजनिवेशनं ॥ ६९ ॥ दिव्यंमणिंसमाहर्तुंसपुत्रापालयार्जुनं ॥ अर्जुनस्यशरीरंहिचिरकालंनतिष्ठति ॥ ७० ॥
मृतानामिहजंतूनांगात्रंनश्यतिभूतले ॥ नशीघ्रंजायतेकार्यंनृणांराजसभासुच ॥ ७१ ॥ बहुकार्याहिराजानोनस्म
रंतिहिसौहृदं ॥ दशामिपांडवस्यांगंमद्विषान्नविनंक्ष्यति ॥ ७२ ॥ भवत्यारक्षितव्यंहिरत्याऽनंगस्यरक्षितं ॥ बभ्रु

वाहनउवाच वृषकेतोःशरीरंत्वंप्रथमंदशपन्नग॥ ७३ ॥ योधितोयोमयासार्द्धंसंग्रामेचनिपातितः ॥ यथापार्थ
सखाचायंप्राप्स्यतेजीवितंस्वकं॥ ७४ ॥ नजीवितंधारयतिमत्पिताअमुनाविना ॥ वृषकेतुयुतंपार्थंकृत्वात्वंसक्षतंत्र
ज॥७५॥ शरीरंपांडवस्याद्यपालयामिनसंशयः॥ जैमिनिरुवाच पुंडरीकस्तदातस्यवाक्यात्पार्थंतदाऽदशत्॥
७६॥ वृषकेतोश्चतरसानागराजपुरंययौ॥ ददर्शचातलंघोरंमहासर्पविभूषितं ॥ ७७॥ सर्वंतत्कांचनमयंरम्यंविपुल
काननं॥ अयुतंयोजनानांहिगणितंशास्त्रकोविदैः॥ ७८ ॥ दिव्याभिर्नागकन्याभिर्वृतंतदतिशोभनं॥ वितलंचप्रवि
ष्टोऽसौदिव्यंचंपकशोभितं ॥ ७९ ॥ सुतलंचशमीवृक्षैःकांचनैःफलितैःशुभैः ॥ महातलंचाम्रवृक्षैर्नानापत्रैर्वि
चित्रितैः॥ ८० ॥ वृतंमरकतैरन्यैर्दिव्यैश्चंदनकाननैः॥ रसातलंतथाभूतंवीक्ष्यविस्मयमागमत्॥ ८१ ॥ दोलारूढाभि
रधिकंपन्नगीभिर्विराजितं॥ पातालेपरमंलिंगंसंवीक्ष्यहाटकेश्वरं ॥ ८२ ॥ स्थितंभोगावतीतीरेदिव्यचंपकपूजितं ॥
सर्पैर्मनोरमैस्तत्रनागस्त्रीभिर्निरंतरं ॥ ८३ ॥ स्तूयमानंचरम्याभिर्मंडिताभिःकुचैर्घनैः ॥ संतुष्टोभून्नमस्कृत्यस्नात्वा
भोगवतीजले॥ ८४॥ विमलैःपद्मगंधैश्चमहापातकनाशनैः॥ दिव्यैर्वृक्षैर्लताभिश्चशोभितंचामृतेनच ॥ ८५ ॥ नव
कुंडैःसुधापूर्णैर्महानागैःसुरक्षितं॥ मंदिरंशेषराजस्यप्रविवेशमहत्तरं ॥ ८६ ॥ नानाभावैर्विचित्रंहिसर्वतश्चसुशोभ
नं॥ नानारत्नमयंदिव्यंनानासद्मविराजितं॥ ८७॥ मंडितंशेषराजेनसहस्रफणशोभिना ॥ उपविष्टंददर्शैनंप्रभयापर
यायुतं॥ ८८॥ वृतंकर्कोटकाद्यैस्तैःशेषंतक्षकपन्नगैः॥ जपंतंवासुदेवेतिवाङ्मनःकायकर्मभिः ॥ ८९ ॥ पुंडरीकःप्र
णम्यैनंकंठसूत्रंप्रदर्शयत्॥ ताटंकपत्रेदुहितुर्नागराजस्यसंसदि॥ ९० ॥ पुरतःस्थितएवास्यप्रत्युवाचधराधरं ॥ पुं
डरीकउवाच नाथाहंशरणंप्राप्तोभवंतंपन्नगेश्वरं॥ ९१ ॥ उलूप्याप्रेषितःपार्श्वंत्वदीयमिहकाम्यया ॥ दौहित्रेणकृ
तंकर्मस्वपिताचार्जुनोहतः ॥ ९२ ॥ संजीवनार्थंपार्थस्यदीयतांमणिसत्तमः ॥ शेषउवाच तस्याःपतिर्महा
बाहुःकन्यायाममपांडवः॥ ९३॥ सव्यसाचीकृष्णसूतःसंग्रामेहरतोपकः॥ हरदत्तवरश्चायमजेयःससुरासुरैः॥ ९४ ॥
तच्चवाक्यंशंकरस्यशक्यतेनव्यपोहितुं॥ जानामिपौरुषंतस्यवैष्णवस्यधनुष्मतः॥ ९५ ॥ केनासौपातितःपार्थोमुक्तः

किंतेनकेशवः॥ केशवेनविनातंचकः समर्थःसुरक्षितुं॥ ९६॥ किमर्थंदुहितोलूपीमत्समीपंहितार्थिनी ॥ त्वांवैसंप्रेषि
तवतीसर्वंतत्कारणंवद॥ ९७॥ परमोविस्मयोमेऽद्यश्रुत्वापार्थस्यपातनं॥ पुंडरीकउवाच भीष्मंद्रोणप्रभृतयः
संग्रामेधर्मसूनुना॥ ९८॥ गोत्रजानिहताःसर्वेतेषांदुःखेनदुःखितः ॥ युधिष्ठिरःक्रतुवरंकर्तुकामोमहीतले ॥ ९९ ॥
यंहयंमोचयामासतंनिजग्राहपांडविः॥अर्जुनेनावितंतंचबभ्रुवाहोमहाबलः॥ २००॥जातंमणिपुरेयुद्धंबभ्रुवाहनपा
र्थयोः॥ पुत्रेणसहतोयुद्धेगंगाशापेनमोहितः॥१॥ विद्यतेपांडवोभूमौदुहितुस्तेपतिःप्रियः॥संजीवनायपार्थस्यसन्नि
धौतेमहामते॥ २॥ उलूपीमांनिजंदूतंव्यादिशत्परमाशया॥ तथाकुरुष्वमांनागयथातेवैयशोभवेत्॥ ३॥ धर्मानुजं
कृष्णरतंकारयंतंमहाक्रतुं॥ जामातरंनिजंयुद्धेप्रहतंजीवयप्रभो॥ ४॥ महतांवैभवंलोकेपरोपकृतयेसदा॥ जायतेत्व
सतांवित्तंपरनाशायकेवलं॥ ५॥ किंपुनःकृष्णशरणोवैष्णवस्तेसुतापतिः ॥ महद्भिःपतिताःपाल्याःस्ववृत्तेनधनेनच
॥ ६॥ जैमिनिरुवाच एवंशेषस्तदातेनपुंडरीकेणयाचितः॥ प्रत्युवाचमहासर्पान्पश्यंतुविधिकारितं॥ ७॥ पांड
वार्थंप्रदास्यामिमणिंजीवितदायकं॥ किंवित्तेनशरीरेणकिंराज्येनेहपन्नगाः॥ ८॥ नजीवतिपुनःपार्थोविधृतेनमया
खिलाः॥ मृतंपार्थंहिसुधयामणिनावाऽद्यजीवये॥ ९॥ वैष्णवार्थमदत्तौद्वावारनालकपर्दकौ ॥ मयालोभेनविधृतौ
भविष्येतेसुधामणी॥ १०॥ शास्तापनयकर्तृणांविद्यतेकिलकेशवः ॥ येनायंदंडितःपार्थोहयमेधप्रकारकः ॥११॥
तस्माद्यंपुंडरीकोमणिंयातुममाज्ञया॥ गृहीत्वावैष्णवंपार्थंपुनःसंजीवयत्वयं॥ १२॥ एवंविधंशेषवचस्तेनिशम्यप
रस्परं॥ दुःखिताःपन्नगाश्चासन्नशुभंमेनिरेहृदि॥ १३॥ तेषांमध्येमहाबुद्धिर्धृतराष्ट्रोऽपिपन्नगः॥ प्रत्युवाचधराधारं
विस्तरंतुकथानकं॥ १४॥ धृतराष्ट्रउवाच वदान्यानामदेयंहिकिंचिन्नास्तिधरातले ॥ तथाऽपिनाथवक्ष्येहमा
त्मनःसदृशंवचः ॥ १५॥ मर्त्यलोकेकथंराजन्मणिंजीवितदायकं ॥ मानुषस्यमृतस्यार्थेत्वमेनंमोक्तुमर्हसि ॥ १६ ॥
गुरुघ्नस्यकृतघ्नस्यनौषधिर्नमणिर्नृप॥ नमंत्रादेवताश्चैवजायंतेचार्थसाधकाः॥ १७॥असत्यामानवामृत्युंप्राप्यजी
वंतिनैवते॥ मूलंस्वकंनवृक्षाश्चदर्शयंतिफलप्रदाः॥ १८॥ भवान्पन्नगसर्वस्वंमणिंयच्छतिजीवदं ॥ सततंवैनतेयेन

विग्रहोनाथविद्यते ॥ १९ ॥ मतंगमुनिशापेनपातालंनविशत्यसौ ॥ भूतलस्थंमणिंप्राप्यगरुडःकिंनेष्यति ॥ २० ॥ कृतग्रामानुषाःसर्वेमणिगर्वेणगर्विताः ॥ सुधामपिनयिष्यंतित्यक्त्वानोविषजंभयं ॥ २१ ॥ सुधामणिविहीनानांपन्नगानांफणास्थितान् ॥ ग्रहीष्यंतिमणींस्तत्रस्त्रियोऽपिमृगलोचनाः ॥ २२ ॥ ततोराजिलतांप्राप्यसर्पाणांजीवितंतथा ॥ स्थानंचसुंदरंवीक्ष्यकथंहास्यतिपांडवः ॥ २३ ॥ निर्विषान्गतसंस्थानान्गतश्रीकान्गृहेगृहे ॥ पन्नगान्भ्रामयिष्यंतिभिक्षुकाःस्वोदरंभराः ॥ २४ ॥ हितंयज्ज्ञायतेकार्यंनृपाणांमंत्रिभिश्चतत् ॥ प्रवक्तव्यंयथाबुद्ध्यानृपाःकुर्वंतुवानवा ॥ २५ ॥ जैमिनिरुवाच शेषस्तद्वचनंश्रुत्वाप्राहैनंधृतराष्ट्रकं ॥ महातापयुतंवाग्मीप्रहसन्धरणीधरः ॥ २६ ॥ शेषउवाच तववाक्येनविधृतःकथंसंजीवकोमणिः ॥ नदीयतेमयातस्मैपांडवायमहात्मने ॥ २७ ॥ मूर्खेणसहवासोऽपिदेशेग्रामेपुरेगृहे ॥ अनर्थएवसंभाव्योव्यवहारंविनैवहि ॥ २८ ॥ वरंजलधिपातालज्वलनावटपातनं ॥ नविवेकविहीनेनमूर्खेणसहसंगतं ॥ २९ ॥ कीर्तिःपराभवित्रीमेदत्तेसंजीवकेमणौ ॥ नास्माभिश्चेन्मणिर्दत्तःपार्थःकिंनसजीवति ॥ ३० ॥ तत्रकृष्णेनमणिनाजीवितंप्राप्स्यतेऽर्जुनः ॥ नूनंकृष्णमणेर्मूढप्राप्स्यतेसचराचरं ॥ ३१ ॥ प्राप्नोतिजीवसंभारयुक्ताःस्मचिरजीविनः ॥ वत्सान्हत्वापुराकृष्णात्सगोपान्सत्यलोकधृक् ॥ ३२ ॥ अनयत्स्वपदंसर्पजिह्वासुर्मधुसूदनं ॥ सत्यलोकगतागोपानापश्यन्गोपबालकं ॥ ३३ ॥ निनिंदुस्तेविधातारंजगदुर्बालमध्रुवं ॥ धिक्सत्यलोकोविफलोयत्रकृष्णोनविद्यते ॥ ३४ ॥ यशोदानंदनेनाद्यकिमर्थंवंचितावयं ॥ कमलाद्ब्रह्मणोजन्मश्रुतंतदनृतंध्रुवं ॥ ३५ ॥ पंकजंहरिनाभौतज्जातंपातकभस्मजं ॥ नोचेत्कृष्णप्रियानस्मान्कुर्यात्कर्मजडान्कथं ॥ ३६ ॥ तेषांवचनमाकर्ण्यसत्यंमेनेतथाविधिः ॥ नवीनारचितागोपाःसवत्सायेनविष्णुना ॥ ३७ ॥ सपुत्रास्ताःस्त्रियोगावस्तोषिताबालकेनच ॥ किंपृथांमृतपुत्रांतांविशोकांनकरिष्यति ॥ ३८ ॥ तृणंवज्रायतेकृष्णाद्वज्रंवाजायतेतृणं ॥ तस्माद्दास्येमणिंसर्पानमेऽत्रास्तिविचारणा ॥ ३९ ॥ परोपकृतयेजन्मसाधूनामिहजायते ॥ दधीचिनादर्शितंतद्देवकार्यंप्रकुर्वता ॥ ४० ॥ धृतराष्ट्रउवाच तंचकृष्णमणिंप्राप्ययदिजीवेतपांडवः ॥ वृथामणिंप्रेरयसेयेनजीवामहेवयं ॥ ४१ ॥ रोचतेपन्नगानांतेविनाशोगरुडा

घदि॥ प्रदेहित्वंमणिनाथनब्रूमोऽत्रपुनर्वचः॥ ४२ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेबभ्रुवाहनविजयोनामाष्टत्रिंशोऽध्यायः॥ ३८॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥
जैमिनिरुवाच एवंविधंवचःश्रुत्वापुंडरीकंफणाभृतं॥ शेषस्तंप्रत्युवाचाथनकुलंनःप्रयच्छति॥ १॥ संजीवकमणिनागगच्छत्वंबभ्रुवाहनं॥ मयाप्रोक्तमिदंब्रूहिमन्यंतेहिनमेवचः॥ २॥ दुष्टानांप्राणिनांजन्मनोपकारायजायते॥ किमर्थंकेशवंत्यक्त्वायाचितुंमांत्वमागतः॥३॥ प्रार्थयिष्यंतिमनुजामत्वापातालवासिनः॥ वयंस्थिताभयान्नूनंसदाकरपदच्युताः॥ ४॥ ततोजगामभग्नाशःपुंडरीकोरणांगणे॥ यत्रपार्थःप्रावृतस्तैर्बभ्रुवाहनसैनिकैः॥ ५॥ कर्पूरदीपैःशतशोभासितेवीणकान्विते॥ दीपाश्चंदनतैलेनकेचित्सिक्ताःप्रभान्विताः ॥ ६॥ यत्रास्तेरुदतीसातुपार्थपार्थेतिभाषिणी॥ उलूपीत्यपराराजन्यत्रचित्रांगदाचसा ॥ ७॥ आशयापुंडरीकस्यचिंतयंतीसमागमं॥ ददर्शाथततोनागंविफलंतंसमागतं॥ ८॥ पुंडरीकउवाच नप्रयच्छंतिमानांधामणिंसर्पाःसुरोषिताः॥ पावकेपुत्रदत्तेतत्प्रविशत्वंयथासुखं॥ ९॥ जैमिनिरुवाच तस्यतद्वचनंश्रुत्वाकार्ष्णिःकोपसमन्वितः॥ आदिदेशबलंसर्वंस्वयमेवययौनृप॥ १०॥ रक्षांविधायपार्थस्यगृहीत्वास्वशरान्बहून्॥ कोपादश्रूणिमुंचन्हिश्रोत्राभ्यांपावकार्चिषः॥ ११॥ कृशेषोवासुकिःक्वास्तेक्वचतेतक्षकादयः॥ कर्कोटशंखकुलिकाधृतराष्ट्रःक्वपन्नगः॥ १२॥ मणिंतेभ्योहराम्यद्यसुधामपिधनानिच॥ पार्थःपितामेपतितोधर्मराजस्यचानुजः॥ १३॥ कृष्णस्यसेवकोभूमौकथंस्थास्यतिमत्पुरः॥ अद्यसर्पानसत्तुल्यान्पश्यंतुममसैनिकाः॥ १४॥ निर्दग्धवपुषःसर्वेपांडवार्थेरसातले॥ अद्यभोगवतीतोयंभिन्नंमत्सायकैःक्षितिं॥ ॥१५॥ प्रयातुपांडवस्यांगंक्षालयत्परितिष्ठतु॥ अद्यसर्पमणीन्सर्वान्स्त्रियोगृह्णंतुलीलया॥ १६॥ अद्यजीवंतुतेसर्वेमयायेसंगरेहताः॥ अद्यशेषनिमित्तंचेच्छंकरःपुरतोभवेत् ॥ १७॥ शिरसास्वेनतंदेवंवारयिष्येनसंशयः॥ शरैश्चराचरंव्याप्तंपश्यंतुस्थापितंजनाः॥ १८॥ जैमिनिरुवाच वरदत्तप्रभावेणपातालंनिर्ययौबली॥ महासैन्यपरीतोसौपांडवविनिर्भयोपिसन् ॥ १९॥ पातालमुखमासाद्यरचयामासतद्वलं ॥ विज्ञातःसर्पराजेनक्रुद्धःपार्थसुतोब

ली॥ २० ॥ शेषःप्रोवाचतान्सर्वान्स्वभृत्यान्नयवर्जितान् ॥ धृतराष्ट्रेणमंदेनरोषितोबभ्रुवाहनः ॥ २१ ॥ यथायुद्धेह
ताःसर्वेसुताविगतबुद्धिना॥ नरेणधृतराष्ट्रेणपन्नगेनतथावयं॥ २२ ॥ कःकृष्णभृत्यंसंग्रामेविजेष्यतिसतिष्ठतु॥ अ
द्यकालानलज्वालामालाजालैरसातलं॥२३॥भस्मसात्पन्नगान्सर्वान्करिष्यतिमतिर्मम॥धृतराष्ट्रेणवीरोऽसौयोधनी
योमहाबलः॥ २४॥ येनयद्वापितंबीजंतत्फलंतेनभुज्यते॥कर्कोटकस्तक्षकस्तुतथाऽन्येयांतुयोधितुं॥ २५॥ततोनृपाज्ञ
यासैन्यंनिर्गतंस्वपुराद्बहिः॥ वमंतश्चधमंतश्चविषपूरप्रवर्षिणः॥ २६॥ तदाद्विशतशीर्षायेक्रुद्धास्त्रिशतशीर्षकाः ॥ च
तुःशतफणाश्चान्येसैन्येनचतुरंगिणा॥ २७॥ निर्ययुस्तेमहावीरादिव्यरूपवपुर्धराः॥धन्विनोदिव्यकवचामत्तमातंगसं
स्थिताः॥ २८॥ हयैरथैस्तथैवान्येपदाताश्चसहस्रशः॥हारकुंडलकेयूरकिरीटघनमौक्तिकैः॥ २९॥ मस्तकाभास्वराये
षांमणिरत्नविभूषिताः॥ सुविचित्राःसुवर्णस्यनानालंकारमंडिताः॥ ३०॥ विराजमानाराजेंद्रपार्थपुत्रमथापतन्॥
योजनानांपंचकंहिभूमिंव्याप्यस्थितारणे ॥ ३१ ॥ तेषांमुखेभ्योनिष्पेतुर्घोरास्ताविषवृष्टयः॥ विस्फुलिंगसहस्रैस्तुद
ह्यमानंतुतद्बलं॥ ३२॥ निजंवीक्ष्यार्जुनसुतोररक्षाथस्वपौरुषात् ॥ सेनेतेसर्पनरयोर्मिलितेतत्क्षणाद्युधि॥३३॥भ्रुवा
विवविराजेतेरुद्रस्यप्रलयागमे ॥ ततःप्रववृतेयुद्धंसेनयोरुभयोस्तदा ॥ ३४ ॥ बाणखड्गगदापातैर्मुशलैःप्रासकुंत
कैः॥ पातितैःपात्यमानैश्चरणंतद्दारुणंबभौ ॥ ३५ ॥ ब्रह्मेंद्रचंद्रैःससुरैर्व्योमंखंपरिदृश्यते ॥ जयंनागपतेःकेचित्केचि
त्कार्ष्णेःशशंसिरे॥ ३६॥युद्धेप्रवर्तमानेतुमानवाविषमोहिताः॥सर्पैर्दष्टाविनाशंतेजग्मुस्तत्रसहस्रशः॥ ३७॥ धृत
राष्ट्रेणतत्सैन्यंपार्थपुत्रस्यपातितं॥शस्त्रास्त्रैर्विविधैर्घोरैःसहस्राण्येकविंशतिः॥ ३८॥ क्रुद्धस्ततोमहाबाहुर्बभ्रुवाहोऽ
पितादृशं॥ धृतराष्ट्ररणेचक्रेविरथंहतवाहनं ॥ ३९॥ सेनामसत्यांतत्राजौविष्णोरमिततेजसः॥ स्मरणाद्बाणजालेन
कार्ष्णिश्चक्रेमहाक्षयं ॥ ४० ॥ पतंतिमणयोभिन्नाःशरैःसर्पफणाच्युताः ॥ प्रलयेगगनाद्भूमौनक्षत्राणीवभारत ॥
॥ ४१ ॥ ततःप्ररुद्धोबहुभिःसमंतात्तैर्महाविषैः॥ रराजरौद्ररूपोऽयंपार्वतीशोरणेयथा॥ ४२ ॥ शुशुभेयमुनावारिग
तोनंदात्मजोयथा॥ सैन्यंभस्मनिभंवीक्ष्यजातंसर्वत्रफूत्कृतैः॥ ४३ ॥ तेषांफणावायुजवैर्बभ्रुवाहोऽपिसंदधे ॥ मयू

रास्त्रंमहद्भीमंसर्वनागनिषूदनं ॥ ४४ ॥ मधुवर्षंततश्चक्रेलिप्तांगाःपवनाशनाः ॥ मधुनातेततोजाताबाणैर्भिन्नकलेव
राः ॥ ४५ ॥ पिपीलिकास्त्रंवीरेणमुक्तंपार्थसुतेनच ॥ ताभिर्विलिप्तगात्रास्तेसंग्रामंविजहुस्तदा ॥ ४६ ॥ धृतराष्ट्रस्यस
र्वांगंजातंपलविवर्जितं ॥ भित्वाऽस्थीनिपुनर्मज्जांपन्नगस्यपिपीलिकाः ॥ ४७ ॥ अस्थीनिचिंचाफलवत्कोटरहिप्रकु
र्वते ॥ दष्टस्तथाह्येषपिपीलिकाभिर्यथाभिगंतुंनशशाकवीरः ॥ बाणैर्मयूरैर्नकुलैश्चघोरैःपिपीलिकाभिर्मधुनाचसर्पाः
॥ ४८ ॥ वित्रास्यमानारणमंडलेतेगतानिकेतंधरणीधरस्य ॥ ४९ ॥ राजातान्भिन्नसर्वांगान्प्रत्युवाचहसन्निव ॥ शे
षउवाच पलायनंकथंतस्मान्मानुषाद्युद्धकोविदैः ॥ ५० ॥ कृतंभवद्भिःसकलैःसाधुमंत्रविशारदैः ॥ प्रदीयमानो
धर्मार्थैवारितोयैर्महामणिः ॥ ५१ ॥ कथंनतंवारयतेमंत्रीशोहितकोविदः ॥ ईदृशंतंमणिंकस्मात्परिरक्षतिनोसुधां ॥
॥ ५२ ॥ समर्थैचधनंदेयंशरीरमपिवल्लभं ॥ अदत्तमुभयंशोच्यंश्मशानेस्रगिवस्थिता ॥ ५३ ॥ शीघ्रंमणिंचार्पयतत
क्षकाद्यामहाविषाः ॥ छत्रंशतशलाकंचकुंडलेचमहाधने ॥ ५४ ॥ दिव्यरत्नमयीस्रक्चप्रदेयापार्थसूनवे ॥ यावन्नधूम
कल्लोलैःपूरितंतेनभूतलं ॥ ५५ ॥ तावद्गच्छामहेसर्वेयत्रास्तेकेशवप्रियः ॥ शोच्येनानेनमणिनाकिंकार्यंपांडवस्य
हि ॥ ५६ ॥ भविष्यतिसमीपस्थेकृष्णेत्रैलोक्यपालके ॥ यथाक्षीरार्णवेनीतमजाक्षीरंनगण्यते ॥ ५७ ॥ कामधे
नुःसुरतरुःकल्पवल्लीतथाहरौ ॥ भवंतःपन्नगाःसर्वेमानुषेणपराजिताः ॥ ५८ ॥ प्रायश्चित्तंप्रकुर्वंतुमणिदानप्रभंज
काः ॥ मयासहहरिंप्राप्तंपांडवार्थंमहापुरे ॥ ५९ ॥ पश्यंतुगरुडारूढमभयान्मृत्युनाशनं ॥ विलोक्यतेयदिहरिर्नयनैर्भक्ति
संयुतैः ॥ ६० ॥ जीवैर्नतान्वैनतेयोबाधितुंनक्षमोंऽतकः ॥ ततःपातालविवरान्निर्गतःपन्नगेश्वरः ॥ ६१ ॥ मणिमादाय
रत्नानिविविधानिबहूनिच ॥ वस्त्रालंकरणाद्यंचवस्तुजातंतथाबहु ॥ ६२ ॥ पार्थपुत्रायतद्दातुमाययौचस्वयंप्रभुः ॥
जैमिनिरुवाच गृहीत्वातंमणिंराजावित्तंचविविधंतदा ॥ ६३ ॥ प्रायान्मणिपुरेरम्येपार्थपुत्रोमुदान्वितः ॥ धृतराष्ट्र
स्ततोदुःखंप्राप्तवान्यादृशंनृप ॥ ६४ ॥ कथयिष्यामितेवीरसम्यगाकर्णयाधुना ॥ पुत्राभ्यांसहितोगेहेस्वकेमंत्रमथाक
रोत् ॥ ६५ ॥ दुःस्वभावंचदुर्बुद्धिंसमाहूयेदमब्रवीत् ॥ अनर्थःसुमहान्जातःपुत्रौप्रज्ञाप्रकारितः ॥ ६६ ॥ पार्थेनजीवि

तंप्राप्तंतन्नमेसुखदायकं॥ धर्मानुजश्चभविताविजयीबभ्रुवाहनः॥ ६७॥ भविष्यत्यश्वमेधश्चचिरंवैराहिपांडवाः॥
किमत्रानंतरंकार्यंब्रुवतांपुत्रकावुभौ॥ ६८ ॥ मयानिवारितोराजाहितार्थंदीर्घदर्शिना॥ दुर्बुद्धिरुवाच शोकं
जहिमहाबाहोकुतोदुर्बुद्धिनाक्रतुः॥ ६९ ॥ यत्राहंतत्रपुण्यस्यकथाक्कापिनजायते ॥ जनितोऽस्मित्वयाताततदुःस्वभा
वश्चमेऽनुजः॥ ७० ॥ आवाभ्यांतातपुत्राभ्यांसहितःशोचसेकथं॥ अहंभ्रात्रायुतोयेषांगृहेतिष्ठामिवैक्षणं॥ ७१ ॥ ज
यंतत्रनपश्यामिकुतोवैयाज्ञिकोविधिः॥शत्रूणांपतनंतेषांनरकेनवृषेमतिः॥७२॥त्वंप्रयाहियतोराजायातिजीवयितुं
नरं॥ अहमग्रेगमिष्यामिहर्तुंपार्थशिरोमहत्॥ ७३ ॥ पातयिष्येवनेघोरेमहागरुडवर्जिते ॥ कथंसंजीवयिष्यंतिनीते
शिरसिसंगरात्॥ ७४ ॥ एतावदुक्त्वावचनंदुःस्वभावेनसंयुतः॥ जगामचशिरोहर्तुंपार्थस्यहिसकुंडलं॥ ७५ ॥ अनय
द्बकदाल्भ्यस्यवनेशून्येस्थितश्वसः॥ चित्रांगदातथोलूपीनापश्येतांमहद्धिरः॥ ७६ ॥ प्रोचतुःकिमिदंजातंहाहतःपां
डवोमुहुः॥ केननीतंशिरोरम्यंसुचारुहरिजल्पकं॥७७॥ जैमिनिरुवाच पतितेधर्मपत्न्यौतेपार्थपादांतिकेतदा॥
ततःकलकलश्चासीद्रणमध्येविशांपते ॥ ७८ ॥ बभ्रुवाहोपिशमितस्तैःसर्वैःसहितोमुदा ॥ शेषंपुरस्कृत्यपुरंप्रविवे
शमहाबलः॥ ७९ ॥ सतुलब्ध्वामणिंयावत्प्रविश्यरणमंडलं ॥ तत्रपश्यतितंपार्थंतावच्छुश्रावतंध्वनिं ॥ ८० ॥ शिरो
नीतंशिरोनीतंकेनापिस्वपितुश्छलात्॥ पतितेमातरौवीक्ष्यपार्थगात्रंविशीर्षकं॥ ८१ ॥ निपपातधरायांतुमृतकल्पो
महीपते॥ यस्मिन्कालेकिरीटीहिपतितोरणमंडले॥ ८२ ॥ तस्मिन्दिनेनिशामध्येस्वप्नंकुंतीददर्शह ॥ पार्थायधर्मराजा
यसकृष्णायचसत्वरा॥ ८३॥ प्रबुद्धाकथयामासस्वप्नंरात्रौसमीक्षितं॥ मयाधनंजयोदृष्टस्तैलवाप्यंतरेगतः ॥८४ ॥
दासेरकंसमारूढोगतोसौदक्षिणांदिशं॥ गोमयेनानुलिप्तांगोजपाकुसुममंडितः ॥ ८५ ॥ नूनंनविद्यतेपार्थोवेद्मिकृ
ष्णसखातव॥ हृदयंभिद्यतेमेऽद्यसुभद्राकंकणंगतं ॥ ८६॥ कृष्णस्तस्यावचःश्रुत्वासस्मारगरुडंप्रभुः ॥ आजगामा
थगरुडस्तमारूढोजगत्पतिः ॥ ८७ ॥ कुंतींचमातरंभीमंदेवकींगोपकन्यकां ॥ समारोप्यययौतत्रयत्रास्तेपतितोऽर्जु
नः॥ ८८ ॥ अयुतस्तंभसंयुक्तेवीणकेस्त्रीभिरन्विते॥ददर्शचरणंघोरंबभ्रुवाहेनकारितं॥८९॥रात्रौरत्नप्रदीपैश्चभासितं

हेमकुंडलैः ॥ बाहुभिश्चंदनादिग्धैःकिरीटैःकटकैर्वृतं ॥ ९० ॥ नारीणांचसहस्रैस्तंपार्थंवीक्ष्यावृतंहरिः ॥ नारीवदनचंद्रै
श्चपार्थस्यमुखपंकजं ॥ ९१ ॥ विम्लानतामिदंनीतंक्वापिक्वापीत्यवोचत ॥ भीमःकृष्णंप्रत्युवाचकृष्णसूर्योदयेऽधुना
॥ ९२ ॥ प्रकाशितंमुखांभोजंभ्रातुर्मेसंभविष्यति ॥ जैमिनिरुवाच ततःसमुत्तीर्यखगाद्वासुदेवोमहायशाः ॥
॥ ९३ ॥ भीमेनसहताभिश्चपार्थंवीक्ष्याब्रवीद्वचः ॥ किंजातंकेनवीरेणपातितोऽसिधनंजय ॥ ९४ ॥ इयंचदेवकीमा
तायशोदाजननीचमे ॥ कुंतीपितृष्वसाभीमोरणेत्वांवीक्षतेमुहुः ॥ ९५ ॥ तंतथावादिनंकृष्णंभीमोवचनमब्रवीत् ॥
त्वमेवयदिगोविंदपतितंपरिपृच्छसि ॥ ९६ ॥ किमंधकारजनितंभयंवेत्तिदिवाकरः ॥ सकोमदीयंसंग्रामेगृहीत्वात्र
तुरंगमं ॥ ९७ ॥ पातयित्वागतःकोपिमांहिजानातुसंगतं ॥ कोसौपार्थसमोवीरःपतितोऽर्जुनसन्निधौ ॥ ९८ ॥ एतं
द्वितीयंजानामिकर्णपुत्रंचपातितं ॥ एवमुक्त्वातत्रगत्वाभीमसेनोतिविह्वलः ॥ ९९ ॥ विललापमहाबाहुरर्जुनेतिमुहु
र्मुहुः ॥ जैमिनिरुवाच ततःप्रबुद्धोवीरोऽसौबभ्रुवाहोमहाबलः ॥ १०० ॥ जनन्यौतस्यतेबुद्धेददृशातेजनार्दनं ॥
कुंतींयशोदासंयुक्तांदेवकींचवृकोदरं ॥ १ ॥ प्रद्युम्नेनानिरुद्धेनयुयुधानेनचान्वितं ॥ ज्ञात्वाऽर्जुनसुतोभीमंप्रत्युवाचा
तिदुःखितः ॥ २ ॥ मयापुत्रेणजनकोनिहतोभीमपापिना ॥ सैन्यंचपातितंकर्णपुत्रश्चनिहतोरणे ॥ ३ ॥ एवंविधंसाग
संमांगदयापरिपोथय ॥ स्वजीवितविनाशार्थंकृतोनामैषविग्रहः ॥ ४ ॥ शेषमुख्याश्चसंप्राप्तागृहीत्वाजीवदंमणिं ॥ मध्ये
केनापिदुष्टेनशिरोनीतंपितुश्चमे ॥ ५ ॥ नमस्करोमिगोविंदचरणौतेकृपांकुरु ॥ सुदर्शनेनचक्रेणशिरोमेछिंधिमाचिरं
॥ ६ ॥ यथापुराराहुकंठोमधुसूदनपातितः ॥ यस्मिन्कालेनजननीनपितानचबांधवः ॥ ७ ॥ जनस्तिष्ठतितत्रत्वंसर्वदा
परिरक्षसि ॥ पितृहंतागमिष्यामिदेवाहंनरकार्णवान् ॥ ८ ॥ नपीडयिष्यंतिचमांदृष्टस्त्वमसिचक्षुषा ॥ तवागमेनमृत्यु
र्मेभाव्यश्चनरकोहतः ॥ ९ ॥ मृत्युःप्रियोमेपरमोजीवितंदुःखदंमहत् ॥ तववैष्णवसर्वस्वंमयाचोरेणमोषितं ॥ १० ॥ ईश्व
राज्ञालंघिताहित्रिशूलेशांकरेक्षिप ॥ अथवाद्यजगन्नाथछिंधिचक्रेणमेशिरः ॥ ११ ॥ पितामहींनपश्यामिजनन्यानम
स्कृता ॥ अब्रुवाणाकथंकुंतीनाशीर्वादंप्रयच्छति ॥ १२ ॥ इत्याश्वमेधिकेप० कृष्णागमोनामैकोनचत्वारिंशोऽध्यायः

॥३९॥ ॥श्री॥ जनमेजयउवाच कथंधनंजयोवीरोजीवितस्तत्रसुव्रत॥मणिस्पर्शेनकृष्णेनजीवितंतस्यतद्वद॥१॥
जैमिनिरुवाच ततःकुंतींप्रत्युवाचनागराजस्यकन्यका॥नमस्कृतासिदेवित्वंसर्पिण्याविषदंष्ट्रया॥२॥संलग्नयापार्थ
करेभवतीगोमतीनुकिं॥तयासपन्नगस्यक्तःपुत्रहंतायथापुरा॥३॥तथाऽहंसांप्रतंत्यक्तात्वयावैराजकन्यया॥शाप
दंडेनलपनंमदीयंपरिपोथय॥४॥ जैमिनिरुवाच ततःप्ररुरुदुःसर्वाःसहकुंत्यामहास्वनं॥हापांडवेतिपति
ताःसर्वेषांपश्यतामपि॥५॥अथशेषःप्रत्युवाचनमस्कृत्यजनार्दनं॥हृषीकेशजगन्नाथकिमिदंवीक्ष्यतेत्वया॥६॥
धर्मराजस्यनिखिलंकुलंमग्नंरसातले॥तदुद्धरकृपासिंधोमणिनाऽनेनमाचिरं॥७॥यतःपाषाणजातीयोमज्जये
न्नैवतारयेत्॥सुधापिसुलभाचेयंजनार्दनतवेच्छया॥८॥मग्नंकुलंमज्जयसेपांडवस्यमहात्मनः॥रोदनेनजनानां
हिनपश्यामोवयंशिरः॥९॥क्वगतंकेननीतंवापार्थस्यधरणीतलात्॥यदत्रानंतरंकार्यंविष्णुनाक्रियतामिह॥१०॥
श्रीवासुदेवउवाच शृण्वंतुसर्वेवचनंमदीयंमंत्रसंयुतं॥यद्यहंब्रह्मचर्येणनभग्नोभूतलेसदा॥११॥तेनमेसुकृते
नाद्यपार्थस्यायातुतच्छिरः॥यैर्नीतंतेपतंत्वद्यभिन्नशीर्षामममाज्ञया॥१२॥ जैमिनिरुवाच एवंब्रुवतिदेवेशे
विनष्टौधृतराष्ट्रजौ॥पांडवस्यशिरःप्राप्तंतदामणिपुरेनृप॥१३॥गृहीत्वाकेशवोदिव्यंमणिंशेषात्स्वयंप्रभुः॥प्रत्युवा
चहरस्याज्ञानहंतव्याहिमादृशैः॥१४॥पार्थःशंभुप्रसादेनमणिनाजीवितंपुनः॥प्राप्नोतुयत्तास्तिष्ठंतुयोजयेस्यमणिंहृ
दि॥१५॥प्रथमंकर्णपुत्रस्यपश्चात्पार्थस्यधन्विनः॥उत्तिष्ठकर्णपुत्राद्यमणिस्तेहृदयेधृतः॥१६॥ जैमिनिरुवाच
धृतेमणौकर्णपुत्रस्यशीर्षंबाणैर्भिन्नंबभ्रुवाहस्ययुद्धे॥तथालग्नंचायसंचुंबकेनयथापुराघनघातैर्विशीर्णं॥१७॥स
मुत्थितःकर्णपुत्रोमनीषीबाणान्पुनःसंदधानोहिचापे॥कृष्णकृष्णकेशवेतिब्रुवाणंरणेपुनस्तिष्ठतिष्ठेतिवीरं॥१८॥चु
चुंबतत्केशवोऽतिप्रहर्षान्नमस्कृतःकर्णपुत्रेणकृष्णः॥समुत्थितेकर्णपुत्रेथपार्थस्तथाबुद्धोविधिनातेनकृष्णात्॥१९॥
यथादेहीमाययाभिन्नभावःसंप्राप्यासौनिर्विकारंसुयोगात्॥ तैर्वीक्षितःपन्नगैःसव्यसाचीत्रिभिर्वीरैःकृष्णबाहुप्र
गुप्तः॥तेपुष्पवर्षमुमुचुःसुराःकेपार्थस्यदध्मुर्विविधांश्चशंखान्॥२०॥आनंदितास्तदासर्वेसैनिकाःपांडवस्यते॥ववं

दिरेऽथसंप्राप्तान्कृष्णकुंतीमुखान्प्रभून्॥ २१ ॥ वृषकेतुस्तदावीरोनमस्कृत्याखिलान्मुदा ॥ ददर्शभीमंकुंतींचप्रहृष्टां
पुत्रदर्शनात्॥ २२ ॥ सर्वेतेसंगतावीराःप्रद्युम्नप्रमुखाःपुनः ॥ प्रविष्टाबभ्रुवाहस्यपुरंकृष्णानुगान्नृप ॥ २३ ॥ सर्वैःपुर
स्थैःसुजनैःपूजिताविसंचयैः॥ सप्तषष्टिर्वरानार्योनृत्यंत्योभावसंयुताः ॥ २४ ॥ कुबेरइववित्ताढ्याद्दृष्टास्तैशतशःपुरे
॥ पताकिनंनादयुक्तंगजाश्वरथमंडितं ॥ २५ ॥ कुबेरनगराभासंवीक्ष्यतेविस्मिताभृशं ॥ मुक्ताफलचतुष्केथसकृष्णं
सव्यसाचिनं॥ २६ ॥ सभायांबभ्रुवाहस्यस्थापयंतोऽब्रुवन्वचः॥ तेवीरानागसहितामात्रपांकुरुपांडव ॥ २७॥ पुत्रे
णजीवितश्चास्मिहतसैन्योऽस्म्यहंकृतः॥ सर्वत्रजयमन्विच्छेत्पुत्रादेकात्पराजयं ॥ २८ ॥ गंगाशापेनसंजातंपतनंते
धनंजय ॥ पुनःकृष्णप्रसादेनजीवितोसिधनंजय ॥ २९ ॥ भीमेनसहितोवीरपश्यपुत्रस्यवैभवं॥ चित्रांगदांप्रियां
पार्थद्वितीयांनागकन्यकां ॥ ३० ॥ संभावयमहाभागपुत्रंवीरंचलज्जितं ॥ गृहाणसकलंराज्यंपुत्रेणयदुपार्जितं ॥
॥३१ ॥ वासुदेवमहाबुद्धेप्रबोधयधनंजयं॥ संगमश्चैतयोःकार्यःकुंत्यापुत्रकपौत्रयोः॥ ३२ ॥ देवक्याभीमसेनेनजन
न्यातेयशोदया॥ अंधोमुखश्चवीरोसौनार्जुनंपरिपश्यति॥ ३३ ॥ त्यक्तुकामोनिजंदेहंकलुषंस्वपितुर्वधात्॥ जैमि
निरुवाच ततःकृष्णेनसंयुक्तंस्थापयित्वानिजासने॥ ३४ ॥ पितरंप्राहपुत्रोसौबभ्रुवाहोमहायशाः ॥ हिमाचलंग
मिष्यामिपातयिष्येकलेवरं ॥ ३५ ॥ नान्यथापातकंघोरंगमिष्यतिकलेवरात्॥ कृष्णभक्तस्यचगुरोर्धर्मकार्यप्रकारि
णः॥ ३६ ॥ वधोनसुखदोमह्यंतस्मात्त्यक्ष्येकलेवरं ॥ भीमसेनउवाच यदितेपातकंगात्रेभवेद्वीरमहीतले॥
॥ ३७॥नतिष्ठतिसमीपेतेदेवकीनंदनोहरिः॥ यथावयंतेपितरःपातयित्वापितामहं॥ ३८ ॥ गुरुंद्रोणंभानुपुत्रंस्थिताः
कृष्णेनवीक्षिताः॥ तथात्वंजीवत्पितृकोहरिणापावनीकृतः ॥ ३९ ॥ तुरंगंधर्मराजस्यत्यक्त्वाशोकंचपालय ॥ तवका
गणनापुत्रकृष्णाग्रेपापकर्म्मणां॥ ४० ॥ पंचपातककर्त्तारःकिन्नाम्नाऽस्यनतारिताः ॥ तुर्येयुगेचसंप्राप्तेमानवान्पापपू
रितान्॥ ४१ ॥ पावयिष्यतिनामास्यविष्णोरमिततेजसः॥ कुतोदुःखंकुतोदैन्यंकुतःपापभयंनृणां ॥ ४२ ॥ येषांस
द्भावसंयुक्ताजिह्वास्यात्कृष्णवादिनी॥ जैमिनिरुवाच तेकृष्णेनकृताःसर्वेवैरशोकविवर्जिताः॥ ४३ ॥ प्रमो

दिताश्वसंतुष्टास्तदामणिपुरेनृप ॥ वादित्राणिचसंजघ्नुर्दर्दुर्दानानिभूरिशः ॥ ४४ ॥ विस्मयंतस्ययुद्धस्यचरितंबहुमे
निरे ॥ वृषकेतुंचकृष्णंचशशंसुःशेषसंयुताः ॥ ४५ ॥ मुमोचतुरगंकृष्णःपंचमेदिवसेततः ॥ कुंतीवधूभिःसहितामुमुदे
पौत्रमंदिरे ॥ ४६ ॥ गायंतिगायकास्तत्रनृत्यंतिस्मनटादयः ॥ मुदितोमाधवोराजन्पार्थपुत्रसमन्वितं ॥ ४७ ॥ वरा
सनेचोपविष्टमिदंवचनमब्रवीत् ॥ श्रीवासुदेवउवाच वयंसुखोषिताःसर्वेबभ्रुवाहस्यमंदिरे ॥ ४८ ॥ सुखेनपं
चरात्रंनोगतंपश्यधनंजय ॥ इदानींभीमसेनोऽयंसहकुंत्यायशोदया ॥ ४९ ॥ उलूप्यासहितोराज्यंधर्मराजस्यगच्छतु ॥
चित्रांगदातथायातुगृहीत्वाविविधंधनं ॥ ५० ॥ प्रारंभंकारयंत्वेतेयज्ञस्येतिमतिर्मम ॥ चिंतांसुमहतींराजाकरिष्य
तिगतेमयि ॥ ५१ भवान्पुत्रयुतश्चाहंवृषकेतुस्तथापरः ॥ हंसध्वजश्चवीरोऽसौतथाऽन्येसंतुरक्षणे ॥ ५२ ॥ अग्रेसंतिम
हाबाहोराजानोवैष्णवाःपरे ॥ अजेयास्तेमयाप्याशुतेनाहंत्वांत्यजेकथं ॥ ५३ ॥ जैमिनिरुवाच एवंहिमंत्रंकृ
त्वाथप्रेरयामासपांडवं ॥ वासुदेवोमहाभागोवित्तंचबहुलंस्त्रियः ॥ ५४ ॥ रक्षणार्थंस्थितोराष्ट्रेतुरंगस्यातिकौतुकात् ॥
शेषादयस्ततःसर्पाःकृष्णंविज्ञाप्यतेमुदा ॥ ५५ ॥ पातालमभिजग्मुर्वैबभ्रुवाहेनपूजिताः ॥ यइदंवासुदेवस्यचरितंसार्जु
नस्यच ॥ ५६ ॥ शृणुयात्सर्वपापेभ्योमुच्यतेनात्रसंशयः ॥ संजीवनंचार्जुनस्यसहकर्णात्मजेनच ॥ ५७ ॥ कथानकंपु
ण्यकरंयःकृष्णस्यशृणोतिसः ॥ दुर्मृत्युनानबाध्येतकदाचिदपिवैनरः ॥ ५८ इत्याश्वमेधिकेपर्वणिजैमिनीयेबभ्रु
वाहनविजयोनामचत्वारिंशोऽध्यायः ॥ ४० ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥ छ ॥
जनमेजयउवाच ततःपरंकिमभवत्कथंकृष्णेनसंयुतः ॥ वीरैर्वृतःसव्यसाचीररक्षतुरगंमुने ॥ १ ॥ परमंजायतेसौ
ख्यंशृण्वानस्यतवाननात् ॥ त्वद्दिमेवासुदेवस्यपिबतःसुकथामृतं ॥ २ ॥ संतापनुत्क्षीरनिधिरेकएवसदोच्यते ॥ किंपुन
श्चंद्रकिरणैर्मलयानिलसंयुतैः ॥ ३ ॥ सुशीतलत्वंगमितःसुमनोभिरलंकृतः ॥ चरितंवासुदेवस्यगहनंरससंयुतं ॥ ४ ॥
तथाभूतमहंमन्येवदतस्तेमहामते ॥ भीमेगतेनागपुरंकिंचकारजनार्दनः ॥ ५ ॥ तत्सर्वंकथयाद्यत्वंमयापृष्टोऽसिसत्त
म ॥ बिलानितानिमन्येऽहंमुखानिजगतांपते ॥ ६ ॥ प्रवदंतिनमाहात्म्यंयेषांपूर्णानिकीटकैः ॥ बभ्रुवाहपुरान्मुक्तोवाजि

राजोमहामुने॥ ७॥ कानिराष्ट्राणितुरगःपरिबभ्रामतद्वद ॥ जैमिनिरुवाच पुराप्रमुक्तोराजेंद्रतैःसकृष्णैर्महाबलैः॥ ८ ॥ यावत्प्रयातितुरगस्तावत्ताम्रध्वजेनसः॥ वीक्षितोरक्षतास्वंहिवाजिमेधतुरंगमं॥ ९॥ प्रमुक्तंरत्ननगरात्स्वपित्राबर्हिकेतुना॥ ताम्रध्वजस्यहंसंतमर्जुनस्यहयोययौ॥ १०॥ आघ्रायवदनंतस्यस्तब्धकर्णोररासह॥ चरणेनोद्धृतेनैनंताडयामासभारत॥ ११ ॥ प्रोथंमुक्ताफलमयंदशनैश्वादशत्क्रुधा॥ पश्चामेनंद्वितीयोऽपिताडयामासवक्षसि॥ ॥१२॥ स्कंधकंडूयनंपश्चाच्चक्रतुस्तौतुवाजिनौ॥ ताम्रध्वजःप्रधानंस्वंपप्रच्छबहुलध्वजं॥१३॥ कस्ययज्ञनिमित्तंहिमुक्तःपत्रंप्रवाचय॥ बहुलध्वजस्ततःपत्रंधृत्वावाजिनमुत्तमं ॥ १४ ॥ पपाठपत्रजंभावंराज्ञेसर्वंन्यवेदयत् ॥ राजाश्रुत्वाप्रधानस्यवचनंकोपपूरितः॥ १५ ॥ जग्राहपांडवहयंकृष्णाभ्यामपिरक्षितं ॥ प्रद्युम्नेनानिरुद्धेनतथाहंसध्वजेनच ॥ १६॥ अनुशाल्वेनवीरेणकर्णपुत्रेणधीमता॥ पाल्यमानंगतभयस्तथावीरैःसमन्वितं ॥ १७॥ स्वांसेनांसर्वशस्त्राढ्यांरचयन्वाक्यमब्रवीत्॥ ताम्रध्वजउवाच ममपित्रादीक्षितेनकृतायज्ञास्तुसप्तवै॥ १८॥ पुनश्चायंनरपतिःप्रकर्ताचाष्टमंक्रतुं॥ अष्टमेनतुरंगेणपितुश्चैवाष्टमःक्रतुः॥ १९॥ भविष्यतिसकृष्णोयमन्येतेकृष्णवर्जिताः॥ संजातायेक्रतवःपूर्वंतिष्ठंतुहरिसंमुखाः॥ २० ॥ भवंतश्चमहाबुद्धेमहद्युद्धंभविष्यति ॥ बहुलध्वजउवाच तवसैन्येनपार्थस्यबहुलेनाल्पकंभुवि॥ २१ ॥ संछादितंबलंराजन्यथाकापिनदृश्यते ॥ जानातिराष्ट्रंराजेंद्रोबभ्रुवाहोऽथवानवा ॥ २२॥ प्रददातिकरंभारंमुक्तानांयःपितुश्चते॥ मुक्ताफलानिगच्छंतिमयूरध्वजमंदिरे॥ २३॥ नित्यंपुष्पांजलौकार्येनर्त्तकीनांरजांसिवत्॥ अस्मिन्ग्रामेमहावीरैरणोयंदृश्यतेकृतः॥ २४॥ अशक्ताःपतिताःकेचित्केचिन्मृत्युमुपागताः॥ निर्धनानामपुष्टानामल्पपौरुषकारिणां॥ २५॥ एतेषांकीदृशंयुद्धंभविष्यतिहयेधृते॥ ताम्रध्वजउवाच अन्येषामत्रवीराणांगणनाकाममाग्रतः॥ २६॥ वीरावत्ररणेधीरौबभ्रुवाहनकर्णजौ॥ नारदात्पौरुषंराज्ञावेतयोःसंश्रुतंमया॥२७॥ नरनारायणौतेनकथितौपार्थमाधवौ॥ प्रद्युम्नश्चानिरुद्धश्चयुयुधानस्तथापरः॥ २८॥ एतेकृष्णसमावीरास्ततोयुद्धंभविष्यति॥ अर्धचंद्रेणव्यूहेनवाहिनींरचितांकुरु॥२९॥ पांचजन्यस्वनंघोरंप्रकरोतिजनार्दनः॥ देवद

त्तंपांडवश्वशंखंवादयतेभृशं ॥ तुरगार्थंसमायांतिरथिनःशस्त्रपाणयः ॥ ३० ॥ जैमिनिरुवाच एवंविधायत
रसाराजायुद्धेस्थितस्तदा ॥ सकृत्वानिश्चयंधैर्यात्कृष्णेनाथनिरीक्षितः ॥ ३१ ॥ वासुदेवस्तुतान्दृष्ट्वायोद्धुंयोधानवस्थि
तान् ॥ उवाचवाक्यंप्रहसन्पार्थंसंस्पृश्यपाणिना ॥ ३२ ॥ श्रीवासुदेवउवाच पार्थताम्रध्वजंपश्यमयूरध्वजनंद
नं ॥ अनेनविधृतःसोश्वस्त्वदीयःस्वंप्ररक्षता ॥ ३३ ॥ अत्रयुद्धंव्यवसितंसुमहद्वीरपातनं ॥ मोचयाश्वंमहावीराद्धंखा
द्वेदंयथाहरिः ॥ ३४ ॥ प्रद्युम्नाद्याश्चयेवीराबभ्रुवाहनपालिताः ॥ सर्वेयुद्धंकरिष्यंतित्वंमयासहितोऽनघ ॥ ३५ ॥
रणभूमिंपरित्यज्यसमायाहियतोव्रजे ॥ पितास्यदीक्षितःपार्थविद्यतेनर्मदातटे ॥ ३६ ॥ शूरोयंजितकामस्तुसत्यवा
गनसूयकः ॥ नयोधनीयःपार्थेनसत्यमेतद्वदामिते ॥ ३७ ॥ गृध्रव्यूहंहिरचययथास्थानंधनंजय ॥ एतान्वीरान्महाका
यांस्ताम्रध्वजबलेस्थितान् ॥ ३८ ॥ जानामिकालरूपांस्तान्सर्वेयुध्यंतुमामकाः ॥ अहंस्वरथमारुह्यदारुकेणनियंत्रि
तं ॥ ३९ ॥ योत्स्यामिसहितःपुत्रैःपौत्रैःश्रांतोसिपांडव ॥ विनाशंसर्ववीराणामद्यमन्येसमागतं ॥ ४० ॥ जैमिनि
रुवाच एतावदुक्त्वावचनंमाधवःस्वरथंगतः ॥ गृध्रव्यूहेनसहितस्तुरंगंप्रतिमारिष ॥ ४१ ॥ वासुदेवंरथस्थंतेददृशुः
सर्वपार्थिवाः ॥ गृध्रस्यचमुखेराजाग्रीवायामनुशाल्वकः ॥ ४२ ॥ हंसध्वजोनेत्रसंस्थःपक्षयोर्यदुनंदनौ ॥ प्रद्युम्नश्चा
निरुद्धश्चसात्यकिर्भोजवर्धनः ॥ ४३ ॥ पादयोरुभयोर्मध्येगृध्रस्यकिलसंस्थितौ ॥ यौवनाश्वोमेघवर्णोव्यूहरक्षा
विधायिनौ ॥ ४४ ॥ अर्जुनंहृदयेवीरंबहुभिःपरिवारितं ॥ चंचुस्थितावुभौवीरौबभ्रुवाहनकर्णजौ ॥ ४५ ॥ एतान्वी
क्ष्यबहून्वीरान्बहूनन्यांश्चपार्थिवान् ॥ ताम्रध्वजोमुदायुक्तआजुहावजनार्दनं ॥ ४६ ॥ मयागृहीतंतुरगंपार्थस्यमहतो
रणात् ॥ यदिमोचयितुंकृष्णस्वयंप्राप्तोऽसिसंगरे ॥ ४७ ॥ धैर्यंरणेप्रकर्तव्यंपार्थंपालयकेशव ॥ मदीयंवाजिनंयांतंकिंन
धारयसेविभो ॥ ४८ ॥ नान्येषांविद्यतेशक्तिस्त्वांविनादेवकीसुत ॥ मयासमंमहारंगेसम्यग्योधयितुंहरे ॥ ४९ ॥ सुद
र्शनंहिशार्ङ्गंचशस्त्राण्यन्यानिधारय ॥ नविद्यतेभयंमेत्रदृष्टस्त्वमसिचेद्रणे ॥ ५० ॥ इत्याश्वमेधिकेपर्वणिजैमिनी
येकृष्णताम्रध्वजभाषणंनामैकचत्वारिंशोऽध्यायः ॥ ४१ ॥ ॥ ७ ॥ ॥ ७ ॥ जैमिनिरुवाच

एतावदुक्त्वावचनंपार्थसैन्यंतथाविधं॥नाराचैरर्धचंद्रैश्चसमंताद्व्यकिरद्बली॥१॥पार्थंजघानसप्तत्याशराणांकेशवंत्रि
भिः॥बाणैर्बिभेदतरसासिंहनादमथाकरोत्॥२॥दारुकंपंचभिर्बाणैश्चतुर्भिश्चतुरोहयान्॥ विव्याधकुपितोवीरस्तदद्भु
तमिवाभवत्॥ ३॥ नवभिःसात्यकिंवीरंकृतवर्माणमष्टभिः॥ प्रद्युम्नंचसहस्रेणानिरुद्धमयुतेनच॥ ४॥ अनिरुद्धस्ततो
वीरःसमाहूयेदमब्रवीत्॥ तिष्ठताम्रध्वजरणेपश्यत्वंममपौरुषं॥ ५॥ सहस्वमेप्रहारंहिमुंचमुंचतुरंगमं ॥ कस्त्वांत्रातार
णान्मंदपुरतोममतद्वद॥ ६॥ ताम्रध्वजउवाच मदनात्तावकंजन्मपुष्पबाणाद्विशेषतः॥बाणकन्यापतिस्त्वंतुकिं
युद्धंप्रकरिष्यसि॥ ७॥ बाणेनरक्षितःपूर्वमूषास्नेहेनसाधुना॥ नाहंतथाविधंकार्यंकरिष्यामिमहारणे॥ ८॥ अद्यकृष्ण
स्यपुरतःपातयिष्येमहाशरैः॥ आत्मानंपालयविभोनभवेज्जीवितंतव॥ ९॥ अनिरुद्धउवाच बाणंमुंचामिति
ष्ठत्वंबहुधाकिंप्रभाषसे॥ आत्मानंस्वयमेवेहवर्णयंतिनपंडिताः॥ १०॥ जैमिनिरुवाच बाणंमुमोचानिरुद्धः
प्रलयानलसन्निभं॥ ११॥ बिभेदहृदयंतस्यसुचित्रस्यधनुष्मतः॥सुचित्रोपिशराणांहिनवत्यायदुनंदनं॥ १२॥विव्या
धसमरेतूर्णंशरांस्तान्पंचधापरः॥ अनिरुद्धःक्षणाच्चक्रेवीरंशिखिनिभंरणे॥ १३ ॥चतुर्भिर्निहतावाहाःपंचमेनाथ
सारथिं॥ जघानचततस्तस्यवीरानन्यांश्चदारुणान्॥ १४॥अनिरुद्धशरैर्भिन्नादृश्यंतेसर्वसैनिकाः॥चित्रांगावनमध्य
स्थाःस्फुरंतस्तेतथाऽभवन्॥ १५॥ बाहूंश्चिच्छेदवीराणामंगुलीश्चनखांस्तथा ॥ मणिबंधंपृथक्चक्रेहस्तदंडंचमारिष॥
॥ १६॥ वक्षस्थलानिचास्थीनिकटिदेशान्सुमांसलान्॥ शिरांसिचपृथक्चक्रेनेत्राणिचहसन्निव ॥ १७॥ दंतान्भ्रुव
स्तथाश्मश्रूःक्रुद्धश्चिच्छेदयादवः॥परमाणूपमांनीतास्तस्यवीरस्यसैनिकाः॥ १८॥वायुनातद्रजोनीतंसागरेहिमहात्म
ना॥अनिरुद्धप्रयुक्तेनतस्मिन्कालेविशांपते॥ १९॥चतुर्विधंबलंहत्वाविधूमोऽग्निरिवज्वलन्॥अक्षौहिणीनांत्रितयंपा
तितंबलिनाऽमुना॥ २०॥ कृष्णपौत्रेणवीरेणसुचित्रस्यरणांगणे॥ पुनरन्यंमहत्सैन्यंपोथयामाससायकैः॥ २१॥ प
तंगाइवतेसर्वेदग्धाःकार्मुकधारिणः॥ रथाविभिन्नास्तिलशोगजाश्चस्तावनंगताः॥ २२॥ हयाहताःसाश्ववीराबाणै
स्तेविदलीकृताः॥ सुचित्रोऽपिमहाबाहुःप्रद्युम्नतनयंरणे॥ २३॥ बाणैर्विव्याधनिशितैर्विरथंतंचकारसः॥ तंरथंभग्न

चक्राक्षंत्यक्त्वाकार्मुकमाददे ॥ २४ ॥ जघानबाणजानाथःसुचित्रंबहुभिःशरैः ॥ विरथंताम्रकेतुंहिचक्रेक्रोधसमन्वि
तः ॥ २५ ॥ उभौतौविरथौवीरौक्षितिस्थौचक्रतूरणं ॥ ततोऽनिरुद्धंकृत्वासौमूर्च्छितंस्वरथंस्थितः ॥ २६ ॥ पातयामास
संप्राप्तान्वीरान्पांडवसैनिकान् ॥ प्रद्युम्नंपंचभिर्बाणैःक्षिप्त्वाऽसौवाक्यमब्रवीत् ॥ २७ ॥ कामःसुयोद्धापिमयायदियु
द्धेपराजितः ॥ कथंनयुद्धंकुरुतेदेवकीनंदनोहरिः ॥ २८ ॥ आयातुयातुगोविंदःकार्यंजातंतुमामकं ॥ जैमिनिरुवा
च ततःप्राप्तोमहाबाहुःकर्णपुत्रोमहायशाः ॥ २९ ॥ वृषकेतुःसमाहूयपंचभिर्निशितैःशरैः ॥ जघानताम्रकेतुंहिविर
थंतमथाकरोत् ॥ ३० ॥ ततोऽन्यंरथमास्थाययावत्पातयतेशिशुं ॥ तावद्रथोद्वितीयोऽपिकर्णपुत्रेणचूर्णितः ॥ ३१ ॥
यंयंरथंप्रयात्येषसुचित्रःसिंहलीलया ॥ तंतंचिच्छेदसमरेवृषकेतुरुदारधीः ॥ ३२ ॥ एवंशतत्रयंतेनरथानांतस्यपाति
तं ॥ अन्यंरथंगतोराजाबाणैःकर्णात्मजंरणे ॥ ३३ ॥ मूर्च्छितंपातयामासदेहंव्याधिगणोयथा ॥ एवंभित्वानुशाल्वंतं
चक्रेपौरुषवर्जितं ॥ ३४ ॥ यौवनाश्वंशरेणैवरथाद्भूमौव्यपातयत् ॥ सात्यकिस्तस्यतुरगान्हत्वाबाणैश्चसप्तभिः ॥
॥ ३५ ॥ करोतिनादंशंखस्ययावत्तेनाथपातितः ॥ कृतवर्माशराभ्यांहिपीडितोनिपपातह ॥ ३६ ॥ सुचित्रस्याग्रतोराज्ञ
स्तदद्भुतमिवाभवत् ॥ विरेजुस्तेनराभूमौपतिताश्चास्यसायकैः ३७ ॥ क्षीणपुण्याइवजनागगनाद्भूतलेयथा ॥ बभ्रुवाह
नमायांतंसुचित्रोवीक्ष्यसंगरे ॥ ३८ ॥ प्रत्युवाचहसन्वीरस्त्वमेवपरियुद्ध्यसि ॥ क्षणंतिष्ठसियुद्धेमेपुरतोबाणपंचकं ॥ ३९ ॥
त्वंविमोचयसेधैर्यात्त्यजेहंमौक्तिकंकरं ॥ जैमिनिरुवाच कार्ष्णिर्मुमोचनाराचान्पंचताम्रध्वजंप्रति ॥ तेबाणाःसप्तधा
तेनसुचित्रेणविभेदिताः ॥ ४० ॥ रथःसंचूर्णितश्चास्यबभ्रुवाहस्यतत्क्षणात् ॥ पतितोभूतलेकार्ष्णिःखिलीभूतोमहारणे
॥ ४१ ॥ पततस्तस्यवीरस्यशरीराद्भूषणानिच ॥ विभिन्नानिविकीर्णानिनक्षत्राणीवसंक्षये ॥ ४२ ॥ तादृशंपार्थतनयंपाता
लतलभेदिनं ॥ खिलीकृत्यययौरोषात्तिष्ठकृष्णेतिवादकः ॥ ४३ ॥ तंवीक्ष्यवीरानेत्राणिनिमील्यगतजीविताः ॥ तत्राभव
न्महाराजरुद्रंवीक्ष्येवजंतवः ॥ ४४ ॥ वाहनानिपरित्यज्यपलायंतेस्मसैनिकाः ॥ हंसध्वजंसमाकीर्णंबाणैस्तस्यमहात्मनः
॥ ४५ ॥ परित्यज्यप्रगच्छंतितस्मिन्युद्धेऽतिभास्वरे ॥ त्यक्त्वाऽथयुद्धेचास्त्राणितथाशस्त्राणिचापरे ॥ ४६ ॥ रुधिरौघेविलीयं

तेमीनाइवविशांपते ॥ नात्मानंतेप्रजानंतिशरजालेनमोहिताः॥४७॥माभैष्टवीरामाभैष्टेत्युक्त्वावीरोधनंजयः॥आज
गामाथसमरेधनुर्विस्फारयन्स्वकं॥ ४८ ॥ अब्रुवंस्तेहिकिंपार्थतुरंगेणकरिष्यसि॥ गोत्रवध्याभयेनासौकुरुतेयज्ञमु
त्तमं॥४९॥ अस्यहस्तेननिखिलानस्मान्हत्वाधनंजय॥ किंकरिष्यसिपुण्यंहियेनपूतोभविष्यसि॥५०॥ एवंविधांस्तदा
शब्दान्ब्रुवाणाःसंगरेमुहुः॥ततःपार्थेनवीरेणस्तंभितंतादृशंबलं॥५१॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेताम्रध्वजविज
योनामद्विचत्वारिंशोऽध्यायः॥४२॥ ॥छ॥ ॥छ॥ ॥छ॥ जैमिनिरुवाच पार्थःसुचित्रमा
साद्यनवभिःसायकैर्नृप॥ विव्याधवक्षसिक्रुद्धस्तैःशरैःपातितोरथात् ॥ १ ॥ अन्यंस्यंदनमारुह्यसुचित्रोरथिनांवरः
व्यकिरत्पांडवंबाणैःसमंताद्धनवद्गिरिं ॥ २ ॥ पार्थोऽपितमदृश्यंहिकृत्वायुद्धेशिलीमुखैः ॥ स्वशंखंपूरयामासतिष्ठेति
प्राहमारिष॥ ३॥ रथंचिच्छेदतिलशःसहयंसूतसंयुतं॥ अन्यंरथंप्रयातोयंसुचित्रोरोषपूरितः॥ ४॥ पार्थस्यतुरगान्सू
तंपातयित्वाऽब्रवीद्वचः॥ हयास्तेनिहताःसूतोमयायंपातितोरथात्॥ ५॥ क्वगमिष्यसिनेष्यामिस्वपुरंहंससंयुतं ॥ तस्य
वाक्येनभिन्नोसौविव्याधार्जुनआहवे॥ ६॥ तंवीरंरथसंयुक्तंचक्रेभग्नकलेवरं ॥ रथानांतस्यवीरस्यसहस्रंपरिपातितं
॥ ७॥ किरीटिनातदायुद्धेनायंतिष्ठतिसंगरात्॥ पार्थंविव्याधनाराचैःसुचित्रोऽन्यरथंगतः॥ ८ ॥ अर्जुनंमूर्छितंचक्रे
कृष्णस्यपुरतस्तदा॥ मूर्च्छांत्यक्त्वाजघानाथसुचित्रंपांडवःशरैः॥ ९॥ ततस्ताम्रध्वजःपार्थंसरथंदक्षिणांदिशं ॥ बाणैः
सुनिशितैर्निन्येयोजनंधरणीपथं॥ १० ॥ समागतंरथंवीक्ष्यपुनरेवमहाशरैः ॥ बिभेदसकलंतस्यपांडवस्यातिपौरु
षात्॥ ११ ॥ अर्जुनस्तंहिसरथंगगनेसायकैस्त्रिभिः॥ प्रेरयामासवेगेनसिंहनादमथाकरोत् ॥ १२॥ सारथिंचरथंचैव
प्राप्यपार्थोऽपरंरणे॥ सुचित्रस्यघनांसेनांनिन्येयमपुरंप्रति ॥ १३ ॥ अर्जुनंव्यधमद्राजाशरैःकनकचित्रितैः ॥ उभौ
चित्रास्त्रविद्वांसौचित्रमंडलकारिणौ ॥ १४ ॥ वीरश्रियावृतौधीरौनमुंचेतांमहारणं ॥ उभौयुद्धंपरित्यज्यनगतौतद्धि
कौतुकं॥ १५॥ अक्षौहिणीनांद्विशतंपार्थेनविनिपातितं॥ सुचित्रेणापिपार्थस्यप्रयुतंनिहतंबलं॥ १६॥ चक्रतुर्दारुणं
युद्धमन्योन्यजयकांक्षिणौ॥ धनुश्चिच्छेदपार्थस्यध्वजंचकनकावृतं॥ १७॥ पताकांचक्रगोप्तारौसर्वोपकरणानिच॥

छत्रंरथंचतुरगान्संरंभात्सूतमेवच ॥ १८ ॥ यंयंरथंनृपोयातितंतंचिच्छेदशक्रजः ॥ सहस्रंपुनरेवास्यद्वितीयंजनमेज
य ॥ १९ ॥ रथानांतत्रभग्नंहिसुचित्रस्यातिधन्विनः ॥ पार्थबाणैःपीडितांगःपौरुषंनविमुंचति ॥ २० ॥ तस्यमांसक
णाश्छिन्नाःपतंतिपवनाहताः ॥ कृष्णस्यमस्तकेराजन्धरण्यांखेचसंस्थिताः ॥ २१ ॥ एवंविधंतदाजातंयुद्धंत्रैलोक्य
मोहनं ॥ वीरयोरुभयोर्घोरंदिनानांसप्तकंनृप ॥ २२ ॥ दिवारात्रंप्रकुर्वाणौयुद्धंवीक्ष्यभियावृताः ॥ सर्वेवीरास्तदाराज
न्विस्मयंतस्यमेनिरे ॥ २३ ॥ सुचित्रःपांडवरथंगृहीत्वागगनेगतः ॥ श्येनवद्व्यचरद्राजन्नामिषंक्रोधमूर्च्छितः ॥ २४ ॥
चिक्षेपभूतलेदूरात्साश्वध्वजपताकिनं ॥ तंनिरीक्ष्याथगोविंदःस्वकरेणदधौहरिः ॥ २५ ॥ ताम्रध्वजउवाच मया
यंपोथितःपार्थःसरथोगगनाद्भुवि ॥ त्वयायदिधृतोहस्तेपौरुषंमामकंशुभं ॥ २६ ॥ तंतथाभाषमाणंतुराजानंमधुसूद
नः ॥ जघानगदयामूर्ध्निपदाचहृदयेतथा ॥ २७ ॥ सभिन्नहृदयोभूपःप्रापतत्कृष्णसंमुखः ॥ स्वरथंसमवस्थायकृष्णं
विव्याधसायकैः ॥ २८ ॥ श्रीकृष्णउवाच पार्थत्वमेवसंग्रामेयुद्ध्यस्वाहंचयोधये ॥ आवयोःसंगमेना
यंविजेतव्योमतिर्मम ॥ २९ ॥ माशंकांकुरुवीरेऽस्मिन्महासत्वेधनंजय ॥ पश्यद्रवंतींपृतनांसुचित्रशरपीडितां ॥
॥ ३० ॥ बभ्रुवाहनमुख्यायेतेऽमुनाहेलयाजिताः ॥ गांडीवमुक्तैर्नाराचैस्त्वंप्रपातयमाचिरं ॥ ३१ ॥ शार्ङ्गेणधनु
षाचैनंपातयेनात्रचिंतनं ॥ ततोमुमोचगोविंदःकार्मुकात्स्वान्महाशरान् ॥ ३२ ॥ अर्जुनःसंमुखोवीरंविव्याधह
रिणोदितः ॥ तथापिकेशवस्तंहिव्यकिरद्रथसंस्थितं ॥ ३३ ॥ नरनारायणौतेनविद्धौबाणैःसुतेजनैः ॥ उभयोर्धनुषी
चक्रेगुणहीनेस्वसायकैः ॥ ३४ ॥ उवाचकेशवंराजाहर्षेणोत्फुल्ललोचनः ॥ जनेनद्वौपृथग्भूतौसंयोज्यौभूतिमिच्छता ॥
॥ ३५ ॥ अर्जुनस्यरथंत्यक्त्वासूतत्वंतच्चकेशव ॥ महारथोऽपरोभूत्वायुद्ध्यसेयत्नमास्थितः ॥ ३६ ॥ त्वयाविहिनःपार्थो
ऽसौपतत्येवनसंशयः ॥ सारथिर्भवगोविंदमापातयधनंजयं ॥ ३७ ॥ ततःकृष्णोरथंत्यक्त्वापार्थसूतोभवत्पुनः ॥
प्रेरयामासतुरगान्जवनान्किंकिणीयुतान् ॥ ३८ ॥ तंरथंचावसंघट्यकशाघातेनसारथिः ॥ ताडयामासवेगेनकोपा
दरुणलोचनः ॥ ३९ ॥ सुचित्रोपिशरैस्तीक्ष्णैर्दशभिर्मधुसूदनं ॥ विव्याधपांडवंषष्ट्याशराणांपृथिवीपते ॥ ४० ॥ छ

त्रंपार्थस्यचिच्छेदपुनःकृष्णंशतेनच॥अर्जुनस्तस्यवीरस्यरथंचक्रेविचूर्णितं॥४१॥गात्रंबिभेदनाराचैःसमंताल्लोमवा
हिभिः॥ यत्रयत्रार्जुनशरैर्नीयतेतत्कलेवरं॥४२॥पुनरायातिपार्थस्यसमीपेशस्त्रसंयुतं॥पदात्पदंतमायांतंसुचित्रंमा
धवोऽक्षिपत् ॥ ४३ ॥ पदप्रहाराभिहतःपपातधरणीतले॥ पुनरुत्थायवीरोऽसौगजंमत्तंसमाश्रितः॥४४॥तत्रसंस्थः
शरैस्तीक्ष्णैर्व्यधमत्कृष्णपांडवौ॥रथंसकृष्णंसाश्वंतंचक्रेभ्रमसमाकुलं॥ ४५ ॥ मूर्छांत्यक्त्वाचयेवीराबभ्रुवाहनसन्नि
भाः॥ योद्धुंप्राप्तास्ताम्रकेतुंतेभिन्नाःपतिताःशरैः॥ ४६॥ एवंविधंप्रयुद्ध्यंतंसुचित्रंमाधवःक्रुधा॥ गृहीत्वादारुणंदिव्यं
करेचक्रंसुदर्शनं॥ ४ ७॥ तिष्ठतिष्ठेतिराजानंसमरेऽपाद्रवद्रथात्॥ धराचकंपितातत्रदेवानांभयमाविशत्॥४८॥समु
द्राश्चुक्षुभुःसूर्यश्चंपकेभ्रमितादिशः॥शेषाद्याःपन्नगाःसर्वेभयात्कुंडलिनोभवन्॥ ४९ ॥ ताम्रध्वजोगजंत्यक्त्वासंमु
खःकृष्णमागमत्॥ तेनचक्रेणदेवेशश्चकारकदनंमहत् ॥ ५० ॥ शतमक्षौहिणीनांतुक्रुद्धेनहरिणाहतं॥५१॥ इ
त्याश्वमेधिकेपर्वणिजैमिनीयेताम्रध्वजयुद्धेश्रीकृष्णकोपोनामत्रिचत्वारिंशोऽध्यायः ४३॥ ॥छ॥ ॥छ॥
जैमिनिरुवाच पतितांवीक्ष्यतांसेनांसुचित्रोहर्षपूरितः॥ प्रोवाचकृष्णंकुपितंचक्रपाणिंमहाहवे॥॥ १ ॥ सेनाहता
कृतंकार्यंमध्येचांतरदायिनी॥ इदानींत्वांहिपश्यामियथारूपमवस्थितं॥ २॥सुदर्शनंचतेरूपंकथंत्यक्ष्येहमद्यवै॥ पित्रा
नियुक्तोयज्ञार्थंतिष्ठेतिमधुसूदन ॥ ३॥ स्वमश्वंरक्षतादेवमयाकस्माद्विलोकितः॥ यथाकाचंविचिन्वन्हिलभेद्दिव्यंम
णिंतथा॥ ४॥ अर्जुनार्थंत्वयापुण्यंयुद्धेपूर्वंसमर्पितं ॥ अधुनास्वशरीरंहिनियोजयसिकेशव ॥ ५ ॥ चक्रहस्तंधारया
मिपार्थंचरथिनांवरं॥ ममतातस्ययज्ञेऽस्मिन्यथाजायेतदैवतं ॥ ६ ॥ एतावदुक्त्वावचनंचक्रहस्तंपरामृशत् ॥ दक्षि
णेनकरेणैवकरंकृष्णस्यसंगरे॥ ७॥वामहस्तेनदेवस्यपदंजग्राहवेगतः ॥ ललाटेस्वेपदंस्थाप्यसंमुखोऽर्जुनमाद्रवत्
॥८॥ तमायांतंसकृष्णंहिपार्थोऽपिव्यचरत्तदा॥ कृष्णाज्ञयाशराणांस्वेकार्मुकेसंदधेशतं॥ ९ ॥ समाकिरत्तथाभूतंसु
चित्रंजनमेजय॥ पार्थंपदाताडयित्वाताम्रकेतुर्महाबलः॥ १० ॥ जग्राहकृष्णसंयुक्तंबाहुभ्यांसंगरेमुदा ॥ ततःकृष्णेन
चाक्षिप्तःपपातधरणीतले॥ ११ ॥ पततातेनतौकृष्णावाकृष्टौहस्तवेगतः॥ पतितौतावपितदापृथ्व्यांमोहसमन्वितौ॥

॥ १२ ॥ उत्थितःस्वयमेवासौयावत्पश्यतिभूतले ॥तावद्ददर्शतौयातौतुरंगौस्वपुरंप्रति॥ १३ ॥ हतावशेषान्वीरांस्ता
न्गृहीत्वाप्रययौनृप ॥ मयूरकेतुंसंप्राप्यकालेनकियतातदा॥१४॥ स्थितोबहिःपुराभ्याशेरम्येवैयज्ञमंडपे ॥ पुत्रंवीक्ष्या
गतंराजाहयौचपरमंबलं ॥ १५ ॥ प्रत्युवाचहसन्वीरःपुत्रंस्वंतंशिखिध्वजः॥ मयूरध्वजउवाच पुनरेवहयोव
त्ससंप्राप्तोवर्षवर्जितः॥ १६ ॥ द्वितीयःकस्यतुरगोनृपतेर्धारितस्त्वया ॥ तंपुत्रःप्रत्युवाचेदंनमस्कृत्याग्रतःस्थितः ॥ दी
क्षितंशृंगहस्तंहिमृगाजिनपरिग्रहं॥ १७॥ ताम्रध्वजउवाच यज्ञार्थंधर्मराजेनसकृष्णोहयरक्षणे ॥ नियुक्तःस
व्यसाचीहिधनुर्विद्याविशारदः ॥ १८ ॥ वीरैःपरिवृतोधीरैःसमयावीक्षितःपुरि॥ बभ्रुवाहस्यनृपतेस्तुरंगंपरिरक्षतः॥
॥१९ ॥तत्रयुद्धंव्यवसितंयादृशंपृच्छमानिनं ॥ निजंप्रधानंबलिनंवक्तारंबहुलध्वजं ॥ इतिपुत्रवचःश्रुत्वाऽमात्यंपप्र
च्छसादरं॥ २०॥ बहुलध्वजउवाच प्रद्युम्नप्रमुखावीराःपांडवार्थेमहाबलाः॥ पातितास्तवपुत्रेणपश्चात्कृष्णौ
हियोधितौ ॥ २१ ॥ ताभ्यांयुद्धंमहत्कृत्वागृहीत्वाकृष्णमाधवौ॥ तस्मिन्रणेपातितौतौमूर्छितौतवसूनुना॥२२॥ त
तःपरंद्वौतुरगौनिर्गतौस्वेच्छयारणात्॥ एतयोःपृष्ठतःप्राप्तस्ताम्रकेतुर्निजंपुरं ॥ २३ ॥ मूर्छांत्यक्त्वाकृष्णपार्थौकिंकर्ता
रौनवेद्मितत्॥ वयंकुशलिनःप्राप्ताःसहयाःसंस्थितंत्विदं॥ २४॥ मयूरध्वजउवाच अकार्यंतुमहत्कृत्वापुत्रःप्रा
प्तोममांतिकं॥ गृहीत्वातुरगौमंदोहाकष्टंवंचितोऽस्म्यहं ॥ २५ ॥ परित्यज्यवशंप्राप्तौहृषीकेशधनंजयौ॥ हयाभ्यांनैव
मेयज्ञोभविष्यतिमतिर्मम ॥ २६ ॥ पुत्रकःशत्रुरूपेणप्राप्तोमांबाधितुंगृहे ॥ यदिदेवस्त्वयादृष्टोभगवान्मधुसूदनः॥
॥२७॥सोर्जुनोयुद्धसमयेविनातंकथमागतः॥ यथाहिदुर्भगानारीपतिंप्राप्यनिशामुखे ॥ २८ ॥ कदाचिद्दैवयोगेन
निद्रांप्रकुरुतेतथा॥त्वयाकृतंहरिंत्यज्यगच्छदूरेहिमद्गृहात्॥२९॥वेत्सित्वमात्मनोबुद्धिंधन्यांतुरगसंग्रहात्॥ तुलसीका
ननंत्यक्त्वाविजयाहिसमाश्रिता ॥ ३० ॥ वरांचंपकजांमालामधःकृत्वासुमोहितः॥ कस्तुगृह्णातिसरसोधत्तूरकुसुमस्र
जं॥ ३१ ॥ यज्ञंत्यक्त्वागमिष्यामिहयौदूरेक्षिपाम्यहं॥ स्थानंशंससुदुर्बुद्धेयत्रतौकृष्णपांडवौ॥ ३२॥ जैमिनिरु
वाच एवंविनिश्चयंकृत्वास्थितःसन्नृपतिर्गृहे॥ सपत्नीकःकृष्णकांक्षीपुत्रंगर्हन्पुनःपुनः॥ ३३ ॥ कृष्णोमणिपुरेवु

 

द्धः प्रबुद्धाश्चेतरेजनाः ॥ ततःकृष्णंसव्यसाचीप्राहेदंवचनंनृप ॥ ३४ ॥ अर्जुनउवाच क्वगतौतुरगौनाथक्वचायं भूपतिर्गतः ॥ तत्रमांनयदेवेशयत्रयुद्धंप्रजायते॥३५॥ श्रीवासुदेवउवाच हयौरत्नपुरंपार्थगतौमन्येमहाहवात् ॥ तत्रगच्छामहेसर्वेमयूरध्वजपालिते ॥ ३६ ॥ त्वंमयासहितश्चाग्रेयांतुवीराश्चपृष्ठतः॥अग्रेतेदर्शयिष्यामिमयूरध्वजसाहसं ॥ ३७ ॥ गृहीत्वापांडवंहस्तेप्रययौतंनृपंप्रति ॥ पृष्ठतोनिर्गतंसैन्यंपांडवस्यमहात्मनः ॥ ३८ ॥ वासुदेवस्ततः पार्थमिदंवचनमब्रवीत् ॥ श्रीवासुदेवउवाच दीक्षितस्यपुरंरम्यंदिव्यप्राकारतोरणं॥ ३९ ॥ पार्थपश्यनृपस्यास्यचरितंमानसंतथा॥ प्रतारयितुमायातेमयिसत्यंनमोक्ष्यति॥४०॥ वृद्धोहंब्राह्मणोभूत्वाप्रार्थयेयादृशंनृपं॥ त्वांबालकंकरिष्यामिहितार्थंतवसुव्रत ॥ ४१ ॥एह्यागच्छमयासार्धंप्रविशामिपुरंमहत्॥ निशामध्येचरिष्यामिरक्षितंबहुभिर्जनैः॥ ४२॥ जैमिनिरुवाच प्रविश्यतौतथाभूतौनिशामध्येत्वपश्यतां ॥निद्रितानांजनानांहिस्त्रीयुतानांच चेष्टितं ॥ ४३ ॥ दृष्टाःकृष्णेनतेलोकावरमंचकशायिनः ॥ परस्परंप्रब्रुवाणाःकौतुकेनजनाधिप ॥ ४४ ॥ कश्चित्पुमान्निजांकांतांचंद्रदीपेनभासितां॥ गृहीत्वावदनंतस्याःस्वकरेणाब्रवीद्वचः ॥ ४५ ॥ सर्वांगानिचतेवीक्ष्यभद्रेकुवलयाक्षिमे ॥नतथाजायतेतृप्तिर्यथाकृष्णविलोकने॥ ४६॥ नार्युवाच सकृष्णास्मिध्रुवंनाथरतिकालेहिपश्यसि ॥ मल्लोचनस्थंकृष्णंतेमोक्षंमन्येसमागतं॥ ४७॥ प्रियउवाच गृहीताःकुटिलाभद्रेमदीयाःशिरसिस्थिताः॥ त्वयाकरेणवामेनभिन्नकेशोनकिंभवे॥ ४८॥ नार्युवाच मुंचाधरपुटंधीरमाभिंधिकुचमंडलं॥ सुवृत्तयोःकृतोभेदःस्खलनायोपजायते॥ ४९॥ पुरुषउवाच सुवृत्तानांमौक्तिनांत्यक्तसंगाविमौकुचौ ॥ तावत्संपीडयिष्यामिभवेतांकृष्णचूचुकौ॥ ५० ॥ जैमिनिरुवाच एवंविधानिवाक्यानिशृण्वन्रात्रौजनार्दनः॥ ततःप्रभातसमयेवर्त्तमानेऽर्जुनान्वितः॥ ५१ ॥ प्रययौनृपतिंद्रष्टुमुपविष्टंवरासने॥ विविधैःपार्थिवैर्गुप्तंमंडपेभूसुरैर्वृते ॥ ५२ ॥ कस्तूरिनिकरैश्चंद्रकलाभिश्चैवसंयुते॥ नानारत्नचतुष्केथतंददर्शजनार्दनः॥ ५३ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेताम्रध्वजविजयोनामचतुश्चत्वारिंशोऽध्यायः॥४४॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥

जैमिनिरुवाच दीक्षितंजाययायुक्तंतुरंगद्वयसंयुतं ॥ तमब्रवीत्तदाविप्रःस्वस्तीतिप्रथमंवचः ॥ १ ॥ द्विजउवाच
स्वस्तितेनृपशार्दूलविद्धिमांसंगतंद्विजं ॥ सशिष्यंपश्यसंप्राप्तंमंडपेयज्ञकारिते ॥ २ ॥ मयूरध्वजउवाच समुत्थि
तोऽस्म्यहंविप्रनमस्कर्तुंसशिष्यकं ॥ भवंतंयावदेवात्रतावत्स्वस्तिप्रभाषसे ॥ ३ ॥ नमस्कारंविनाविप्रस्वस्तिब्रूतेजना
ययः ॥ शापेनकिंततःकार्यंतस्माद्युक्तंनतेकृतं ॥ ४ ॥ जैमिनिरुवाच पपातदंडवत्पश्चाद्वासुदेवस्यचाग्रतः ॥ स
मुत्थापितएवासौकृष्णेनामितबुद्धिना ॥ ५ ॥ पप्रच्छनृपतिर्भूयोहरिंप्रच्छन्नभूसुरं ॥ कस्मात्प्राप्तंपूज्यपादैःसशिष्यैर्मम
मंडपं ॥ ६ ॥ किंप्रियंभवतांकार्यंप्रब्रुवंतुमयाधुना ॥ धन्योऽस्म्यनुगृहीतोऽस्मिनादेयंममविद्यते ॥ ७ ॥ विप्रउवाच
नमस्कारंविनाविप्रैःस्वस्तिवाच्योनराधिपः ॥ विज्ञप्तिकालेत्वपरैर्नमस्कार्योमहीपतिः ॥ ८ ॥ राजोवाच आदे
शोदीयतांमत्यमार्यैरद्याविशंकया ॥ कुर्वेऽहंसकलंकार्यंजीवितेनधनेनच ॥ ९ ॥ ब्राह्मणउवाच शृणुराजन्प्रव
क्ष्यामियदर्थमहमागतः ॥ रम्याद्धर्मपुरात्कर्तुंविवाहंस्वसुतस्यहि ॥ १० ॥ कृष्णशर्माद्विजस्तेत्रकन्यायुक्तःपुरोहितः ॥
विद्यतेमान्यशीलोयंमत्वादास्यतिकन्यकां ॥ ११ ॥ आयामिपुत्रसहितोयावत्तेनगरंप्रति ॥ तावन्मार्गेवनेघोरेसिंहः
कोपसमन्वितः ॥ १२ ॥ जग्राहपुत्रंतरुणंपश्यतोममपार्थिव ॥ ततोमयास्वपुत्रस्यमोक्षणेचोद्यमःकृतः ॥ १३ ॥ स्मृ
तोन्नृसिंहस्तत्राशुनागतःस्मरणान्मम ॥ दुःखितंमांसवैसिंहःप्रत्युवाचहसन्निव ॥ १४ ॥ मनुष्यवाक्पीडयन्मेपुत्रगा
त्रंतदानखैः ॥ दंष्ट्राभिर्भीषणाभिश्चतर्जयन्लांगुलेनमां ॥ १५ ॥ सिंहउवाच वृथाश्रमंहिविप्रेंद्रपुत्रंप्रतिकरि
ष्यसि ॥ मयाग्रस्तंहिकालेननान्यस्तारयितुंक्षमः ॥ १६ ॥ गच्छशिष्येणसहितःस्वगृहंमाविचारय ॥ हिंस्राणांपुरतोवा
सोनसुखायोपजायते ॥ १७ ॥ अन्यंजनयपुत्रंत्वंयस्तेलोकप्रदोभवेत् ॥ अपुत्रस्यपरोलोकोनास्तिवेदेनभाषितं ॥ १८ ॥
ब्राह्मणउवाच मांभक्षयित्वासिंहत्वंमुंचपुत्रंहिलोकदं ॥ वृद्धस्याल्पायुषोव्यर्थंजीवितंपुत्रवर्जितं ॥ १९ ॥ सिंह
उवाच वयंतुमृत्युनाग्रस्तंघातयामोजनंक्वचित् ॥ साहाय्यकारकाःसर्वेसर्पहिंस्रजलादिकाः ॥ २० ॥ तवायुष्यंहिब
हुलंगतायुस्तवपुत्रकः ॥ तस्माद्गच्छमयाज्ञप्तःकिमिदंक्रियतेत्वया ॥ २१ ॥ ब्राह्मणउवाच केनोपायेनदानेनत

पसावाप्रमुंचसि॥ तदाप्रोक्तंकेसरिणात्वत्तःकिंप्रार्थ्यतेनृप॥ २२॥ मयूरध्वजउवाच विप्रेंद्रमामकेराष्ट्रेक्षुद्रः सिंहोनविद्यते॥ नारसिंहंविनाकोऽन्यस्तवपुत्रंप्रधारयेत्॥ २३॥ ब्राह्मणउवाच सिंहेनप्रार्थितंकिंचित्त्व त्तोयन्नृपसत्तम॥भविष्यतिहितद्देयंयत्त्वांयाचतिकेसरी॥२४॥ राजोवाच किंप्रार्थितंकेसरिणामत्तोदास्यामि तेऽनघ॥तद्ब्रूहिशीघ्रंविप्रेंद्रनानृतंममभाषितं॥ २५॥ ब्राह्मणउवाच प्रदास्यसिकथंतत्तुमयायत्प्रार्थ्यतेकि मु॥अपुत्रत्वंदारुणंहिकःप्राणान्दयितान्नृप॥ २६॥सिंहेनप्रार्थितंदाताभवांश्चेच्छृणुदारुणं॥ तेनोक्तोऽहंमहारण्ये शरीरार्धंसमानय॥ २७॥ मयूरकेतोःपुत्रंतेततोमुंचामिभूसुर॥त्वदीयंतपसादग्धंवृद्धंगात्रंनरोचते॥ २८॥ नाना विधफलैःपुष्टंदिव्यदुग्धरसैर्वपुः॥ मयूरकेतोर्निर्भिन्नंसुप्रियंममदीयतां॥२९॥यावच्चनानयेगात्रंतादृशंतावदेवहि॥ पुत्रंनतेभक्षयेहंसत्यमेतद्वदामिते॥ ३०॥ ब्राह्मणउवाच किमर्थंस्वशरीरंहिराजाभेत्स्यतिसुंदरं॥ परार्थेनैवग च्छामिमृगाधिपनराधिपं॥ ३१॥ सिंहेनोक्तंपुनरपिगच्छविप्रनृपंप्रति॥ ददौदधीचिरस्थीनिकवचंभानुजोयथा॥ ॥ ३२॥ तथाप्रदास्यतिवपुर्विप्रार्थेनान्यथाभवेत्॥ यशस्विनांशरीरेस्वेप्रीतिर्नमहतीक्वचित्॥३३॥ रणमध्येपातनी यंद्विजार्थेबाहुजैर्वपुः॥ त्वंविप्रसुतहीनोऽसिततोयाहितदंतिकं॥३४॥ तंप्रार्थयमहीपालंगत्वाशोकविनाशनं॥बहवो जनितास्तेनपुत्राराज्यंचिरंकृतं॥ ३५॥ त्वांवीक्ष्यकृपयायुक्तोभविष्यतिनसंशयः॥ अर्थिनाप्रार्थ्यतेसर्वंजनोयच्छतु वानवा॥ ३६॥ ब्राह्मणउवाच इत्थंतेनवनेप्रोक्तंसिंहेनाहंप्रचोदितः॥ सशिष्यस्त्वद्गृहंप्राप्तःपुत्रशोकातुरोनृ प॥ ३७॥ केनाप्युपायेनवनेसिंहात्पुत्रंसमानय॥अदृष्टःकेसरीजातःकथयन्दारुणंवचः॥ ३८॥ शरीरार्धंविनातस्य नागंतव्यंमहीपतेः॥ आगतस्यनतेपुत्रंविनागात्रंप्रमोचये॥ ३९॥ इतितेनयदाप्रोक्तंतदात्वामहमागतः॥ निवेद्यदुः खंभूपालेस्थातव्यंदुर्बलैर्जनैः॥ ४०॥ रामचंद्रेणवीरेणब्राह्मणस्यमृतःसुतः॥ ब्रह्मचर्यव्रतकरःपुरानीतःस्वपौरुषात्॥ ॥ ४१॥ नृपाशयाहंपुत्रार्थीभवंतंसमुपागतः॥रामतुल्यंहिसत्वेनमत्वाधैर्येणपार्थिव॥ ४२॥ नृपउवाच तिष्ठ विप्रेंद्रदास्यामिमंडपेस्वंकलेवरं॥ सर्वेषामत्रविप्राणामग्रेसाधूदितंमया॥ ४३॥ जैमिनिरुवाच एवमुक्त्वाव

चोराजापुत्रंराज्येन्यवेशयत् ॥ सुस्नातोजान्हवीतोयैःशालग्रामशिलाजलैः ॥ ४४ ॥ तुलसीदलजांमालांकंठेकृत्वाहस
न्निव ॥ शंखचक्रांकितंगात्रंकृत्वाराजामुदान्वितः ॥ ४५ ॥ सभामंडपमागत्यसर्वान्विप्रानुवाचसः ॥ मयूरध्वजउवा
च एनंकृष्णंविप्ररूपंपुत्रार्थंमांसमागतं ॥ ४६ ॥ अर्चयामिस्वदेहार्धाद्यथापुत्रयुतोभवेत् ॥ पश्यंतुकौतुकंसर्वेब्राह्मणा
यज्ञवाटके ॥ ४७ ॥ वार्धकीकाःसमायांतुकरपत्रसमन्विताः ॥ द्वौस्तंभौरोपयंत्वत्रभिंदंतुममस्तकं ॥ ४८ ॥ येषांप्रि
योऽहंसततंतैर्नवाच्यंहिदूषणं॥ ४९ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेमयूरध्वजदेहार्धदाननिश्चयोनामपंचचत्वा
रिंशोऽध्यायः ॥ ४५ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥
जैमिनिरुवाच तस्यवाक्यंहितेश्रुत्वाप्रधानाश्चद्विजास्तदा॥ कंपिताश्चभियायुक्ताबभूवुर्नृपसत्तम॥ १ ॥ प्रब्रुवंतःसक
रुणंकुतःकालनिभोद्विजः ॥ आगतःप्राणहरणोराज्ञोस्माकंहिनिर्दयः ॥ २ ॥ बहवोयाचकादृष्टास्त्वीदृशोनकदाचन ॥
राज्ञोदेहंयाचयेत्कोनिर्दयोनिरपत्रपः ॥ ३ ॥ सिंहोहिघातुकोलोकेप्रसिद्धोमांसभक्षकः ॥ अयंचमानुषोजात्याब्राह्म
णोज्ञानवांस्तथा ॥ ४ ॥ स्वार्थनिष्ठःकथंजातोभूत्वाब्राह्मणजातिजः ॥ अस्माकंकउपायोऽत्रभावियत्तद्भविष्यति ॥
॥ ५ ॥ अवश्यंभाविभावानांप्रतीकारोनविद्यते ॥ सत्यवादीप्रियातिथ्यःकथंवार्योमहीपतिः ॥ ६ ॥ किमयंविप्ररूपे
णपुराप्राप्तोयथाबलिं ॥ वामनोयज्ञसमयेतथाविघ्नोहरिंद्विजं ॥ ७ ॥ एवंवदंतस्तेसर्वेतदाराज्ञानिवारिताः ॥ ततोनृ
पोहर्षितोभूद्दत्वादानान्यनेकशः ॥ ८ ॥ तदायातावार्धकीकाःस्तंभौद्वौरोपितौहितैः ॥ तिर्यक्काष्ठंकृतंचैकंदृढंबद्धंचरज्जु
भिः ॥ ९ ॥ आदिदेशतदाराजाकरपत्रंस्वमस्तके ॥ धर्त्तुंस्वयंहर्षयुतःसर्वेषामेवपश्यतां॥ १० ॥ क्षालयित्वाविप्रपादौरा
जावचनमब्रवीत् ॥ शरीरार्द्धेनगोविंदःप्रीयतांयज्ञनायकः ॥ ११ ॥ अस्मत्कुलप्रसूतानांनराणांशुभमिच्छतां ॥ स
भायांविप्रकार्येहिददतांयौवनंधनं ॥ १२ ॥ गृहाणविप्रभिन्नंमेशरीरार्द्धंनृकेसरी ॥ संतोषंपरमंयातुभिनद्मिस्वंकलेव
रं ॥ १३ ॥ रेरेमल्लामयाज्ञप्ताःकर्षंतुस्वबलान्मम ॥ गात्रंबद्धंपट्टगुणैर्माचिरंयातुभूसुरः ॥ १४ ॥ धन्योस्मिन्भूतलेजातो
ब्राह्मणेनामुनाकृतः ॥ शृण्वंतुलोकाःसकलाभाषितंममसादरं ॥ १५ ॥ परोपकृतयेयेषांशरीरंवित्तसंग्रहः ॥ यातियत्त

त्स्थितंशोच्यमुभयंदानवर्जितं ॥ १६ ॥ तस्मात्प्रहर्षःकर्तव्योमांनिरीक्ष्यसभासदैः ॥ जैमिनिरुवाच हाहाभूतं तदाराष्ट्रंवीक्ष्यराजानमेवच ॥ १७ ॥ क्रंदमानंहिसंजातंकुररीगणसन्निभं ॥ महिषीतस्यनृपतेःसमागत्याब्रवीन्नृपं ॥ ॥ १८ ॥ विप्रस्यपुरतोहृष्टारम्याराजन्कुमुद्वती ॥ कुमुद्वत्युवाच राजन्विप्रायदेहार्धंत्वयादेयंमयाश्रुतं ॥ १९ ॥ तवार्धगात्रंभार्यास्मिमांदत्वासत्यवाग्भव ॥ सजीवंदीयतेदानंभिन्नंतेगतजीवितं ॥ २० ॥ परेणभिन्नंपंचास्योनगृह्णातिमतिर्मम ॥ तुर्याशोयदिदेयोहिभवेद्भग्नंहितेवपुः ॥ २१ ॥ अर्धंप्रार्थयतेसिंहःस्त्रीरूपंविद्धिमारिष ॥ प्राणनाथस्यपुरतोयानारीमृत्युमाव्रजेत् ॥ २२ ॥ उत्तमांगतिमाप्नोतिनात्रकार्याविचारणा ॥ तस्यास्तद्वचनंश्रुत्वाविप्रःप्रोवाचसत्वरः ॥ २३ ॥ एकाग्रमनसंज्ञात्वाराजानंवाक्यकोविदः ॥ विप्रउवाच सिंहेनकथितंराजन्वामांगंस्त्रीमहीपतेः ॥ २४ ॥ दक्षिणांगंप्रदेयंमेवामांगंनीयतेकथं ॥ शरीरदक्षिणांगंमेदातुंसिंहायचार्हसि ॥ २५ ॥ नदास्यसिकदाचित्त्वंनिराशोयामितंप्रति ॥ तेनैवप्रेषितोराजन्सामीप्यंतवसुव्रत ॥ २६ ॥ गत्वातंकथयिष्यामिपुत्रंभक्षयथासुखं ॥ एवंविप्रेप्रवदतिश्रृण्वतांवैसभासदां ॥ २७ ॥ पश्यतांकौतुकंचैवराजपुत्रोऽतिहर्षितः ॥ तंब्राह्मणंशिष्ययुतंगिराकोमलयातदा ॥ २८ ॥ संपादयन्पितुःकीर्तिमुवाचपरयामुदा ॥ ताम्रध्वजउवाच योवैपितासपुत्रोहिश्रुतिरेषासनातनी ॥ २९ ॥ ब्राह्मणार्थेहिमत्पित्राशरीरार्धसमर्पितं ॥ शरीरार्धसमग्रंहिपितुर्भवतिपुत्रकः ॥ ३० ॥ प्रसन्नस्तरुणंवीक्ष्यमांसपुष्टंमृगाधिपः ॥ भविष्यतिमहाबुद्धेपुत्रस्यचमहद्यशः ॥ ३१ ॥ भीष्मरामादिभिर्लब्धंपितृवाक्यकरैर्यशः ॥ ब्राह्मणउवाच सत्यंत्वंभाषसेपुत्रवचःकेसरिणःश्रृणु ॥ ३२ ॥ पुत्रेणभार्ययाभिन्नंमयूरध्वजमस्तकं ॥ द्विधाजातंशरीराद्धिदक्षिणांगंत्वमानय ॥ ३३ ॥ कथंतदन्यथाकर्तुंशक्यतेमद्विधेनतु ॥ जैमिनिरुवाच ततःसनृपशार्दूलोवारयित्वाप्रियांसुतं ॥ ३४ ॥ तयोःकरेददौराजाकरपत्रंमुदान्वितः ॥ स्त्रीपुत्रयोःपुरस्तस्यब्राह्मणस्यमहात्मनः ॥ ३५ ॥ जपन्केशवरामेतिनृसिंहेतिचधैर्यतः ॥ ददृशुस्तंतथाभूतंसर्वेदेवाःसवासवाः ॥ ३६ ॥ यदाधृतंमस्तकेस्वेकरपत्रंमहात्मना ॥ महतांचाभवत्ग्लानिर्दुःखिताःपौरजाजनाः ॥ ३७ ॥ भार्याजग्राहतद्वाक्यात्करपत्रंचपुत्रकः ॥ गायंतीरामरामेतिब्राह्मणंवाक्यमब्रवीत् ॥

॥ ३८ ॥ सर्वेषांश्टण्वतांतत्रभिनद्मिस्वपतिंद्विज ॥ नृसिंहेनपुराभिन्नःस्तंभोयद्वत्सुकोपिना ॥ ३९ ॥ विदारितोदैत्यनाथ
स्तद्वन्नाथंमहामतिं ॥ नृपउवाच करपत्रंकरस्थंतेप्रियेपश्यामिताद्दशं ॥ ४० ॥ केतक्याःकोमलंपत्रंशरीरेसुख
दंयथा ॥ त्वंभिधिकंमेनिःशंकंकरजैरिवसंगमे ॥ ४१ ॥ यथातत्रनमेपीडाजायतेचनखैःप्रिये ॥ तथाद्यकरपत्रस्यदं
तैःकमलकोमलैः ॥ ४२ ॥ ततःसातस्यभूपस्यमस्तकंपुत्रसंयुता ॥ बिभेदकरपत्रेणसमक्षंकृष्णपार्थयोः ॥ ४३ ॥ हाहा
कारोमहानासीद्भिन्नेकेजनमेजय ॥ वामनेत्रेजलंप्राप्तंतदाविप्रोदुरासदः ॥ ४४ ॥ प्रत्युवाचमहीपालंभिन्नंभ्रमित
ततारकं ॥ नग्रहीष्यामितेगात्रंरुदन्यच्छसिमारिष ॥ ४५ ॥ अभावोपहृतंदानंनगृह्णंतिविपश्चितः ॥ विनापुत्रेणमेस्व
गौरुद्वस्तिष्ठतितिष्ठतु ॥ ४६ ॥ सिंहोयातुयथास्थानंगृहीत्वाममबालकं ॥ रुदित्वावामनेत्रेणराजादेहार्धमप्ययं ॥ ४७ ॥
ददातितदहंविप्रःकथंगृह्णामिसत्तमः ॥ एतावदुक्त्वावचनंपरित्यज्यपहीपतिं ॥ ४८ ॥ प्रययौपश्यतांतेषांपार्थयुक्तोज
नार्दनः ॥ गच्छंतंब्राह्मणंवीक्ष्यपतिंप्राहकुमुद्वती ॥ ४९ ॥ गृहीत्वामस्तकंभिन्नंकराभ्यांसुमुखीसती ॥ कुमुद्वत्युवा
च सत्यव्रतमहाबुद्धेवदान्यानांशिरोमणे ॥ ५० ॥ ब्राह्मणस्त्वांमयाभिन्नंपरित्यज्याद्यगच्छति ॥ नाथवारयगच्छं
तंविप्रंदेहार्धयाचकं ॥ ५१ ॥ गतेऽगृहीत्वाविफलातवकीर्तिर्भविष्यति ॥ नृपउवाच भिन्नंत्वयाधृतंभद्रेमस्तकं
मामकंपुनः ॥ ५२ ॥ ततोऽब्रवीमिविप्रेंद्रंव्रजंतंकाननेगृहान् ॥ मागच्छमुनिशार्दूलश्रुत्वायाहिवचोमम ॥ ५३ ॥ वा
मांगलोचनेप्राप्तंयस्मात्तोयंद्विजोत्तम ॥ दक्षिणांगंब्राह्मणार्थेमदीयंसाधुसंगतं ॥ ५४ ॥ वामांगंपतितंभूमौव्यथाया
तीतिरोदितं ॥ नव्यथाकरपत्रान्मेतीक्ष्णाद्भवतिताद्दशी ॥ ५५ ॥ याद्दशीविप्रविमुखाद्वामांगादिहजायते ॥ इतितस्यवचः
श्रुत्वाप्रसन्नःपरमेश्वरः ॥ ५६ ॥ आत्मनोदर्शयामासस्वरूपंभूपसन्निधौ ॥ समालिंग्याब्रवीद्वीरंकृष्णःकमललोचनः ॥
॥ ५७ ॥ धन्योऽसिनृपशार्दूलमयूरध्वजसुव्रत ॥ परीक्षितोऽसिबहुधामयात्वंपांडवेनच ॥ ५८ ॥ यज्ञंकुरुमहाबाहो
सपत्नीकःसपुत्रकः ॥ ताम्रध्वजेनसंग्रामेतोषितौतवसूनुना ॥ ५९ ॥ मूर्च्छितौसैन्यसहितौकृतौवीरप्रमाथिनौ ॥ मांनि
रीक्ष्यकुतोदुःखंजायतेप्राणिनामिह ॥ ६० ॥ देहार्धंहित्वयादत्तंमद्वाक्येनमहात्मना ॥ तवयज्ञेभविष्यामिकर्मकर्तामि

हामते ॥ ६१ ॥ यस्माद्भक्तपराधीनोजितोस्मितवसूनुना ॥ युधिष्ठिरस्यतुरगंगृहाणत्वमपिस्फुटं ॥ ६२ ॥ द्वौहयौसमयेद्दु
त्वाकीर्तिंप्राप्नुहिशोभनां ॥ कीदृशस्तवगात्रस्यभेदोऽयंममपश्यतः ॥ ६३ ॥ मयूरध्वजउवाच धामतेपरमंवि
ष्णोपदंचबहुलंप्रभो ॥ भिन्नंकृत्वाशरीरंमेप्रविष्टंयद्बहिःस्थितं ॥ ६४ ॥ श्रीपतेवासुदेवाद्यधन्योहंतेकृतःप्रभो ॥ किंमे
यज्ञेनगोविंदयदितुष्टोसिकेशव ॥ ६५ ॥ दृष्टेत्वयिजगन्नाथेकीर्तितेनमितेश्रुते ॥ कल्पकोटिकृतंपुण्यंभवतीतिनसंशयः
॥ ६६ ॥ त्वयाप्रोक्तंकर्मकर्तातथाकुरुजनार्दन ॥ तुरंगौमांचमत्पुत्रान्मत्प्रियांचमहाजनं ॥ ६७ ॥ गृहीत्वा
यज्ञकर्तॄंश्चयज्ञोपकरणानिच ॥ स्वकरेणमहाविष्णोहृदयंस्वंनिवेशय ॥ ६८ ॥ भवंतंप्राप्यगोविंदंमयाचेत्क्रियते
क्रतुः ॥ प्रहसिष्यंतिमांविप्रावेदवेदांगपारगाः ॥ ६९ ॥ महांतमग्निमुत्सृज्यहिमेनपरिपीडितः ॥ कःसेवेतनरोमूढोवि
स्फुलिंगान्जनार्दन ॥ ७० ॥ तृषितोजान्हवीतोयंहित्वानीहारमाव्रजेत् ॥ मूढधीर्वाजिनौप्राप्यत्वामवज्ञायमाधवं ॥
॥ ७१ ॥ यजतेहयमेधाभ्यांसदंड्योरविसूनुना ॥ पुत्रकोमेकृष्णपार्थौत्यक्त्वायुद्धेसमागतः ॥ ७२ ॥ भाग्योदयान्मयादृ
ष्टौनरनारायणाविमौ ॥ नमस्तेपुंडरीकाक्षब्रह्मणेगुरवेनमः ॥ ७३ ॥ ब्रह्मगोलोकसाहस्रैःफलितायनमोनमः ॥ हंत्रे
गोप्त्रेनमस्तेऽस्तुस्रष्टिकर्त्रेप्रमीढुषे ॥ ७४ ॥ अनंतायसुपूर्णायवेदनिःश्वासकारिणे ॥ श्रीधरायनमोनाथशेषमंचकशा
यिने ॥ ७५ ॥ लवणघ्नायशांतायनमस्तेकलितायच ॥ ज्ञानायज्ञानगम्यायनमःकालजितायच ॥ ७६ ॥ नमोदृश्याय
वेद्यायनमःपारंपरायच जैमिनिरुवाच एवंस्तुतस्तदातेनविश्वात्मामधुसूदनः ॥ ७७ ॥ प्रसन्नात्माऽभवत्कृष्णोभ
क्तिपार्थायदर्शयन् ॥ त्रिरात्रंचस्थितस्तत्रभक्त्यातुष्टोजगत्प्रभुः ॥ ७८ ॥ केशवेनसमंपश्चात्प्रययौवाजिपालने ॥ दत्वा
कृष्णकरेसर्वंवित्तंजीवितमेवच ॥ सुहृद्भिःसहितोराजापार्थमालिंग्यचाग्रतः ॥ ७९ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीये
मयूरध्वजविजयवर्णनंनामषट्चत्वारिंशोऽध्यायः ॥ ४६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
जैमिनिरुवाच तुरंगमौगतौराजन्पुरेवैवीरवर्मणः ॥ सर्वसैन्ययुतःकृष्णःपालयन्नन्वगान्मुदा ॥ १ ॥ धर्मश्चतुष्प
दोयत्रतेनभूपतिनाकृतः ॥ जामातायस्यशमनोराष्ट्रेतिष्ठतिमूर्तिमान् ॥ २ ॥ सारस्वतपुरेरम्येनिवसंतिहिधार्मिकाः ॥

धर्मार्थकाममोक्षाणांपारगायत्रमानवाः॥ ३॥ स्वप्नेऽपिकुत्सितेमार्गेनगच्छंतिकदाचन॥ अर्जुनंकृष्णसहितंरक्षंतंव
रवाजिनौ॥ ४॥ शुश्राववीरवर्मासौराष्ट्रेबहुलसेवके॥ आदिदेशततोराजाग्रहणार्थमहाबलान्॥५॥तुरगौमामकेरा
ष्ट्रेपांडवस्यमहात्मनः॥ व्यचरेतांचिरंरम्येपौरुषेणाहरंतुतौ॥ ६॥ नृपस्यवचनंश्रुत्वानिर्गतंविविधंबलं॥ महावीराःपं
चधीराग्रहणार्थंविनिर्गताः॥ ७॥ सुभालःसुरभोलीलःकुवलःसरलश्चते॥ पुत्रादिव्यरथारूढाधन्विनोवीरवर्मणः
॥ ८॥ तेप्राप्ताःपांडवबलंतृणीकृत्यरणस्थितान्॥गृहीत्वावाजिनौरोषात्प्रयाताभूपसन्निधौ॥९॥यावद्गच्छंतितेवीरान्नृ
पंप्रतिमहाबलाः॥बभ्रुवाहेनराजेंद्रआहूतास्तावदेवहि॥१०॥शंखनादेनवीरांस्तान्कृत्वाबधिरकर्णकान्॥ पार्थपुत्रस्त
दारोषाद्व्यधमच्छत्रुवाहिनीं॥ ११॥ बभ्रुवाहोमहातेजाःशरैःकनकचित्रितैः॥ ततोयुद्धंसमभवत्तुमुलंभूपदारुणं॥
॥ १२॥ केशाकेशिरणेऽतीवमुष्टामुष्टिनखानखि॥ पदातिगणमेवाग्रेजग्मुर्वीरामदोत्कटाः॥ १३॥ रथागजैःसंग
तास्तेगजाःकुत्रापिवाजिभिः॥ विपरीतमिदंजातंरुद्रक्रीडनसन्निभं॥ १४॥ बभ्रुवाहेनवीरेणहन्यमानंबलंमहत्॥
संचुकोचतथाभूतमग्नौचर्माहितंयथा॥ १५॥ संयमिन्याःपतिस्तावत्समागत्यनराधिपं॥ समुत्कृष्टंपार्थबलंघातया
मासरोषितः॥ १६॥ धर्मराजेनपार्थस्यपातितंविविधंबलं॥ हतप्रवीरमत्युग्रंश्वशुरार्थेनराधिप॥ १७॥ पार्थोवीक्ष्य
हतंसैन्यंजामात्रावीरवर्मणः॥ उवाचकेशवंदेवंविस्मयन्निवभारत॥ १८॥ कोसौदेवोहृषीकेशनररूपेणमेबलं॥
तीक्ष्णैःशरैःपातयतेसमक्षंतवमाधव॥ १९॥ वासुदेवउवाच यमंविद्धिमहाबाहोपुरतःस्थितमाहवे॥ प्रार्थितं
चैवकन्यार्थेस्वपुरेवीरवर्मणा॥ २०॥ अर्जुनउवाच किमेतत्कृष्णकथितंयमोनृपसुतापतिः॥कथमेतत्संगतंहि
तत्सर्ववदकेशव॥ २१॥ कृष्णउवाच मालिनीनामकन्यास्यसंजातावीरवर्मणः॥ मानुषंनवरंपार्थवृणुतेभुवि
मानिनी॥ २२॥ यदाप्रष्टापुरागेहेपित्रासामालिनीशुभा॥ कस्तेवरोमयाकार्योमानुषंनेच्छसेयदि॥ २३॥ मालि
न्युवाच धर्मराजायमंताताद्देहित्वंनापरोवरः॥ अन्येम्रतानरायांतियमस्यसदनंप्रति॥ २४॥ धर्मराजशरीरंहि
प्राप्याहंकीर्तिमाप्नुयां॥ कृष्णप्राप्तान्जनान्यास्येस्वगुणैःपतितोषकैः॥ २५॥ नरस्यपाणिग्रहणंप्रथमंक्रियतेमया॥

पश्चाद्दग्धौशरीरंमेयदिस्पृष्टंभविष्यति ॥ २६ ॥ द्वितीयस्यजनस्याहंनाप्नुयांसंगतिंयथा ॥ तथातातविधातव्योधर्मरा
जोहिमेवरः॥ २७ ॥ यानारीपुरुषंप्राप्यपितृदत्तंभुविस्थिता ॥ वंचयित्वानिजंकांतमपरंयातिमोहिता॥ २८॥ तांतु
वैवस्वतोराजानरकेपातयत्यसौ॥ तमेवादौवरंकृत्वानिर्देशेस्थीयतेमया ॥ २९॥ तत्रमांधर्मराजोयंपालयिष्यतिपा
पतः॥ सुगुप्तंसर्वदातातततवपुण्यंभविष्यति ॥ ३० ॥ प्राकृतायसुतादत्ताभवेत्पुण्यप्रदायिनी ॥ किंतुधर्मायमूर्तायद
त्ताऽहंतुशिवप्रदा॥ ३१ ॥ एवंविधंमयातातकर्त्तव्यंत्वदर्दिचिंतितं॥ नानाविधानिकार्याणिधर्मगुप्तानियानिमे॥ तदा
मनोरथोरम्योभविष्यतिहिमामकः ॥ ३२॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेवीरवर्मयुद्धवर्णनंनामसप्तचत्वारिं
ऽशोध्यायः॥ ४७॥ ॥ ७॥ ॥ ७॥ ॥७॥ जैमिनिरुवाच एवंविधं
सुतावाक्यंवीरवर्मानिशम्यतत् ॥ यमसूक्तैर्दिवारात्रंसयमंस्तौतिनित्यशः ॥ १ ॥ मालिनीविधिवद्देवसमाराधनत
त्परा॥ बभूवयौवनंप्राप्यध्यानभावंनसाजहौ ॥ २ ॥ नारदेनतदाज्ञातांचिंतितंनृपतेःसुता ॥ इदृशंकुरुतेभावंनैनांवे
त्तियमःस्वयं ॥ ३ ॥ तंगत्वाकथयिष्यामिभावमस्याःसुशोभनं ॥ धर्मकार्यंप्रकुर्वाणायमप्रीत्यैदिनेदिने॥ ४ ॥ त्वदि
स्थितंमनुष्याणांविंदत्येवसुचेष्टितं॥ समवर्तीकथंमंदोमालिन्याःफलदूषकः॥ ५॥ जैमिनिरुवाच ततोजगा
मदेवर्षिर्यमस्यसदनंप्रति॥ न्यवेदयत्प्रियांतस्मैमालिनींराजकन्यकां॥ ६॥ धर्मराजनजानासिमालिनींत्वामनुव्रतां
सत्यव्रताधर्मरतापुण्यसर्वस्वदायिनी॥ ७॥ त्वामेवप्रत्यहंवेत्तितांत्वंवरयमाचिरं॥ पराशांसफलांसंतःकुर्वंत्येवहिनेत
रे॥ ८॥ मनुष्यवेषमास्थायस्वभृत्यैःसहितोव्रज॥ सारस्वतेपुरेरम्येपालितेवीरवर्मणा ॥ ९॥ चतुष्पदोयत्रवृषोगतातं
काश्चमानवाः॥ पुरीचसात्वयाधन्याभविष्यतिमतिर्मम॥ १०॥ श्रीवासुदेवउवाच नारदंप्रेरयामासपुरेसार
स्वतेयमः॥ वैशाखेमासिशुक्लेवैपक्षेतांवरयाम्यहं॥ ११॥इत्युक्तोनारदस्तेनप्रययौवीरवर्मकं॥कथयामासवृत्तांतंयमे
नोक्तंसुमंगलं ॥ १२ ॥ राजाकन्याविवाहंतुकर्त्तुकामोव्यवस्थितः॥ यमोऽपिनायकानांतुशतमष्टोत्तरंमुदा॥ १३॥
आदिदेशमहाकायान्महाबलपराक्रमान् ॥ महावीरंनिजंचैवतेषांमध्येपुरस्कृतं ॥ १४ ॥ क्षयंप्रधानंरोगाणांनायकं

वाक्यमब्रवीत् ॥ शेषंहिब्रह्महत्यायाःस्वरधातुविनाशकं ॥ १५ ॥ यमउवाच यक्ष्मन्विवाहेरम्येमेस्वभृत्यैःपरिवारितः ॥ आमंत्रितःसमायाहिभुविचित्रपुरंप्रति ॥ १६ ॥ यक्ष्मोवाच कथंसमागमोनाथतस्मिन्राष्ट्रेभविष्यति ॥ विप्रप्रियाश्वतेलोकाराजापिद्विजसेवकः ॥ १७ ॥ विप्राणांपठतांचोग्रोध्वनिर्धूमश्चहोमजः ॥ मन्नेत्रश्रोत्रयोर्दुःखंकरिष्यतिनसंशयः ॥ १८ ॥ प्रमेहंपुत्रकंसूक्ष्मंघृताक्षंमूत्रनाशकं ॥ बहुकालेनजंतूनांमद्गुणैःसंमितंभुवि ॥ १९ ॥ विषूचिकायास्त्वधिकोमहिमाकेनलभ्यते ॥ क्षणेनमानुषंहंतिदासीतेरविनंदन ॥ २० ॥ भ्रातुःस्थानंनपश्यामिपांडोरमिततेजसः ॥ भ्रातुर्भार्याविशालाक्षीशोफाहर्त्रीपरंजनं ॥ २१ ॥ तयासहसुतस्तेनपांडुनासजलोदरः ॥ जनितःस्वगुणैस्तुल्यस्तंकुत्रविनिवेशये ॥ २२ ॥ राजाधर्मपरोनित्यंशुचिश्चैवमहाजनः ॥ यत्रजातोभानुपुत्रतत्राहंकिंशरीरवान् ॥ २३ ॥ कोहंशोच्यतरोनाथव्रणानांपुरतःस्थितः ॥ त्वयासुमानितानांहिपरमाणुनिभःप्रभो ॥ २४ ॥ एतेषांपरमंतेजोभूपतीन्हंतिपौरुषात् ॥ गुरुस्त्रीसंगमरतान्विप्रघ्नान्शिशुघातकान् ॥ २५ ॥ व्रणस्यबहुरूपाणिशतमष्टोत्तरंविभो ॥ विचर्चिकाप्रियायस्यपुत्रश्चास्यभगंदरः ॥ २६ ॥ गुरुस्त्रीगामिनांशिश्नमूलेकिलभगोभवेत् ॥ गुरूणांस्वप्रशास्तॄणांछायांक्वापिनमानवाः ॥ २७ ॥ स्पृशंतिधर्मनिरतावीरवर्मापितादृशः ॥ एतस्यस्फोटराजस्यनिवासस्तत्रनेष्यते ॥ २८ ॥ त्रयोदशविधश्चायंज्वरराट्सान्निपातिकः ॥ गुरुस्तुशंभुजनितःकुतःस्थास्यतितद्दद ॥ २९ ॥ अतिसारश्चवीरोऽसौनायकस्तेमहाबलः ॥ प्रियासंग्रहणीयस्यपुत्रोध्मानश्चभासुरः ॥ ३० ॥ अरोचकःक्रोधनश्चपुत्रःपरमपातकः एतैर्वतोनिवासंक्कप्राप्स्यतेनाथतद्वद ॥ ३१ ॥ शतानित्रीणिशूलानांतानियानिमहात्मनां ॥ गमिष्यंतिलयंतत्रस्थानहीनानिमारिष ॥ ३२ ॥ हिक्काश्वासादयश्चैतेकासकुष्ठामहाबलाः ॥ उपरिस्थावायुभूताभ्रमितुंनक्षमाःपुरे ॥ ३३ ॥ धनुर्वातादयोवाताःकर्णशूलोऽपिभासुरः ॥ नेत्ररोगामहाकायामुखरोगाश्चपातकाः ॥ ३४ ॥ वल्मीकंगंडमालाचतथाऽपस्मारएवच ॥ बालकोडमरूरौद्रौविस्तीर्णाचशिरोव्यथा ॥ ३५ ॥ एतेमुख्यतमारोगास्तथाऽन्येबहवोयम ॥ त्वयाज्ञप्तानगच्छंतिपुरेकस्मान्महीपतेः ॥ ३६ ॥ यमउवाच भवंतोविविधाकारामहारोगामहाबलाः ॥ स्वरूपेणनृपंयांतुदिव्यालं

कारमंडिताः ॥ ३७॥ यथाममपुरेवासःक्रियतेवचनंतथा ॥ सर्वैरपिनृपस्यास्यकर्तव्यंवीरवर्मणः ॥ ३८ ॥ येजीवाः
पापसंयुक्तास्तेपश्यंतुनिपातनान् ॥ रोगान्भयानकान्भूमौशुभान्सुकृतकारिणः ॥ ३९ ॥ मांचपश्यंतिधर्मिष्ठाधर्मरूपं
नचेतरे ॥ कालानलशरीरंहिवीक्षंतेपापकारिणः ॥ ४० ॥ ब्रह्महत्याकृतायेनप्राणिनागतबुद्धिना ॥ ननिस्तीर्णाब्रह्मह
त्यागलत्कुष्ठविशेषतः ॥ ४१ ॥ तस्यगात्रेरोगराजस्थानंतेनात्रसंशयः ॥ त्वयाग्रस्तोजनःकुर्याद्यदिजाप्यंहिशांकरं ॥
॥ ४२ ॥ महारुद्रंसहोमंचदानंविप्राययच्छति ॥ सुवर्णपुरुषंनिष्कैश्चतुर्विंशतिभिःकृतं ॥ ४३ ॥ ततःपरंतस्यगात्रंत्य
ज्यतांसर्वदात्वया ॥ कृतपुण्यस्यपुरतोभृत्यवद्वर्तनंतव ॥ ४४ ॥ क्षयीतुवित्तहीनश्चसोमवारेसमाश्रयेत् ॥ गौतमींसा
गरस्थांचेत्स्नानार्थंमासमात्रकं ॥ ४५ ॥ स्नातमात्रंजनंयक्ष्मन्मापीडयपतिष्यसि ॥ इयंचतेप्रियादेवीपातनीतत्क्षणा
न्नृणां ॥ ४६ ॥ विषूचिकानरंयेनपातकेनप्रगच्छति ॥ देवतार्थेदीयमानंवित्तंहरतिमंदधीः ॥ ४७ ॥ ब्राह्मणान्भोजन
स्थान्हिवियोजयतिपातकी ॥ अन्नमेकःस्वयंभुंक्तेवंचयित्वासुतान्द्विजान् ॥ ४८ ॥ तंप्रियातेमहाभागबाधतेसाविषू
चिका ॥ अन्नदंसुरसेवांहिकुर्वंतंनतुपीडयेत् ॥ ४९ ॥ पितृगोत्रभवांनारींकामयंतिविमोहिताः ॥ नराश्चनार्योऽपित
थापुरुषेषुचसंयुताः ॥ ५० ॥ तेपीड्यंतेप्रमेहेनपुत्रकेणतवप्रभो ॥ सुवर्णतस्कराश्चान्येमूत्रकृच्छ्रेणसर्वदा ॥ ५१ ॥ सु
वर्णसिकतांदत्वासौवर्णंदेवभूषणं ॥ पलं*प्रमाणंतुलितंप्रमेहान्मुच्यतेजनः ॥ ५२ ॥ सुवर्णकमलंदानंकृत्वापूर्णपलेन
तु ॥ द्विजायश्रोत्रियायात्रमूत्रकृच्छ्रात्प्रमुच्यते ॥ ५३ ॥ लिंगपीडाशिवस्वंचयेहरंतिविलोभतः ॥ परप्रभांसमालोक्य
मुखंस्फुरितकारिणः ॥ ५४ ॥ कुंभीपाकादिनरकेपतंतिहेमहारिणः ॥ कुनखाश्चप्रजायंतेमांसपिंडोपमाःपरं ॥ ५५ ॥
शरीरंपांडुसंकाशंपांडुनासहिपीड्यते ॥ ददातिदानंविप्रायमाहिषंशास्त्रसंमतं ॥ ५६ ॥ पिण्याकसर्षपोपेतंजपाकुसुम
पूजितं ॥ तीर्थेरम्येमुद्गलाख्येवैष्णवंकुरुतेजपं ॥ ५७ ॥ त्रिपंचाशत्सहस्राणियोनरस्तंप्रमुंचतु ॥ पांडुनामातवभ्राताऽन
चेत्सोऽपिमरिष्यति ॥ ५८ ॥ अजांप्रयच्छतिनरःश्रद्धयाकांचनावृतां ॥ विप्रायवेदविदुषेशोफामुंचतितंनरं ॥ ५९ ॥

*चतुर्भिर्व्रीहिभिर्गुंजागुंजाःपंचपणःपणान् अष्टौधरणमष्टौचकर्षंतांश्चतुरःपलं तुलांपलशतंप्राहुर्भारःस्याद्विंशतिस्तुलाः ॥

नस्यातव्यंत्वयातस्यगात्रेपुंसःकथंचन ॥ जलोदरोयातुजनंगर्भपातिनमादरात् ॥ ६० ॥ पश्चात्स्यजतुतंभूतंप्रपापुण्ये नभूषितं ॥ शतमष्टोत्तरंघोरंव्रणानांममभानिनां ॥ ६१ ॥ तुलापुरुषदानेनसमग्रंतत्प्रशाम्यति ॥ अर्धप्रसूतांसुरभींय थोक्तांयःप्रयच्छति ॥ ६२ ॥ तस्यगात्रेचतैःसर्वैर्व्रणैःस्थेयंनकर्हिचित् ॥ विचर्चिकानरंदुष्टंरसतस्करिणंचिरं ॥ ६३ ॥ परिपीडयतेतावद्यावद्दत्तंनकांचनं ॥ भगंदरोजनंत्यक्त्वासौवर्णकदलीफलं ॥ ६४ ॥ दातारंपलमात्रंहिब्राह्मणायप्रग च्छतु ॥ सन्निपातोनरंचैवशिवप्रासादभंजकं ॥ ६५ ॥ समाश्रयतिभूलोकेयातिविश्वासघातकं ॥ परापवादवक्तारम तीसारोव्रजत्वसौ ॥ ६६ ॥ जीर्णपूर्तप्रकर्त्तारंसमाश्रयतुतेसखा ॥ धर्मद्रव्यंगृहीतारंयातुसंग्रहणीजनं ॥ ६७ ॥ मेषीप्र दानात्सायातुअतिसारप्रियासती ॥ भुंजतोब्राह्मणान्द्वेष्टितमरोचकआव्रजेत् ॥ ६८ ॥ भोजयेद्द्विविधान्नेनतंचजत्वा दरोचकः ॥ धिक्शब्दंसुहृदोयश्चप्रहारंकुरुतेजनः ॥ ६९ ॥ संपीडयंतियेलोकान्पथिभल्लैःप्रहस्यतु ॥ आशाभंगंविदध तेयांतुशूलगणाश्चतान् ॥ ७० ॥ काराग्रहनिबद्धान्नॄन्पंजरस्थांश्चपक्षिणः ॥ पथिचोरैर्हन्यमानान्मोचयंतिमहाभयात् ॥ ७१ ॥ सदाशिवेतुयेभक्तानतान्शूलशतत्रयं ॥ हिक्काप्रियातुयात्वेनंसहतेनपरोदयं ॥ ७२ ॥ लक्षहोमप्रकर्त्तारंमाव्र जेदनघंजनं ॥ निरीक्ष्ययक्षवित्तंचधनुर्वातःप्रयातुतं ॥ ७३ ॥ माषमेरुंतैलवापींप्रदातारंविमुंचतु ॥ हरेःकथांनश्टण्वं तियेनसाधुजनस्यच ॥ ७४ ॥ तान्नरान्कर्णशूलोयंव्याप्नुयान्नेतरान्नॄन् ॥ कपिलाधेनुदातॄंश्चश्टण्वंतोवैष्णवींकथां ॥ ७५ ॥ परस्वेजायतेदृष्टिर्नेत्ररुक्तंनरंव्रजेत् ॥ हारिणंपरदाराणामन्नंयानेनभुंजतां ॥ ७६ ॥ सुवर्णकमलस्यात्रप्रदातारंवि मुंचति ॥ शैलेशंसोमनाथंचकाशीनाथंचवीक्षकं ॥ ७७ ॥ यदिपश्यतिसंसारंविनाशयतितत्क्षणात् ॥ किंतुनेत्ररुजांवृंदं नदाहयतितादृशान् ॥ ७८ ॥ पितृहाचेतनाहीनोमातृहांधश्चजायते ॥ नरकांतंप्रकुर्वीतप्रायश्चित्तैर्यथाविधि ॥ ७९ ॥ वा णीयस्यनसंजाताकदाचित्साधुवर्णने ॥ परापवादिनीनित्यंमुखसंतापकारिणी ॥ ८० ॥ मुखरोगस्तमालोक्यसकुटुंबःप्र त्वष्यति ॥ यःस्तौतिसाधुसंयुक्तंशिवंभक्त्यासदाजनः ॥ ८१ ॥ ददातिवृषभंश्वेतंब्राह्मणाययथोचितं ॥ मुखरुक्तंजनं वीक्ष्यदूराद्दूरंपलायते ॥ ८२ ॥ त्वंरक्षेतिधनंप्रोक्तःस्वयंलोभेनमोहितः ॥ स्थापितंनददात्यस्मैवित्तेशायोरुपातकी ॥

॥ ८३ ॥ वल्मीकंतत्पदंप्राप्यस्थूलंजायेतरोपितं ॥ ब्राह्मणेभ्योधनंभूरिप्रयच्छतिजनस्तुयः ॥ ८४ ॥ तंनवल्मीकको
यातिपीडितुंहरिसेवकं ॥ परस्याननसंस्थंयोग्रासंहरतिमंदधीः ॥ ८५ ॥ देवोपकरणान्येवगंडमालातमीहते ॥ नानारत्न
प्रदानेनगंडमालाविलीयते ॥ ८६ ॥ गुरुपत्नींगच्छतीहसकंडूकुष्ठवान्भवेत् ॥ कंडूकुष्ठंप्रयात्येवशिवघंटाप्रदानतः
॥ ८७ ॥ वदान्यंलाभसंतुष्टंपरंवीक्ष्यविमूर्च्छति ॥ तमपस्माररोगोऽयंभ्रामयन्परितिष्ठति ॥ ८८ ॥ कृष्णधेनुप्रदानेनहे
मपुष्करतोव्रजेत् ॥ दंभेनाचरतेधर्मंगजचर्मप्रयातुतं ॥ ८९ ॥ हंसतीर्थोदकस्नानकारकंनसमाश्रयेत् ॥ शिरोर्तिप्रमु
खारोगायांतिविश्वासघातकं ॥ ९० ॥ सूर्यपूजादिकैःपुण्यैःप्रणश्यंतिनसंशयः ॥ धर्मसूत्रंपरस्याथयेच्छिदंतिनराध
माः ॥ ९१ ॥ डमरुर्वालुकंगाढंमुंचतस्तान्नपादतः ॥ स्वर्णसूत्रस्यदेवेभ्योब्राह्मणेभ्यःप्रदानतः ॥ ९२ ॥ जायंतेवालुकै
र्मुक्ताबाधतेतान्नवालुकं ॥ कर्मणामनसावाचापरद्रोहंकरोतियः ॥ ९३ ॥ संप्रेत्यापुत्रतांगच्छेन्नात्रकार्याविचारणा ॥
शृणुयाद्धरिवंशंवैवारत्रितयमेवच ॥ ९४ ॥ समुक्तस्तेनपापेनपुत्रवान्धनवान्भवेत् ॥ जैमिनिरुवाच एवंयमे
नयत्प्रोक्तंशृण्वंतिभुविमानवाः ॥ तेषांनरोगजापीडाभविष्यतिकदाचन ॥ ९५ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीये
कर्मविपाकवर्णनंनामाष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥
जैमिनिरुवाच ततोयमस्तुतैर्भृत्यैःकामरूपैःसमन्वितः ॥ परिणेतुंनृपसुतांनारदोयत्रविद्यते ॥ १ ॥ तत्राप्यरम्यंन
गरंवीक्ष्यसारस्वतंयमः ॥ वरयामासधर्मिष्ठांमालिनींतत्परांविभुः ॥ २ ॥ होमशालांस्थितांदेवींतर्पयंतींहुताशनं ॥
अर्चयंतींनारदादीनृषीन्मृगयतींपतिं ॥ ३ ॥ तांप्राप्यकामिनींधर्मोराजानंवाक्यमब्रवीत् ॥ प्रसन्नोऽस्मिवरंब्रूहिकंप्र
यच्छामितेऽनघ ॥ ४ ॥ स्वल्पेनकिलकालेनतवमृत्युर्विलोक्यते ॥ वीरवर्मोवाच जामातस्तेवरंनैववांच्छा
म्यत्रात्मजीवदं ॥ ५ ॥ कन्यावित्तेनजीवंतितेनरानिरयंगताः ॥ धर्मराजउवाच भवान्दाताप्रतिग्राहीधर्मोऽहंतो
षितस्त्वया ॥ ६ ॥ आशीर्भिरभिनंदामिदातारंकोऽत्रविस्मयः ॥ नृपउवाच यस्मिन्दिनेमेमरणंभविष्यतिहि
भानुज ॥ ७ ॥ त्वद्वरेणहृषीकेशंतस्मिन्नहनिकामये ॥ यमउवाच तावत्त्वांनविमुंचामियावत्कृष्णसमाग

मः ॥ ८ ॥ त्वन्निमित्तंपरबलंधारयिष्यामिमेवरः ॥ वासुदेवउवाच एषपार्थयमोभातितवसैन्यंप्रतापयन् ॥ ॥ ९ ॥ वीरवर्माणमायांतंपश्यमद्दर्शनोत्सुकं ॥ वृतंमहारथैर्वीरैःसन्नद्धोभवपांडव ॥ १० ॥ मयूरकेतुप्रमुखाबभ्रुवाहनकर्णजौ ॥ प्रद्युम्नाद्याश्चयुद्ध्यंतुकौतुकंत्वंविलोकय ॥ ११ ॥ भविष्यतिमहद्युद्धमनेकगजपातनं ॥ जैमिनिरुवाच एवंब्रुवतिदेवेशेकृष्णेपार्थरथस्थिते ॥ १२ ॥ वीरवर्माऽर्जुनंप्राहप्राप्ययुद्धेतथाविधे ॥ एतेमयाजितावीरास्त्वदीयाः पार्थसंगरे ॥ १३ ॥ परंनमामिकाकंडूस्त्वांविनापरिशाम्यति ॥ गोविंदभववीरस्त्वंपार्थोभवतुवानवा ॥ १४ ॥ सहस्वमत्प्रहारंत्वंतिष्ठमामुंचसंगरं ॥ एतावदुक्त्वावचनंशरैःसप्तभिरर्जुनं ॥ १५ ॥ ताडयामासहृदयेबाणषष्ट्याजनार्दनं ॥ बाणैस्तेपंचभिर्वीरामूर्च्छिताःपतिताःक्षितौ ॥ १६ ॥ मयूरकेतुप्रमुखास्तदद्भुतमिवाभवत् ॥ अर्जुनोऽपिनृपंबाणैःसमंताद्व्यकिरद्रणे ॥ १७ ॥ मुंचाश्वौमामकौक्रोधाद्बुवाणोऽपिपुनःपुनः ॥ नृपउवाच उभौगृहीतौतुरगौयथायुद्धेमयाऽर्जुन ॥ १८ ॥ तथाऽत्रधारयेवीरौसंमुखौमाधवार्जुनौ ॥ जैमिनिरुवाच पार्थबाणसहस्रैस्तुसकृष्णंवीरवर्मकः ॥ १९ ॥ संछादयित्वाव्यनदत्सतोयइवतोयदः ॥ तस्यबाणान्सव्यसाचीचकारतिलशःक्षणात् ॥ २० ॥ सुमंत्रइवशत्रूणांदेशान्प्राज्ञैरधिष्ठितः ॥ जघानसप्तभिर्बाणैर्वीरवर्माणमाहवे ॥ २१ ॥ पार्थंजघानषष्ट्यासौशराणांतिग्मतेजसां ॥ वासुदेवंशतेनापिहनूमंतंशतेनच ॥ २२ ॥ हयाभिन्नाःशरैर्घोरैर्धृताःकृष्णेनयेकरे ॥ तस्माद्वद्धंतितेभूमौविषमायांनराधिप ॥ २३ ॥ अन्येवीराःशरैश्छन्नानादृश्यंतेचभूतले ॥ भ्रमितंपांडवबलंमोहेनेवयथाजगत् ॥ २४ ॥ वीरवर्माणमालोक्यकृष्णःप्रोवाचपांडवं ॥ श्रीवासुदेवउवाच वेत्सिपार्थमहाबाहोयथान्येक्षत्रियाजिताः ॥ २५ ॥ तथाविजेष्यामिरणेवीरवर्माणमत्रवै ॥ नासौशक्योमयाजेतुमुपायैस्तेनिपातिताः ॥ २६ ॥ यथाकर्णस्यतच्चक्रंग्रस्तंभूम्यामहारणे ॥ नास्यचक्रंग्रसेद्देवीसमर्थोजायतेपुनः ॥ २७ ॥ सुदर्शनेनतच्छिन्नंशिशुपालशिरोमहत् ॥ नास्यकंठात्पातयितुंक्षमंचक्रंहिमामकं ॥ २८ ॥ सिंधुराजस्यविशिखैर्नीतंशीर्षंरणाद्बहिः ॥ यैस्तावकैर्नतैरस्यवीक्ष्यतेदाहदंमुखं ॥ २९ ॥ हनूमानेवसंग्रामेरथंलांगूलबंधनैः ॥ निबध्नातुहिवीरस्यसंग्रामेवीरवर्मणः ॥ ३० ॥ भ्रामयित्वाशतगुणंप्र

मुंचतुमहार्णवे॥ हनुमानुवाच नेदंवनंरावणस्यजंबुमालीनराक्षसः॥ ३१ ॥जानकीत्रासकारिण्योराक्षस्यो
नपुरःस्थिताः॥ श्रीवासुदेवउवाच मयादिष्टोरथंचास्यप्रक्षिपत्वंहिवायुज॥ ३२ ॥अप्याकार्यशतंकार्यंध
र्मार्थैंहित्वयामया॥ जैमिनिरुवाच प्रेरितोवासुदेवेनगृहीत्वास्यरथंहरिः॥३३॥साश्वंससूतंसनृपंप्रस्थितोगग
नंप्रति॥परित्यज्यरथंराजातत्क्षणात्पांडवस्यहि॥३४॥गृहीत्वारथमाकाशेप्रपेदेपवनात्मजं॥ प्रत्युवाचहनूमंतंत्वयामे
नीयतेरथः॥ ३५॥ शून्योहिविपुलःकृष्णरथंपश्यमयाहृतं॥ नयिष्यसिरथंयत्रतत्रमाधवपांडवौ॥ ३६॥ नयिष्यामि
नमुंचामिदैवात्त्यक्तौत्वयारणे॥ क्षीराब्धौकृष्णनाथस्यशयनंशेषमंचके॥३७॥ रमाविरहिणीनित्यंयाचिंतयतिमाध
वं॥ पार्थभक्त्याहृतंकांतंसाप्राप्नोतुमयार्पितं ॥ ३८ ॥ नयथातेभातिसूर्योनचंद्रंवीक्षतेतथा ॥ यन्निमित्तंगतश्चंद्र
स्तंजानंतुविचक्षणाः॥ ३९ ॥त्वत्तोधिऽकंकृतंकर्मत्वदिजानातितत्त्वतः॥ हनुमानुवाच महिमातेमयादृष्टोवर्णि
तोनुत्वयाऽनघ॥ ४० ॥ तनोतिपौरुषंस्वंयःसाधुभिर्वर्ण्यतेनसः॥ वीरवर्मोवाच रथंगृहीत्वामेवीरनगंतुंपार्य
तेत्वया॥ ४१ ॥सहस्वमत्प्रहारंहिमयाकृष्णौयथाधृतौ॥ ततोजघानसरथंहनूमंतंस्वमुष्टिना॥ ४२ ॥ तस्यमुष्टिप्रहारे
णनययौपवनात्मजः॥ एवमेकेनतेवीरास्त्रयोयुद्धेतथाधृताः॥४३ ॥ तंनृपंहृदयेकृष्णोजघानस्वपदात्वरन्॥मूर्च्छितः
सपपातोर्व्यांगृहीत्वाचरणौहृदि ॥ मुहूर्त्तार्धेनतांहित्वापुनरेवोत्थितोऽब्रवीत्॥ ४४॥ मयात्रयोधृतायूयंनैकोऽहंविधृ
तस्त्रिभिः॥ यमेनमरणंप्रोक्तंमदीयंतद्वृतंकुतः॥ ४५॥ नीतौपार्थस्यतुरगौमयावीराःप्रतोषिताः॥ कृष्णांघ्रिस्पर्शतोनू
नंमृत्युर्मेऽद्यपलायितः ॥ ४६॥ ततोवीक्ष्यनृपंकृष्णःस्वेरथेसमवस्थितं॥ उवाचपांडवंयुद्धेशृणुफाल्गुनमेवचः॥४७॥
नायंवर्षसहस्रेणविजेतव्यस्त्वयामया॥ सर्वास्त्रसंग्रहंवेत्तिलघुहस्तोमहाबलः॥ ४८ ॥सर्वेंजितारणेवीरास्तथाऽहम
पितोषितः॥ अर्जुनउवाच येनत्वंतोषितोनाथविजयीसप्रजायते॥ ४९ ॥पौरुषेणमदीयेननैवाप्नोतिपराज
यं॥ एवंब्रुवाणंवीरोसौपार्थंप्रोवाचसत्वरः॥ ५० ॥ वीरवर्माप्रसन्नस्तंमैवंवदधनंजय ॥ वीरवर्मोवाच चरा
चरंत्वयापार्थशक्यतेजेतुमाहवे॥ ५१ ॥ त्वद्वाक्येनामुनावीरप्रसन्नंजायतेमनः॥इत्युक्त्वाधनुरुत्सृज्यपतितःकृष्णपा

द्योः॥ ५२ ॥ निपपाततदाराजापार्थमालिंग्यसत्वरः॥ तुरगाभ्यांसमंस्वंहिराज्यंदेहंस्वकंददौ ॥ ५३ ॥ श्रीकृष्णनाथ
स्यकरेकृत्वावीरैश्वसौहृदं ॥ तोषयन्कृष्णनाथस्यभक्त्याचित्तंपुरःस्थितः॥ ५४॥ षष्ठेथदिवसेराजादर्शयामाससत्वरं
सारस्वतंपुरंस्वंहिवित्तंपार्थायधीमते॥ मौक्तिकान्यष्टधायानिधनानिचबहूनिच॥ ५५ ॥ रत्नजातंतुसकलंयन्नेतुंनैव
शक्यते॥ गजानांचंद्रशुभ्राणांसहस्राण्येकसप्ततिः॥ ५६॥ एकतःश्यामकर्णान्हितुरगान्सुबहूनपि ॥ सुंदरीणांसह
स्राणिनवपार्थकरेददौ ॥५७॥ स्वयंपुरःसरोभूत्वापालयामासवाजिनौ॥ ततःपार्थमुखावीरादद्दशुर्भासुरंनदं॥५८॥
नानाचक्राकुलजलमावर्त्तशतसंकुलं॥ नयंतिहिगजान्यत्रमीनास्तानितरेझषाः॥ ५९ ॥ महद्भिर्जनकल्लोलैर्हसंतमि
वसागरं॥पार्थोऽब्रवीन्महाभागंवीरवर्माणमादरात्॥६०॥प्रतियामिनदंयातौहयौवारितरौमम॥पोतैस्तारयमत्सैन्यं
वीरवर्मातथाऽकरोत्॥ ६१ ॥ तीर्णसैन्यंसमग्रंहिपार्थस्यजनमेजय॥ ६२॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेवीर
वर्मविजयकथनंनामैकोनपंचाशत्तमोऽध्यायः॥ ४९ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥
जैमिनिरुवाच सारस्वतपुरान्मुक्तौवाजिनौनिर्गतौनृप ॥ लंबोदरंनमस्कृत्यवक्ष्येहंयत्रतौगतौ॥ १ ॥ वायुवेगस
मौदांतौचंद्रदीप्तिमुखौहरी॥ चंद्रहासपुरंप्राप्तौततःकौंतलकंशुभं ॥ २॥ पृष्ठतोऽनुययुःसर्वेकृष्णप्रद्युम्नजिष्णवः॥ हंस
ध्वजस्ताम्रकेतुःप्रवीरःफाल्गुनिर्वृषः॥ ३ ॥ वीक्षमाणास्तुरंगौतौव्यामोहाविष्टचेतसः॥ वाजिनौनःकुतःप्राप्तौकेननी
तौतलंगतौ॥ ४॥ आकाशमुत्प्लुतौकिंतुवियद्गीवाःस्मतेऽभवन्॥ तावद्ददृशुराकाशेपुरुषंदीप्ततेजसं ॥ ५॥ भ्राजमानं
श्रियातीवद्वितीयमिवभास्करं॥ मुनीनांप्रवरंचैववेदवेदांगपारगं॥६॥नारदंकलहप्रेप्सुंवैष्णवानांगरीयसं॥कृष्णमा
धवगोविंदनृसिंहमधुसूदन॥ ७ ॥ जपंतंमनसानित्यंभक्त्याकेवलयायुतं ॥ पृथक्पृथक्नमश्चक्रुर्मुनिंतंफाल्गुनाद
यः॥ ८ ॥ कुतःप्राप्तंपूज्यपादैर्दृष्टौनःकिंतुरंगमौ॥ इत्यमुंपरिपप्रच्छफाल्गुनःस्वामिगौरवात्॥ ९ ॥ नारदस्त्वब्रवीदश्वौ
गतौकौंतलकंपुरं॥ यत्रराजाचंद्रहासोवैष्णवःपालितांपुरीं॥ १० ॥ यस्मैकुंतलकोराजाराज्यंदत्वावनंययौ ॥ धृष्टबुद्धेः
प्रधानस्यकन्यांयःपरिणीतवान्॥ ११ ॥ केरलाधिपतेःपुत्रःकुलिंदेनानुपालितः ॥ लक्ष्मीपतेःप्रसादात्सप्राप्यकौंतल

कांपुरीं॥ १२ ॥ चंद्रहासोमहाबाहुर्योद्धाताद्दक्नविद्यते ॥अमीनृपतयस्तस्यकलांनार्हंतिषोडशीं॥ १३॥ नारदस्यव
चःश्रुत्वाबीभत्सुर्विस्मयान्वितः॥ प्रत्युवाचकआहोस्विच्चंद्रहासोमहाबलः॥ १४ ॥ शंसनारदमेसर्वंचरित्रंविस्मया
न्वितं॥चंद्रहासस्यनृपतेर्विस्तरेणयथातथं॥१५॥योभक्तोहरिमेधस्यवासुदेवस्यभूपतिः॥ नारदउवाच समयः
कीदृशःपार्थहयौमार्गच्युतौतव॥ १६॥ चिंतातुरोधर्मराजोविद्यतेहस्तिनापुरे॥ अर्जुनउवाच उभयोःसेनयो
र्मध्येकथंकृष्णमुखादहं॥ १७॥ अश्रौषंस्वस्थचित्तःसन्कुरुक्षेत्रेकथानकं ॥ सत्कथाश्रवणेयेषांपुंसांनसमयोभवेत्
॥ १८ ॥ वंचितास्तेहिकालेननराह्यल्पायुषोभुवि ॥ तस्मात्सर्वप्रयत्नेनकथयस्वकथामिमां॥१९॥अश्वोमेयातुविप्रेंद्र
यज्ञोभवतुवानवा॥ श्रेयोर्थिभिर्नरैःसम्यक्श्रोतव्यावैष्णवीकथा॥ २० ॥ एतद्यज्ञशतंचाश्वमेधादीनांप्रकीर्तितं ॥
नारदउवाच केरलाधिपतिःपूर्वमासीद्राजासुधार्मिकः॥ २१ ॥ राज्यंचकारमेधावीविधिवत्पालयन्महीं ॥ तस्यपु
त्रोऽभवन्मूलनक्षत्रेबहुभाग्यवान्॥ २२ ॥ तस्मात्कतिपयैरेवदिवसैर्वेष्टितंपुरं ॥ वैरिभिस्तस्यनृपतेरंतेश्लेष्मादिभिर्य
था॥ २३ ॥ युद्धंकृत्वासनृपतिर्जहौप्राणान्सुधार्मिकः॥परलोकगतंश्रुत्वापतिंपत्न्यन्वगान्मुदा॥ २४॥पितृभ्यांरहितंबा
लंधात्रीकौंतलकंपुरं॥निन्येपुरःश्रियस्तस्याभविष्यत्पतिमूर्जितं॥ २५ ॥ वर्षाणित्रीणिचतथापालितोयत्नतःशिशुः॥
धात्र्याकंडनपेषादिकर्मभिःकौंतलेपुरे॥ २६॥ध्यायंतीस्वनृपंधात्रीसंतप्यतिदिनेदिने ॥ततःपंचत्वमगमद्धात्रीबालंवि
नासती॥ २७॥ सोऽर्भकस्त्र्यब्दिकोगौरोलक्षणैरभिलक्षितः॥ वामपादेलघुंषष्ठीमंगुलिंबिभ्रदेवहि॥ २८ ॥ तदास्नेहे
नबहुनाकाभिश्चित्प्रतिपालितः॥ स्त्रीभिःपंचाब्दिकोजातस्ततःस्वैरंचचारसः॥ २९ ॥वीथ्यांतथाऽर्भकैःसार्धंरेमेभुंक्ते
चतैःसह॥ भोजयंतिचतंकाश्चित्स्नापयंतिपुरस्त्रियः ॥ लेपयंतिसुगंधैश्चचंदनैर्वरयोषितः॥३०॥स्वपित्यपिचताभिश्च
बालस्तस्मिन्पुरेऽर्जुन॥ कंचुकादिप्रयच्छंतिवरोष्णीषंचकाश्चन॥ ३१ ॥ उपानहौपट्टसूत्ररज्जुबिभ्रच्छुचिःशुचिः ॥धृ
ष्टबुद्धेःप्रधानस्यमंदिरंस्वेच्छयागमत्॥३२विप्रैर्योगीश्वरैःशांतैर्मुनिभिःसमलंकृतं॥तंशिशुंमुनयःसर्वेदृष्ट्वाविस्मय
मागताः॥ ३३॥ पश्चाच्चबुभुजुस्तेनशिशुनापांडुनंदन ॥ धृष्टबुद्धिर्विनीतःसन्तान्मुनीन्पर्यपूजयत्॥ ३४॥ अर्घ्यादि

क्रिययासम्यक्भोजयामासपायसं॥ विविधान्नमपूपांश्चमोदकान्वटकानपि ॥ ३५ ॥ तृप्तास्तेमुनयोबालःस्वाचांता
धौतपाणयः॥ धृष्टबुद्धिप्रदत्तेनचंदनेनसुगंधिना ॥ ३६ ॥ वस्त्रालंकरणैरम्यैस्तोषितास्तेऽब्रुवन्वचः॥ धृष्टबुद्धेऽभिनंदा
मश्चिरंजीवसुखीभव ॥ ३७॥ यस्त्वयावीक्षितोबालःपुरस्तात्पंचवार्षिकः ॥ कोऽयंकस्यसुतःप्राप्तःकस्माद्देशाच्चतद्वद
॥ ३८॥ इतिपृष्टोधृष्टबुद्धिःप्रत्युवाचस्मयन्निव ॥ कतिबालानसंत्यस्मिन्ननाथाःपुटभेदने ॥ राजकार्यगरीयस्त्वान्ना
हंजानामिबालकं ॥ ३९ ॥ मुनयऊचुः मनोहरोलक्षणलक्षितांगोबालोध्रुवंराज्यधरोविभाति ॥ त्वंधृष्टबुद्धे
प्रतिपालयैनंत्वत्संपदांपालयिताऽर्भकोऽग्रे ॥ ४० ॥ ततोविस्तृष्टामुनयःसरोषंबुध्याऽमुनाचिंतयताकिमीदृक् ॥ य
थागतंतेमुनयोऽभिजग्मुःसराजमंत्रीभृशमन्वतप्यत् ॥ ४१ ॥ किमेभिरीड्यैरुदितंवचोमांयत्संपदांतेऽधिपतिर्भविष्य
ति॥ बालःकथंतद्विपरीतकर्तातेषांमुनीनामहमस्मिवाक्यं॥४२॥विचार्यमंत्रीनृपतेःशिशोर्वधंसमाह्वयत्सोऽत्यजद्वंद
मातुरः॥ रेरेपशुघ्नावनगह्वरंमहद्विनीयबालंप्रतिहंतुमर्हथ ॥ ४३ ॥ चिह्नंशरीरस्यकिमप्यवश्यमानाय्यमस्मत्परितु
ष्टिकारि॥ ततोभवद्भ्योविविधामहिष्योमयाप्रदेयाघटदुग्धभाजः॥ ४४॥ नारदउवाच तस्यवाक्यंसमाकर्ण्य
चांडालाहर्षिताःशिशुं॥ प्रतार्यजगृहुर्मत्तानिन्युस्तंवनगह्वरं ॥ ४५ ॥ भयानकैःपक्षिसंघैःसेवितंकंटकैर्युतं॥ सुधा
र्मिकस्यतनयंहसंतमवधार्यतं ॥ ४६ ॥ शस्त्राणिशितधाराणिकोशेभ्योजगृहुस्तदा ॥ भ्रमतातेनशिशुनायादृष्टाप्रति
माहरेः॥ ४७॥ शालग्रामशिलारम्यातांमुखेसोऽर्भकोऽक्षिपत् ॥ संक्रीड्यमानःशिशुभिर्यष्टिपाषाणगोलकैः ॥ ४८॥
उच्यमानोवयस्यैःकिंसुखेनक्रीडसेऽमुना॥ वर्तुलेनोपलेनाद्यसोब्रवीत्तान्शिशून्प्रति ॥ ४९॥ सखायःसंतिबहुधाचि
त्रपाषाणगोलकाः॥ ईदृशोऽनुपमःस्निग्धोनापरोवीक्षितोमया॥ ५०॥ क्रीडाम्येभिरहंपूर्ववर्तुलैरश्मगोलकैः ॥ भग्ने
षुतेषुचांतेहंरमिष्याम्यधुनाध्रुवं॥ ५१ ॥ सबालस्तांशिलांरम्यांधारयन्वदनेऽरमत्॥ ५२॥ नारदउवाच अ
नुग्रहान्ममपुराध्रुवोविष्णुमतोषयत् ॥ तथैवपार्थदेवेशंदध्यौनारायणंस्वयं ॥ ५३ ॥ कृष्णकृष्णजगन्नाथवासुदे
वजनार्दन ॥ चांडालाःशितधारैश्चखड्गैर्घ्नंतिजगत्पते ॥ ५४ ॥ पाहिमांपरमानंदसर्वव्यापिन्नमोस्तुते ॥ ध्रुवश्च

रक्षितोयेनप्रल्हादोगजराट्तथा ॥ ५५ ॥ निर्नाथनीचदीनानांत्वंनाथःपरिगीयसे ॥ नमातानपिताबंधुरस्मा
कंनचगोत्रजाः ॥ ५६ ॥ नत्रातायदिगोविंदःकोमेत्राताभविष्यति ॥ पाहिव्यसनतोमाऽघसर्वव्यापिन्नमोस्तु
ते ॥ ततोदेवःसभगवान्चांडालांस्तानमूमुहत् ॥ ५७ ॥ मोहितास्त्वंत्यजावाक्यमब्रुवन्कीदृशःशिशुः ॥ सुकु
मारोविशालाक्षोदीर्घबाहुर्मनोहरः ॥ ५८ ॥ किंधृष्टबुद्धिनाप्रोक्तंहंतव्योबालकोवने ॥ यच्चांत्यजावयंपूर्वंनानापापेनक
र्मणा ॥ ५९ ॥ बालकस्यवधाद्घोराभविष्यामोऽत्रकीदृशाः ॥ अथवाकेनदोषेणपितृभ्यांरहितोऽभवत् ॥ ६० ॥ इ
त्युदीर्यशिशोर्देहंनिरीक्षंस्तेंऽत्यजास्तदा ॥ वामपादेकृशांषष्ठीमगुलिंददृशुस्तदा ॥ ६१ छित्वानयामश्चिह्नार्थंधृष्टबुद्धे
र्दुरात्मनः ॥ इत्युक्त्वाचिच्छिदुःषष्ठीमंगुलींतंविमुच्यच ॥ ६२ ॥ त्वरितास्तेपुरंजग्मुश्चिह्नमादायहर्षिताः ॥ धृष्टबुद्धिंनम
स्कृत्यदर्शयामासुरंगुलिं ॥ ६३ ॥ जहर्षत्वदिदुर्बुद्धिर्मयाकारिवचोत्वथा ॥ मुनीनामथचांडालान्महिषीभिरतोषयत् ॥
॥ ६४ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेचंद्रहासोपाख्यानेपंचाशत्तमोऽध्यायः ॥ ५० ॥ ॥छ॥ ॥छ॥

नारदउवाच श्रृणुपार्थमहाबाहोसबालोगहनेवने ॥ स्मरणात्तवमित्रस्यचांडालैर्नहतस्तदा ॥ १ ॥ बालोवातरु
णोवृद्धःस्त्रीपुमान्देवकीसुतं ॥ स्मरत्यहर्निशंपार्थकृच्छ्रान्मुक्तोनसंशयः ॥ २ ॥ छिन्नषष्ठांगुलिर्बालःक्षरद्रुधिरलेपवान् ॥
भृशंरुरोददुःखार्तोमोहयन्हरिणीगणं ॥ ३ ॥ पाहिमांदेवदेवेशकृष्णनाथकृपानिधे ॥ कृच्छ्रान्मोचयमांकांतसर्वव्या
पिन्नमोऽस्तुते ॥ ४ ॥ ताहरिण्यःसमागम्यलिलिहुश्चरणंशनैः ॥ अस्मत्पतिःस्वभर्त्तारंविहायवनगह्वरं ॥ ५ ॥ प्रविष्टः
कामुकोऽस्माकंतस्मात्तेनविवर्जिताः ॥ मुखरूपेणचंद्रोऽयंस्रवदश्रुलवःस्फुटं ॥ ६ ॥ वाहनेनविनास्वामीनभसःस्खलितोभु
वि ॥ प्रसादयंत्यइवतालिलिहुर्विजनेवने ॥ ७ ॥ पक्षिणोदुःखिताःसर्वेंछायांपक्षैःस्मकुर्वते ॥ उलूकावृंदशश्चैवस्थितादुः
खान्ननिर्गताः ॥ ८ ॥ पारावतास्तुतद्दुःखात्कृत्वातुकठिनंस्वरं ॥ पूरयंतिस्मपाषाणैरुदरंशोकविह्वलाः ॥ ९ ॥ एतस्मि
न्नंतरेप्राप्तोदेशाध्यक्षःकुलिंदकः ॥ तद्देशरक्षणार्थायआगतोवनगह्वरे ॥ १० ॥ अथोददर्शतंबालंस्रवदश्रुलवाननं ॥
जपंतंहरिनामानिरामगोविंदमापते ॥ ११ ॥ त्राहिमांकरुणासिंधोद्रौपदीचयथापुरा ॥ किमुपेक्षसिमांबालंवनेमा

त्राविवर्जितं ॥ १२ ॥ यद्युपेक्षसिमांनाथतवैवहितदात्रपा ॥ त्वद्भक्तानावसीदंतिश्रुतमेतन्मयाविभो ॥ १३ ॥ श्रुत्वा
वाक्यंसनृपतिःकुलिंदोविस्मयान्वितः॥अवतीर्यहयात्क्षिप्रंबालंचपरिसांत्वयन्॥१४॥उवाचवाक्यंमेधावीसोऽश्रूणि
परिमार्जयन्॥ कःपितातवकामाताक्वचतेसुहृदांगणः॥ किमर्थंनिर्जनेऽरण्येस्थितःप्रब्रूहिमांशिशो॥१५॥ बाल
कउवाच ममातापिताकृष्णस्तेनाहंपरिपालितः॥ तमपश्यन्महाराजरोदनंक्रियतेमया॥१६॥श्रुत्वैतच्चिंतयामा
ससराजाजनमेजय॥ ममापुत्रस्यजायेतपुत्रोऽसौवैष्णवःशिशुः ॥ १७ ॥ इत्युक्त्वातंसमालिंग्यवाजिपृष्ठेत्वरोपय
त्॥ स्वयंचारुह्यनगरींचंदनाढ्यांकुलिंदकः ॥ १८ ॥ ययौपरिजनैःसार्धंहर्षोद्रेकात्स्फुरद्भुजः ॥ गच्छन्पथ्यब्रवीत्सामे
पापर्द्धिःपुण्यदाभवत्॥ १९ ॥ इत्थंब्रुवन्सनगरींसंप्राप्तश्चंदनावतीं॥ प्रविवेशकुलिंदःस्वंभवनंपुत्रसंयुतः॥ २० ॥ मे
धाविन्यैस्वराज्ञ्यैतंपुत्रंलब्धंन्यवेदयत्॥ साहर्षिताऽब्रवीद्वाक्यमशोच्याहंतुकेवलं॥ २१॥ जातामनोरथाःसर्वेपाविता
ऽहंनसंशयः॥ नारदउवाच ततःकुलिंदोमेधावीउत्सवंसमचीकरत्॥ ब्राह्मणान्स्नातकान्वेदविदुषःपर्यपूजयत्
॥ २२॥ गणकाअब्रुवन्दृष्ट्वाहेकुलिंदतवार्भकः॥ अयंबहुश्रवाःश्रीमान्विष्णुभक्तोमहायशाः॥ चंद्रःशुद्धमुखाद्रम्याद्ध
सतोऽस्यपतिष्यति॥ २३ ॥ चंद्रहासेतिनाम्नाऽयंभविष्यतिधरापतिः॥ ततःप्रभृतिभोपार्थचंद्रहासोदिनेदिने ॥ २४॥
कुलिंदस्याशयासार्धंव्यवर्धतयथाशशी॥अकृष्टपच्यापृथिवीप्रजाआनंदनिर्भराः॥ २५॥गावश्चघटदोहिन्योदेशआ
सन्मनोरमाः॥ सप्ताब्दिकश्चंद्रहासोनानाक्षरविनिर्णयं॥ २६ ॥ विचार्यसम्यङ्मनसाहरिरित्यक्षरद्वयं ॥ सजजापस
दाक्रुद्धस्तदासोऽक्षरपाठकः॥ २७ ॥ अहर्निशंचंद्रहासहरिरित्यक्षरद्वयं ॥ उदाहरसिनान्यांस्त्वंवर्णान्पठसिचार्भक ॥
॥ २८॥ चंद्रहासउवाच सिद्धोवर्णसमाम्नायःसमग्रोप्युच्यतेमया॥ हरिरित्यक्षरालापान्नान्यंनिःसरतेमुखात्
॥ २९ ॥ मदीयात्किंकरोम्यद्यकिंकरोभवतामहं॥ ततोगुरुश्चुकोपास्मैवंशंभिन्नंकरेदधत्॥ ३० ॥ककेतिभणभोशिष्य
यथैवंपरिवर्त्तते॥ चंद्रहासोऽब्रवीद्वाक्यंभीतवत्तंशनैःशनैः॥ ३१ ॥ नभणामिकदाचिन्मेनजिह्वापरिवर्त्तते॥ हरिना
मजपिष्यामिनान्यैःशास्त्रैःप्रयोजनं॥ ३२ ॥ ॥ यत्रनामहरेर्नास्तितानिशास्त्राणिकिंप्रभो॥ यस्मिन्शास्त्रेपुराणेचहरि

नामनदृश्यते॥ ३३ ॥ श्रोतव्यंनैवतच्छास्त्रंयदिब्रह्मास्वयंवदेत्॥ नारदउवाच श्रृणुपार्थमहाबाहोवैष्णवस्यशि
शोःपुनः॥ ३४॥ चरितंचंद्रहासस्यसर्वपापप्रणाशनं॥ एतस्मिन्नंतरेक्रुद्धःकुलिंदभवनंययौ॥ ३५ ॥ चंद्रहासगुरुर्ग
त्वाकुलिंदंवाक्यमब्रवीत्॥ महद्भूतस्यसंचाराल्कस्यचित्तवपुत्रकः॥अहर्निशंहरिरितिप्रजल्पन्परितिष्ठति॥३६॥ पाठि
तोऽपिमयाशास्त्रंकुबुद्धिर्नपठत्यसौ॥ यद्याज्ञाममराजेंद्रतर्हिशास्मिनसंशयः॥ ३७॥ कुलिंदउवाच दैवाल्लब्धो
मयापुत्रःसकथंताड्यतेऽधुना॥ ईदृशोऽपिपिशाचोऽयंमूर्खःपालयिताध्रुवं॥ ३८॥ नाश्राविगुरुभिश्चित्रंशिशोराचरि
तंमहत्॥ एकादशीदिनेप्राप्तेनान्नंभुंक्तेनचामृतं॥३९॥अमुंविनाकथंभुंक्षेतस्येयंस्थितिरीदृशी॥तस्माद्याहिगृहंविप्रचं
द्रहासोयथासुखं॥ ४० ॥ वर्त्ततामष्टमेऽब्देऽस्यमेखलाबंधनक्रियां॥ करिष्यामिततश्चायंवेदाभ्यासंकरिष्यति॥४१॥
यथागतंगतोविप्रोहर्षितोऽभूत्कुलिंदकः॥ गाढमालिंग्यतंपुत्रंचंद्रहासंमनोरमं॥ ४२॥ अनेनैकेनपुत्रेणपाविताविष
याममा॥ विष्णुभक्तेनदक्षेणकिमन्यैर्बहुभिःसुतैः॥ ४३॥सर्पिण्याबहवःपुत्राजायंतेहरिभक्षकाः॥ अयंहरिपदध्यान
गतचित्तःसुतोमम॥ ४४॥ किंमयाचरितंपूर्वंतपःपंचाग्निसाधनं॥ येनाहंप्राप्तवान्पुत्रंवैष्णवंजनवल्लभं ॥ ४५ ॥
नारदउवाच अथाष्टमेऽब्देसंप्राप्तेमेखलाबंधनक्रियां॥ चंद्रहासस्यसकलांव्यदधात्सकुलिंदकः॥ ४६॥ ततोवेदा
हुतीर्हुत्वासांगंवेदमपाठयत्॥ अपीपठच्चंद्रहासोवेदंध्यायन्हरिंहृदि॥ ४७॥ पठित्वानिखिलंवेदंसोऽब्रवीत्प्रीयतांहरिः
वेदेषुस्मृतिशास्त्रेषुगीयतेमेप्रभुर्हरिः॥४८॥ तन्नपश्याम्यहंवस्तुयत्रनायंहरिःस्थितः॥इत्थंवेदार्थमालोक्यधनुर्वेदमथा
भ्यसत्॥ ४९॥ हृदंगणेहरिंलक्ष्यंस्थाप्यबाणानमूमुचत्॥ सद्भक्तिचापेवर्त्ततंदृढंतंसात्विकंगुणं॥ ५० ॥ परात्मस्वच
संयोज्यचित्तमेकंशरःकृतः॥ येनापिऋजुनाबालःप्रापलक्ष्यंजनार्दनं॥ ५१ ॥ अमुनातुप्रकारेणयेतुलक्ष्यंनजानते॥
तान्जनानर्दयत्येवतल्लक्ष्यंपांडुनंदन॥५२॥ नारदउवाच शरीरतूणात्स्वयमेवपंचबाणाययुस्तस्यकुलिंदसूनोः॥
एकीभवंस्तस्यत्वनुप्रविष्टाजनार्दनंलक्ष्यमतीवचित्रं॥५३॥एवंधनुर्वेदमथाभ्यसत्सततोगुरूंस्तानपिपर्यपूजयत्॥ वा
जीगणंशत्रुगणंसमग्रमपीपलद्देशमजीजयत्तं॥५४॥हंसाधिरूढश्चलकुंडलोऽसौखलीनमाक्रम्यचकारनम्रं॥ गुरुभ्य

आहस्मनमेभ्रमोऽस्तीत्यूचेहरिंप्राप्यकथंविमूढः॥ ५५॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेचंद्रहासोपाख्यानेचंद्रहास
विद्याभ्यासवर्णनंनामैकपंचाशत्तमोऽध्यायः॥ ५१॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥ अर्जुनउवाच
धन्यास्तेविषयायेषुतादृशोवैष्णवःस्थितः॥ अभ्यासमीदृशंचक्रेधनुर्वेदस्यनारद॥ १॥ हरिभक्तंकदावीक्ष्येइतीहामेस
दाभवत्॥आवयोःशब्दसान्निध्यंवर्त्ततेनेतरेष्विदं॥२॥औत्तानचरणोव्योम्निपातालेसबलिःस्थितः॥विभीषणस्तुलंका
यांसस्वर्गेनःपितामहः॥ ३ ॥इतस्ततस्त्वंभ्रमसिकुतस्त्वद्दर्शनंमम॥ अधुनाभाग्यसंयोगाज्जातोनौसंगमोमुने॥ ४॥
अधुनाचंद्रहासंतंदृष्ट्वाप्राप्स्येमहत्फलं॥ कथयस्वकथामेतांसुधारूपांमनोरमां॥ ५॥ तारुण्यंविषमंप्राप्यकिमाचारि
तवान्मुने॥ चंद्रहासोनृपवरस्तन्ममाचक्ष्वतत्त्वतः॥ ६॥ नारदउवाच अथोनषोडशाब्दोऽसौजनकंवाक्यमब्र
वीत्॥ विभोददासिचेन्मह्यमाज्ञांदिग्विजयायतान्॥ ७॥ याम्यहंसकलान्भूपान्जित्वातवबलादरीन्॥ धनंसमान
यिष्यामिनरराजैःसमंनृप॥ ८॥ कुलिंदःप्रत्युवाचेदंकथमेकःप्रयास्यसि॥ राजानःसंतिदुर्जेयाःसैन्येनमहतावृताः॥
॥ ९॥ अथवावासुदेवंतंसंस्मृत्यगच्छसेहठात्॥ अस्मत्स्वामीधृष्टबुद्धिर्मंत्रीकौंतलपस्यसः॥ १०॥ शतग्रामकएवायं
देशस्तेनार्पितोमम॥ इतस्तस्यैवनृपतेर्वैरिणोबलवत्तराः॥ ११॥ पीडयंतिस्ममद्देशंत्वामाकर्ण्योपरेमिरे॥इत्थंपितुर्व
चःश्रुत्वाचंद्रहासोययौमुदा॥ १२॥ रथिभिःपंचभिःसार्धंदेशांस्तान्वीरपूरितान्॥ तान्सर्वानजयद्धन्वीचंद्रहासोनृपा
न्हसन्॥ १३॥ वृथाराज्यमदेनामीमत्तानाराधयन्हरिं॥ परिभूतान्मयामत्तान्रथिनःसादिनोनरान्॥ १४॥ नरक्षिता
मयाग्रस्तान्कृतेदेवंजनार्दनं॥ चंद्रहासभयाद्भीतावैरिणस्तेविलिल्यिरे॥१५॥वासुदेवकथालापात्कलिदोषायथोल्क
टाः॥ नारदउवाच विजित्यनृपतीन्सर्वान्गजानश्वान्सहस्रशः॥ सुवर्णरत्नमुक्ताभिःपूरितान्शकटान्बहून्॥
॥ १६॥ चंद्रहासःसमादायस्वांपुरींचंदनावतीं॥ आविवेशकुलिंदेनसंमुखेनाभिनंदितः॥ १७॥ दीपदीपितपात्रेण
मात्रानीराजितस्तथा॥ पितरौचनमस्कृत्यशिबिकायामरोपयत्॥ १८॥ नरवाहैर्गृहीतायांपदातिःप्रययौपुरः॥ वह
न्नुपानहौपित्रोश्चंद्रहासोऽब्रवीद्वचः॥ १९॥ पित्रोर्भक्त्याविनाकिंचिल्लभ्यतेभुविनोनरैः॥ लक्ष्मीनारायणावेतौपित

रौचिंतयाम्यहं ॥ २० ॥ नारदउवाच चतुष्पथेसमायांतंददृशुःपौरयोषितः ॥ चंद्रहासंविशालाक्षंहसंतंमदनं
श्रिया ॥ २१ ॥ चंद्रहासइहआगतःसखींप्राहकाचिदबलाचसस्मितं ॥ चंद्रहासइहयावदंचितोहंतिपातकचमूंवि
लोकनैः ॥ २२ ॥ तामथालपतकाचिदहोस्विल्लज्जसेनगदतींकिमवद्यं ॥ यःसदाहसतिकामुकवंदमत्रिजोविकल
मेतदवश्यं ॥ २३ ॥ एवमादिवचःशृण्वन्चंद्रहासःस्वमालयं ॥ प्रविवेशसुहृन्मित्रपितृव्यादीन्प्रतोषयन् ॥ २४ ॥ अ
थाभ्यषिंचत्तंपुत्रंचंद्रहासंस्वकेपदे ॥ वेदविद्भिर्द्विजैःसार्धंकुलिंदःपंचमीदिने ॥ २५ ॥ महोत्सवंतदाचक्रुःपौराःसर्वेय
थाक्रमं ॥ प्रक्षाल्यतोयैःप्रथमंस्वानिस्वान्यंगनानिच ॥ २६ ॥ प्रमार्जुश्चंदनैःशुभ्रैश्चांद्रैःसंचूर्णकैर्व्यधुः ॥ चतुष्काणि
पताकाश्चवितेनुर्हर्षिताजनाः ॥ २७ ॥ उच्चैर्जगुर्नामहरेःपदैर्ललितवर्त्तनैः ॥ एकीभूयततःपौराश्चंद्रहासमपूजयन् ॥
॥ २८ ॥ चंदनेनसुगंधेनकेसरेणसुचंद्रिणा ॥ तथाचंपकमालाभिर्धूपैरगुरुजैःशुभैः ॥ २९ ॥ नीराजयंतिस्मतदातंच
कर्पूरदीपकैः ॥ एवंसंपूजितःपौरैश्चंद्रहासोब्रवीच्चतान् ॥ ३० ॥ अतःप्रभृतिभोपौराःप्राप्तेयाम्येदिनेशुभे ॥ उत्सवंचैक
भक्तंयोनकरोतिसमेरिपुः ॥ ३१ ॥ तथाविष्णोस्तिथौचान्नंयोभुंक्तेसमहानरिः ॥ पातकानांगणःसर्वःप्राप्तेचैकादशी
दिने ॥ ३२ ॥ भीतोविलीयतेचान्नेनभोक्तव्यंततोनरैः ॥ घटिकाःषट्तुपंचाशद्दृश्यतेदशमीयदा ॥ ३३ ॥ रिक्तातिथिः
सामंतव्यादशमीत्वपरेहनि ॥ अविद्धाचैवकर्तव्यावैष्णवैर्विष्णुवल्लभा ॥ ३४ ॥ पापाद्भीतोधर्मरताविष्णोर्भक्तिसम
न्विताः ॥ उभयोःपक्षयोरात्रौयेजाग्रतिहरेर्दिने ॥ ३५ ॥ तेषामहंसदादासोभविष्यामिनसंशयः ॥ आयुष्यंचपलंतादृ
क्जलबुद्बुदसन्निभं ॥ ३६ ॥ चिंतयध्वंजनामूढामाधवंवर्ष्मसुस्थिरं ॥ अस्थिस्तंभंस्नायुबद्धंमांसक्षतजलेपनं ॥
॥ ३७ ॥ शतच्छिद्रंग्रहैर्व्याप्तंलोभक्रोधादिवैरिभिः ॥ एतादृशंशरीरंचव्रतमेकादशीसमं ॥ ३८ ॥ यद्विचार्यक्षमंबुद्ध्वात
द्यूयंकर्तुमर्हथ ॥ एकादशीसमंकिंचित्पावनंभुवनत्रये ॥ ३९ ॥ नश्रुतंनमयादृष्टंतस्याःस्वामीहरिर्यतः ॥ इत्यादिष्टास्ते
नपौराहृष्टास्तदनुमेनिरे ॥ ४० ॥ सुवर्णरत्नवासोभिःपौरानन्यांश्चदुर्बलान् ॥ चंद्रहासोद्विजान्सर्वान्समलंकृतवान्मुदा
॥ ४१ ॥ मंदिराणिविचित्राणिसद्विजार्थमकारयत् ॥ वापीकूपतडागादिपूर्तंविष्णवालयानिच ॥ ४२ ॥ शिवालयानि

सत्राणिबहून्योगेश्वराश्रमान् ॥ प्रपाश्चकारविविधाःफलपत्रपयोधिकाः ॥ ४३ ॥ नारदउवाच देशाद्देशात्त
दालोकाआजग्मुश्चंदनावतीं ॥ ब्राह्मणाःक्षत्रियावैश्याःशूद्रप्रभृतयःप्रजाः ॥ ४४ ॥ पुत्रपौत्रैःपरिवृताधनधान्यस
मन्विताः ॥ संस्थापयामासमुदाप्रजाःसर्वाःकुलिंदजः ॥ ४५ ॥ प्रजाभिरष्टादशभिर्द्दष्टाभिश्चसमन्वितः ॥ चंद्रहासोह
रौभक्तिंव्यवर्धयततांपुरीं ॥ ४६ ॥ यस्यांसमागतश्चार्थीकुबेरंहसतिश्रिया ॥ दत्तयाचंद्रहासेनप्रीयतामित्यधोक्ष
जः ॥ ४७ ॥ तांचंदनाद्ध्वांपरिपालयंतंतंचंद्रहासंजनकःकुलिंदः ॥ उवाचहेपुत्रमयाप्रदेयंनिष्कायुतंकुंतलपायराज्ञे ॥
॥ ४८ ॥ तदर्धमस्मत्प्रभवेप्रदेयंतदर्धमप्यर्धममुष्यपत्न्यै ॥ तत्प्रेषयाशुत्वमुदारसत्वप्रीतिंयथामंत्रिनृपौलभेतां ॥ ४९ ॥
इतःषड्योजनंवत्सविद्यतेकौंतलंपुरं ॥ यस्मिन्कौंतलपोराजागालवेनपुरोधसा ॥ ५० ॥ राज्यंचकुरुतेसम्यक्मंत्रिणा
धृष्टबुद्धिना ॥ चंद्रहासःसमाकर्ण्यपितुर्वाक्यंप्रहर्षितः ॥ ५१ ॥ यन्मंत्रिणेचराज्ञेचपत्न्यैयत्प्रेर्यतेवसु ॥ तत्सर्वंगालवा
याशुदीयतेतातसत्वरं ॥ इत्युक्त्वावस्तुजातंतत्प्रेषयामासलीलया ॥ ५२ ॥ वामीभिरुष्ट्रैःशकटैर्दुकूलानिचकांचनं ॥ शु
द्धंचमलयंचारुकर्पूरंमृगसंभवं ॥ ५३ ॥ गजाःसंप्रेषितास्तेनवाजिनश्चमनोरमाः ॥ तस्मैकुंतलपायासौमंत्रिणेधृष्टबु
द्धये ॥ ५४ ॥ चारुविज्ञप्तिसहितंपत्रंप्रेषितवान्पुनः ॥ पत्रंचतद्धनंसर्वंसमादायप्रतस्थिरे ॥ ५५ ॥ सेवकाश्चंद्रहास
स्यप्रापुःकौंतलकंपुरं ॥ एकादशीदिनेप्राप्तेसायाह्नेतस्यसेवकाः ॥ ५६ ॥ पुरोपकंठेसुजलांनदींदृष्ट्वाऽब्रुवन्वचः ॥ स्ना
त्वासंपूज्यचहरिंप्रविशामततःपुरं ॥ ५७ ॥ हरेःसंपूजनात्सद्योभद्रंनोहिभविष्यति ॥ नारदउवाच सस्नुःप्रणेमु
र्जेपुस्तेदध्युर्नारायणंतदा ॥ ५८ ॥ दधुःशिरसितांदेवींतुलसींहरिवल्लभां ॥ एवंनियममास्थायविविशुस्तस्यमंदिरं ॥ ५९ ॥
सेवकाश्चंद्रहासस्यमंत्रिणोधृष्टबुद्धिनः ॥ तानार्द्रवाससोदृष्ट्वाधृष्टबुद्धिरदूषयत् ॥ ६० ॥ मनसीत्थंकुलिंदोऽसौमृतस्ते
नेदृशाअमी ॥ अथाब्रवीत्संप्रणतान्सकुलिंदस्यसेवकान् ॥ ६१ ॥ कदापंचत्वमापन्नःकुलिंदोदेशरक्षकः ॥ दिनानि
कतिजातानितच्चानिष्टमभून्महत् ॥ ६२ ॥ सेवकाऊचुः अनिष्टंवैरिणांभूयान्माकुलिंदस्यजातुचित् ॥ कुलिंदस्य
सुपुत्रेणचंद्रहासेनधीमता ॥ ६३ ॥ कृत्वादिग्विजयंयुष्मत्प्रदेयंप्रेषितंवसु ॥ अमीहिरण्यकलशैःकर्पूरागुरुचंदनैः ॥ ६४ ॥

दुकूलैःशकटाःपूर्णाआयांतितवमंदिरे ॥ एषांसप्तगुणाःप्रामाःकुंतलाधिपतेर्गृहं ॥ ६५ ॥ विस्मितोधृष्टबुद्धिस्तद्धनंज ग्राहहर्षितः ॥उवाचसूदान्देवान्नमेभ्योदीयंसुशोभनं ॥ ६६ ॥आहूताबहुशस्तैस्तेसूदैर्जग्मुर्नसेवकाः ॥ सूदास्तदाधृष्टबु द्धेःकथयामासुरादरात् ॥ ६७ ॥ आकार्योवाचतान्मंत्रीकुपितोरक्तलोचनः ॥ धृष्टबुद्धिरुवाच दत्तान्नमपियेग र्वादभीक्ष्णंनोपभुंजते ॥ ६८ ॥ कुलिंदंनिगडैर्बध्वाकुर्वेहंधनवर्जितं ॥ तन्मंत्रिणोवचःश्रुत्वासेवकाव्यब्रुवन्प्रभो ॥ ६९ ॥ नगर्वितावयंस्वामिन्नभुंजामोहरेर्दिने ॥ रुतघ्नानांचसंपर्कोमार्गेनःसमपद्यत ॥ ७० ॥ तस्माद्विशेषतानान्नंस्वीकुर्मो मंत्रिसत्तम ॥ अथप्रेष्यवचःश्रुत्वाप्रीतःप्रातरभोजयत् ॥ ७१ ॥ तान्स्वयंबुभुजेपश्चादामंत्र्यनृपतिंययौ ॥ आलोचि तुंधृष्टबुद्धिःपुरींतांचंदनावतीं ॥ ७२ ॥ संदिश्यमदनंपुत्रंव्यापारेनृपतेरथ ॥ संप्रामाविषयाकन्यापितरंतमभाषत ॥ ॥ ७३ ॥ प्रत्यहंयोमयासिक्तःसरसालःफलोद्गमी ॥ वर्ततेतातत्स्याद्यपालनंत्वदिचिंतय ॥ वैयग्र्यंराजकार्यत्वात्तवनि त्यंप्रजायते ॥ ७४ ॥ इत्युक्त्वोपरताकन्यायौवनोद्भिन्नशैशवा ॥ तामाश्वास्यययौमंत्रीहर्षितःसेवकैःसह ॥ ७५ ॥ द्वा भ्यांदिनाभ्यांनगरींप्रापतांचंदनावतीं ॥ महारण्यमिदंचादावद्याहोस्विन्महापुरी ॥ ७६ ॥ इतिविस्मयमापन्नंमंत्रिणं संमुखागतः ॥ कुलिंदःसहपुत्रेणनमस्कृत्यानयद्गृहं ॥ ७७ ॥ पूजयामासविधिवत्सपुत्रःप्रणतःस्थितः ॥ तंमंत्रीपरिप प्रच्छपुत्रस्तेऽयंकदाभवत् ॥ ७८ ॥ नाख्यातवान्पुत्रजन्मभवान्नःपुरतःकथं ॥ कुलिंदउवाच औरसोनहिपुत्रो मेस्वयंप्राप्तोमनोरमः ॥ ७९ ॥ एकदामृगयाविष्टचित्तोहंवनगह्वरं ॥ प्रविष्टःकौंतलपुराद्योजनद्वयसंमितं ॥ ८० ॥ त त्राद्राक्षमहंबालंछिन्नषष्ठांगुलिंसुतं ॥ पंचाब्दमधिकंपुत्रादौरसाद्धरिसेवकं ॥ ८१ ॥ चंद्रहासंविष्णुभक्तंजानीहित्वंम हामते ॥ नारदउवाच अंतर्दृष्टिरभूत्पार्थयोगिवद्दुष्टधीःक्षणं ॥ ८२ ॥ नजानन्विष्णुभक्तंतंचंद्रहासंविमूढधीः ॥ अंतर्विवृणुतेस्मायंकिंचित्सत्यंमुनेर्वचः ॥ ८३ ॥ सएवायंमयाबालोज्ञायतेषोडशाब्दिकः ॥ चांडालैर्वंचितश्चाह मंगुलीदर्शकैर्ध्रुवं ॥ ८४ ॥ द्वौपुत्रौममविद्येतेयुवानौमदनामलौ ॥ तौकिंकरिष्यतश्चेत्स्यादयंमेसंपदांप्रभुः ॥ ८५ ॥ अ तिक्रांतंहियत्कार्यंपश्चाच्चिंतयतेबुधः ॥ तच्चास्यनभवेत्कार्यंचिंतयानोविनश्यति ॥ ८६ ॥ यद्गतंगतमेवास्तुकरिष्या

म्यनृतंवचः ॥ मुनीनामथनिश्चित्यमनसाथाब्रवीद्गिरं ॥ ८७ ॥ धारयन्हर्षचिन्हानिबाह्यांतर्मलिनस्तथा ॥ यथापारवं
डजाबुद्धिर्मनुष्यस्यमहीपते ॥८८॥ धृष्टबुद्धिरुवाच सफलंतवजन्माद्ययेनप्राप्तःसुतःशुभः ॥ ममापिहृदयेहर्षः
संजातस्तुमहानहो ॥ ८९ ॥ तवपुत्रंसमालोक्यसचवक्तुंनशक्यते ॥ ९० ॥ इत्थंवचःप्राहनिगूढभावंक्षुरंप्रलिप्तंमधुनेव
तीक्ष्णं ॥ यथातृणैश्छादितगर्तमेवयथान्नमाविष्टविषंविचित्रं ॥ ९१ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेचंद्रहासोपा
ख्यानेधृष्टबुद्धेश्चंदनावतींप्रतिगमनंनामद्विपंचाशत्तमोऽध्यायः ॥ ५२ ॥ ॥छ॥ ॥छ॥ ॥छ॥
नारदउवाच पुनर्दध्यौधृष्टबुद्धिःकुबुद्धीनांमहार्णवः ॥ कथंमुनिवचोसत्यंकथंपंचत्वमेत्ययं ॥ १ ॥ प्रत्यक्षंहन्मिचेद
त्रकुलिंदतनयंरिपुं ॥ तदामांविविधैःशस्त्रैर्हिंस्युरेतेनसंशयः ॥ २ ॥ ततोभवेतांनूनंमेदुःखितौमदनामलौ ॥ स्वयमेव
वधंकुर्यामुतराजभटैरहं ॥ ३ ॥ नामुनातुप्रकारेणहंतुंशक्योमयारिपुः ॥ शंभुनायद्धृतंकंठेतद्दानाद्धन्मितंरिपुं ॥ ४ ॥ चंद्रहास
मितिध्यात्वाहर्षितःसोऽब्रवीद्वचः ॥ चंद्रहासविचित्रंत्वंपत्रमानयलेखनीं ॥ ५ ॥ मषींयथालिखित्वैकंपत्रंत्वांप्रेषयेपुरं
तेनार्पितमुपादायपत्रमेकांतसंस्थितः ॥ ६ ॥ धृष्टधीरर्पयामासतस्मिन्वर्णान्यथाक्रमं ॥ स्वस्तिश्रीरस्तुमदनवक्तुंकारण
मीदृशं ॥ ७ ॥ चंद्रहासोऽहितोऽतीवममायंसंपदांपदं ॥ ज्ञातव्योनात्रसंदेहःपुत्रकार्यंत्वयेदृशं ॥ ८ ॥ मारूपंमावयो
द्राक्षीःकुलंशीलंपराक्रमं ॥ विद्यांवित्तंविलंबंमाऽमित्रस्यास्यकुरुध्रुवं ॥ ९ ॥ विषमस्मैप्रदातव्यंत्वयामदनशत्रवे ॥ पा
र्वतीशमितिध्यात्वाकृतार्थाःस्यामयद्वयं ॥ १० ॥ चंद्रहासंविशालाक्षमूचिवान्मद्वचःशृणु ॥ मद्गत्कौंतलकेकार्यंविद्यतेम
दनंप्रति ॥ ११ ॥ त्वंयाहिपत्रंहिमयामुद्रितंमाविमोचय ॥ भूयाद्गूढंतवहितंपत्रेदत्तेसुतायमे ॥ १२ ॥ त्वंभेत्सियदिमुद्रां
मेभविष्यतिमलंतव ॥ उभयोःशिवयोर्भेदाद्यथावत्तवजायते ॥ १३ ॥ शीघ्रंवाजिनमारुह्यचतुर्भिःसेवकैर्वृतः ॥ याहि
कौंतलकंपुत्रधर्म्यंद्रष्टाऽसिपुत्रकं ॥ १४ ॥ नारदउवाच सतत्पत्रमुपादायवेगमास्थायशोभनं ॥ मंत्रिणंतंनम
स्कृत्यकुलिंदंपितरंततः ॥ १५ ॥ मेधावतीमगात्स्रष्टुंनमस्कर्त्तुंकुलिंदवत् ॥ तयानीराजितश्चाथआशीर्भिरभिनंदितः ॥
॥ १६ ॥ दधिदूर्वाक्षतोन्मिश्रंतिलकंकुर्वतीप्रसूः ॥ अब्रवीत्सातुपंथानःशिवास्तेसंतुर्वदा ॥ १७ ॥ मुखंनारायणःपातु

बाहूपातुजनार्दनः ॥ वक्षःपातुहृषीकेशउदरंपातुमाधवः ॥ १८ ॥ पद्मनाभःसदापातुनाभिंकुक्षिंनृकेसरी ॥ कटिंकम
लपत्राक्षोजंघेद्वेमधुसूदनः ॥ १९ ॥ जानुनीयज्ञभोक्तातेगुल्फौदामोदरोवतु ॥ सहस्रपादंघ्रियुगंसहस्राक्षस्तवाक्षिणी
॥ २० ॥ त्रिविक्रमःपातुसर्वंशरीरंतवपुत्रक॥समयाहिपुनःशीघ्रंपत्न्यात्वमनुरूपया॥२१॥यथात्वंनृपतेःकुक्षिप्राप्तःस
हजयाश्रिया ॥ चंद्रहासोऽथजननींनमस्कृत्यपरीत्यच ॥ २२ ॥ प्रायादश्वाधिरूढस्तैःप्रेष्यैःप्रियहितेरतैः॥ ग्रामांतरात्स
मायांतंसददर्शवधूवरं ॥ २३ ॥ हरिद्राकुंकुमोद्रेकरंजितारंमनोरमं ॥ नववत्सामथाद्राक्षीद्दृष्टिंसपुरतःस्थितां॥ २४॥त
स्मैपथिवनाध्यक्षाःप्रददुर्दाडिमीफलं ॥ केचिच्चंपकमालाभिरर्चयंतिस्मतंपथि॥ २५॥ बबंधुर्मुकुटंभालेनानापुष्पम
यंमुदा ॥ नवोवरइवाभातिचंद्रहासःससुंदरः॥२६॥प्राप्यकौंतलकाभ्याशेरम्यंक्रीडावनेसरः॥वरटाभिःसमंहंसायत्र
गार्हस्थ्यमास्थिताः॥ कमलोदयेनमहताधवलाब्रह्मपत्रजाः ॥ २७॥ तस्यामलांभःसरसःसमीपेवनंददर्शाघतमाल
नीलं॥ सचंद्रहासोऽद्भुतमेवमेनेसाक्षाद्वसंतंचवसंतमत्र ॥ २८॥ फुल्लंपलाशंनवकुंकुमाभंतमेववक्रंकिलबिभ्रतंतं॥
वनश्रियासंगमकज्जलांकंतत्पत्रवल्लीधरमद्भुताभं ॥ २९ ॥ ततःपल्लविताआसन्द्रुमास्तस्मिन्मधौसति ॥ मंजर्यःपल्ल
वारम्याभांतिचूततरौतदा॥ ३०॥तस्मिन्पल्लवितेऽत्यंतंकोकिलामधुरस्वरं॥ चुकूजकामिनांचित्तमाकर्षंतीवदूतिका
॥३१॥पुन्नागबकुलाशोकचंपकाःपुष्पिताबभुः॥मालतीयूथिकाजात्यःपुष्पस्तनभरानताः॥ ३२॥ केतक्यःपुष्पगंधा
ढ्यालीनभ्रमरलोचनाः॥पुष्पवर्षैरर्चयंत्यःस्वभर्त्तारंचमाधवं॥ ३३॥ नारदउवाच मधोरुत्सवमालोक्यकुलिं
दतनयोमुदं॥ परांप्रापहरेरेवचरित्रंहृदयेदधत्॥ ३४॥ स्नात्वासंपूज्यचहरिंतैःपुष्पैर्मधुसंभवैः॥ संकल्पयित्वाहरयेपा
थेयंबुभुजेशनैः॥ ३५॥ सेवकैःक्षिप्तदूर्वादिंपुरस्ताद्वाजिनंतरौ॥ रसालेसन्नियम्याथअशेतप्रहरद्वयं॥३६॥ अथकौंत
लपस्यैकाकन्याचंपकमालिनी॥ धृष्टबुद्धेश्चविषयारतिंहसतियाश्रिया ॥ ३७॥ कन्यकेजग्मतुःकन्याशतेनपरिवारि
ते॥ वसंतागमपुष्पाढ्यंपुरोपवनमुत्तमं॥ ३८ ॥पुष्पावचयमिच्छंत्यःकर्तुंसर्वाश्चकन्यकाः॥ सार्धत्रयोदशाब्दास्तायौ
वनेद्रेदचंचलाः॥३९॥ कौसुंबांबरधारिण्यःस्फुरत्कंचुकपल्लवाः॥नवबिल्वफलाभाभ्यांस्तनाभ्यांसमलंकृताः॥४०॥

रम्यमौक्तिकहारैश्चमंडिताभ्यांशनैर्ययुः॥ नृत्यंत्योनूपुररवैस्तालिकाशब्दकैःपथि॥४१॥ गायंत्यःस्महसंत्यःस्मक्षरत्तांबूलचंद्रकाः॥ प्रापुःक्रीडावनंरम्यंकोकिलालापनादितं॥४२॥हस्तिनीपुरतःकाचिद्दयौपुष्पौघवीक्षया॥ तांचैवभीतोवाचैकाकन्याबिल्वफलस्तनी॥ ४३ ॥ मागाहस्तिनिकुंजंत्वमेकापुष्पाभिलाषिणी॥ दारयिष्यतिमुक्ताढ्यौस्तनकुंभौनृकेसरी॥ ४४ ॥ परस्परंहसंत्यस्ताःप्रकुर्वन्पुष्पसंचयं॥ मालतीयूथिकाजातीमोगरादिकवीरुधां॥ ४५॥ कन्याःसुमनसांमालाश्चक्रुःकंठेषुतादधुः॥ सपुष्पांदाडिमींवीक्ष्यप्राहचंपकमालिनी॥४६॥विषयेसुभगेपश्यमहदद्भुतमग्रतः॥ आदौपुष्पोद्गमःपश्चाद्दृश्यतेस्मफलोद्गमः॥ ४७॥ विपरीतंत्वयिकथंजातंबिल्वफलस्तनि॥ वनस्पतीनांधर्मोऽयंविषयाप्राहभूपजां॥ ४८॥ अथपुष्पाण्युपादायशिरस्याधायनिद्रितां॥ पुष्पावचयखिन्नांगींविषयाप्राहभूपजां॥ ४९॥ शिरस्याधायपुष्पाणिमाशेथास्त्वंवरानने॥ कश्चिदंतर्वनेभोगीकुंडलीत्वांसमेष्यति॥ ५०॥ राजकन्योवाच विषयेतेमुखेशोभावरीवर्तिसुधांशुजित्॥ स्तनौवक्षसिवर्त्तेतेरत्याकिंमन्मथःसह॥ ५१॥भक्त्याप्रादुरभूतांतौस्वप्नंदत्वातवाशये॥ कंचित्प्रार्थयपूजार्थमनयोर्लिंगयोःसखि॥ ५२ ॥ चंदनेनसुगंधेनकेसरेणसुचंद्रिणा॥ पत्रालिभिर्विचित्राभिर्यएतावर्चितुंक्षमः॥ ५३ ॥ सायंप्रातर्ध्यनलसोदक्षस्तंप्रार्थयाधुना॥ प्राणानपिस्वकान्दत्वापूजकंत्वंवशीकुरु॥ ॥ ५४॥ चक्षुःस्फुरतितेवामंकाकोरौत्याग्रमास्थितः॥ शंसतीवप्रियंप्राप्तंपूजकंतवदेवयोः॥ ५५॥ इत्थंचंपकमालिन्यावचःश्रुत्वाजहाससा॥ उवाचवचनंरम्यंलज्जतीवप्रधानजा॥ ५६॥ विषयोवाच अलंपुष्पचयेनाद्यसंतप्तारविणावयं॥ यामःशीतजलंतस्मात्तत्सरःकमलाकरं ॥ ५७॥ तच्छ्रुत्वावचनंतस्याःकन्यकानिर्ययुर्वनात्॥ केचिद्दोलाधिरूढेतेगायंत्यौमधुरस्वरं॥ ५८॥ प्रहरंत्यौतदाऽन्योऽन्यंकन्यकेकुचमंडले॥ त्रुटन्मौक्तिकहारेतेदोलायाअवतेरतुः ॥ ५९॥ काचित्पुष्पचयंकृत्वाराजकन्यांप्रधाविता॥ विषयामपिहर्षेणपुष्पवर्षमथाक्षिपत्॥ ६०॥ एवंतास्तत्सरःप्रापुःपद्मिनीषंडमंडितं॥ हंसाभीताःपलायंतेसिंजितश्रवणाद्वनात्॥ ६१॥ अस्माकंमनसोल्लासिसरःकलुषितंभवेत्॥ पुष्पवंत्योविशेषेणकन्याआयांतिकामुकाः॥ ६२॥ नारदउवाच सरस्तीरेदुकूलानिरम्यकार्पासिकानिच॥ क

न्याभिस्त्यज्यमानानिमर्मरैरितिविचुक्रुशुः ॥ ६३ ॥ सूक्ष्माण्यपिदुकूलानिनेतुंनक्षमतेनिलः ॥ तासांगुणमयैःपाशैर्बद्धो
निश्चलतांययौ ॥ ६४ ॥ ताश्चंपकांग्योविविशुस्तत्सरःशिवलीलया ॥ अगाधंनिर्मलंगाधंकलुषंतत्सरोभवत् ॥ ६५ ॥
कन्याभिर्निष्ककंठीभिस्तादृशीभिरधिष्ठितं ॥ परस्परंहाससूक्तीश्चक्रुस्ताअभितःसरः ॥ ६६ ॥ क्रीडालोलकरास्फालत्त्रु
टन्मौक्तिकपूरितं ॥ मणिबंधस्खलद्रम्यप्रवालमणिचित्रितं ॥६७॥ अनंतश्रीधरंतासांमुखचंद्रैरलंकृतं॥तत्सरःशुशुभे
तीवरत्नाकरनिभंस्फुटं॥ ६८॥ परस्परंताःसिषिचुर्जलेनातिसुगंधिना ॥ स्तनकुंकुमकस्तूरीचंदनागुरुगंधिना ॥ ६९ ॥
उच्छलज्जलबिंदूनांमिषेणजलदेवताः॥ क्रीडंतेमौक्तिकैश्चैताःकन्यकाःशुशुभुर्वने॥ ७० ॥ बिंदुवर्षंसमालोक्यचात
काघनशंकया॥ मुखंव्यादायपश्यंतिघनपंक्तीःपिपासया ॥ ७१ ॥रम्यैःकनकनालैस्तुबवंधुःकाश्चकांचन॥ जहसुर्ब
भ्रमुःकन्याडिंडिमंचुक्रुशुर्जगुः॥ ७२ ॥ एवंस्मताःसरसिकुंकुमनीरभाजिस्नात्वाऽबलाःपरिदधुःस्मदुकूलवृंदं ॥ ताटं
कपत्रवरमौक्तिकहारनिष्कैःपूर्णोडुपाभतिलकैर्व्यधुरंगभूषां॥७३॥ तांविहायजलकेलिमुत्तमांधृष्टबुद्धितनयातटस्थि
ता॥अन्ववैक्षतहरिंयथारमाचंद्रहासमथसासरतीरे ॥७४॥ षोडशाब्दवयसंसुकुमारंश्मश्रुलंविमलदीर्घललाटं॥पद्द
बद्धहयमल्पजनंतंसिंहशावमिवबाढममंस्त॥७५॥ इत्याश्वमेधिकेपर्वणिजै० चंद्रासोपाख्यानेत्रिपंचाशत्तमोऽध्या
यः॥५३॥ ॥छ॥ जैमिनिरुवाच जलक्रीडारुणाक्ष्यस्तानिर्ययुःस्वान्गृहान्प्रति॥विषयानययौपार्थचंद्रहासगुणै
र्हृता॥ १ ॥ गच्छत्सुमानुषेष्वेकोनिधिंपश्यत्पुरस्थितं॥सयथानिश्चलस्तत्रतथासाविषयास्थिता॥ २ ॥ किंनयाम्यथ
वायामिसुंदरंपुरुषंवने॥ अमुंविवेकंमदनस्तदीयंव्यलुनाच्छरैः॥३॥ सैरंध्रींसासमाहूयनूपुरौप्रददौनिजौ॥ततःपदंप
देस्खलत्वाद्दुकूलेऽपिविशंकिता॥ ४ ॥ हंसीवसाययथाहंसंययौदृष्टस्तुरंगमः॥ चरन्दूर्वांकुरान्श्यामान्श्यामयासनमस्कृतः
॥ ५ ॥ ममप्राणान्प्रियेसक्तान्माशब्देनवियोजय॥ इतिब्रुवंतीशनकैःप्रापाकुंडलिनंजनं॥ ६ ॥ पतिवत्तंहिविषयादत्त
दृष्टिरवैक्षत॥ ततोददर्शरुचिरंपत्रंकंचुकनिःसृतं॥७॥ गृहीत्वातत्करेणाशुमुद्रामुन्मुच्यविस्मिता॥ वाचयामासतत्प
त्रंपितुरत्यंतहर्षिता॥ ८ ॥ स्वस्तिश्रीरस्तुमदनवकुंकारणमीदृशं॥ चंद्रहासोऽहितोतीवममायंसंपदांप्रभुः॥ ९॥ज्ञात

व्योनात्रसंदेहः पुत्रकार्यंत्वयेदृशं ॥ मारूपंमावयोद्राक्षीः कुलंशीलंपराक्रमं ॥ १० ॥ विद्यांबलंविलंबंमामित्रस्यास्य
कुरुध्रुवं ॥ विषमस्मैप्रदातव्यंत्वयामदनशत्रवे ॥ ११ ॥ पार्वतीशमितिध्यात्वाकृतार्थाःस्यामयद्द्वयं ॥ दध्यौसाविषया
पश्चादभिप्रायंविदग्ध्वती ॥ १२ ॥ संपदांमेप्रभुर्नित्यंहितोमदनसन्निभः ॥ एवमादिमयापत्रेरुचिरंवीक्ष्यतेयथा ॥ १३ ॥
वरंमनोरमंवीक्ष्यमद्रूपंहर्षनिर्भरः ॥ विषमस्मैप्रदातव्यमत्रचस्खालमेपिता ॥ १४ ॥ पितुर्वैपत्रमालोक्यमदनोऽपिह
निष्यति ॥ कनिष्ठिकानखेनाथतीक्ष्णेनादायसुंदरी ॥ १५ ॥ रसालद्रुमनिर्यासंलिलेखविषयातदा ॥ विषयास्मैप्रदात
व्येत्येवंवर्णान्समालिखत् ॥ १६ ॥ पत्रंरसालनिर्यासकृतमुद्रंविधायसा ॥ कंचुकाभ्यंतरेन्यस्यविषयाऽगान्निवेशनं
॥ १७ ॥ पुनःपुनश्चपश्यंतीपृष्ठतःप्राणवल्लभं ॥ ततोदृष्टाव्रजंतीसासखीभिर्विषयातदा ॥ १८ ॥ सख्यऊचुः कस्माद्वि
लंबितंभद्रेकस्माद्धर्षोमहान्त्वयि ॥ कस्माद्वेवीक्ष्यतेपृष्ठेकच्चिद्दृष्टोनृकेसरी ॥ १९ ॥ सिंहोदृष्टःकथंत्यक्तःसुप्तोनूनंत्वयेक्षि
तः ॥ मन्येतदीयंसर्वस्वंमुष्णासित्वंनिगूहसे ॥ २० ॥ क्रीडंत्योहास्यवचनैःसर्वाःस्वंस्वंगृहंययुः ॥ प्रहस्यविषयाकन्याशु
श्रावपुटभेदने ॥ २१ ॥ विवाहोत्सवकार्याणांपणवानांतुनिःस्वनं ॥ गायंतीनांपुरंध्रीणांसंगीतध्वनिमिश्रितं ॥ २२ ॥
सूर्यंदृग्भ्यांप्रपश्यंतीप्रार्थयंतीपतिंप्रियं ॥ विषयागृहमागत्यहृष्टासाप्रियदर्शनात् ॥ २३ ॥ सप्तभूमिकमास्थायमंदिरं
साव्यलोकयन् ॥ चंद्रहासोऽपिसायाह्नेप्रबुद्धःसिंहविक्रमः ॥ २४ ॥ प्रक्षालितास्यःकृतवक्त्रशुद्धिःपल्याणयुक्तंहयमा
रुरोह ॥ चतुर्भिरेवानुगतःस्वभृत्यैःपुरंविवेशाप्रतिमप्रभावः ॥ २५ ॥ यस्मिन्पुरेधर्ममतिःसुमंत्रीराजापरंध्यानपरः
सयोगी ॥ आस्तेपरंगालवसूक्तिमुक्ताफलानिगृह्णन्ननिशंविचिंतयन् ॥ २६ ॥ चंद्रहासोधृष्टबुद्धिभवनंप्रापसत्वरः ॥
अवतीर्यहयात्तस्माद्द्वाःस्थंवचनमब्रवीत् ॥ २७ ॥ अंतःकथयरेद्वाःस्थमदनंप्रतिमेवचः ॥ श्रीमद्धृष्टमतेर्वाक्यकारक
श्चंद्रहासकः ॥ २८ ॥ प्राप्तोवचनसंदेशकथापत्रधरोबहिः ॥ शिरआनम्यसद्वाःस्थःस्वामिनंमदनंययौ ॥ २९ ॥ शंसितुंचं
द्रहासंतंपार्थाकर्णयविस्मयं ॥ सद्वाःस्थोत्यपरंद्वाःस्थंगत्वावचनमब्रवीत् ॥ ३० ॥ चंद्रहासमनुप्राप्तंमदनायनिवेदय ॥
द्वितीयोद्वाःस्थमागम्यतृतीयंवाक्यमब्रवीत् ॥ ३१ ॥ तृतीयस्तुचतुर्थंचचतुर्थःपंचमंतथा ॥ पंचमश्चागमत्षष्ठंषष्ठःसप्त

ममाव्रजत् ॥ ३२ ॥ द्वाःस्थंविवेकनामानंमदनस्यप्रियंसदा ॥ श्रद्धायष्टिधरंषष्ठश्चंद्रहासंन्यवेदयत् ॥ ३३ ॥ नारद उवाच विवेकनामाद्वाःस्थोयंश्रद्धायष्टिंकरेदधत् ॥ प्रययौमदनायाशुचंद्रहासंनिवेदितुं ॥ ३४ ॥ सिंहासनेचो पविष्टंमदनंशंकरप्रियं ॥ ददर्शदक्षिणेपार्श्वेवेदशास्त्रविदोजनान् ॥ ३५ ॥ कवीन्सदुक्तिकर्तॄंश्चवक्तॄन्कृष्णगुणान्बहून् ॥ कृष्णवेषनटान्कृष्णगीतनृत्यप्रगायकान् ॥ ३६ ॥ कृष्णस्यकृष्णभक्तानांबंदिनोगुणवर्णकान् ॥ वामपार्श्वेक्षत्रियांश्च कृष्णभक्तिपरायणान् ॥ ३७ ॥ नानादेशसमायातान्दूतान्शास्त्रविशारदान् ॥ चामरैर्वीज्यमानंचमदनंधृष्टबुद्धिजं ॥ विवेकनामाद्वाःस्थस्तंनमस्कृत्यालपद्गिरं ॥ ३८ ॥ विवेकउवाच केवलंतवभृत्योऽहंप्रियश्चनपितुस्तव ॥ पितुस्ते ऽन्यःक्रोधनामाहिंसायष्टिधरःप्रियः ॥ ३९ ॥ सस्वामिभक्तोमदनयावन्नायातितेसदः ॥ तावन्मदीयंवचनंशृणुसभ्यैः समन्वितः ॥ ४० ॥ यश्चिंत्यतेसदाशांतैर्योगिभिर्मधुसूदनः ॥ तस्यभक्तश्चंद्रहासःप्राप्तोद्वारंमहामते ॥ ४१ ॥ अहंतवपि तुर्भीतःक्रोधस्यानुचरस्यच ॥ नयामिशंसितुंकिंचित्प्राप्तंत्वांप्रतिनब्रुवे ॥ ४२ ॥ जनस्तवपितुःप्रेष्यःस्वयंवामांहनिष्य ति ॥ इत्थंमनोरमंतस्यवचनंशास्त्रसंमितं ॥ ४३ ॥ उत्तस्थौचसमाकर्ण्यमदनस्तैःसभाजनैः ॥ स्खलद्दुकूलाभरणःप्रांचलं चसमुत्क्षिपत् ॥ ४४ ॥ क्षणाद्ददर्शमदनश्चंद्रहासंहरेःप्रियं ॥ नमस्कृत्याभिलिंग्याथसभांरम्यांसमानयत् ॥ ४५ ॥ वरा सनेसन्निवेश्यसंपूज्यमदनोऽब्रवीत् ॥ कच्चित्कुलिंदःकुशलीकच्चित्कुशलिनीप्रिया ॥ ४६ ॥ कच्चित्तेविषयेविप्रावेदा भ्यासंप्रकुर्वते ॥ कच्चित्क्षत्रियविट्शूद्राःपूजयंतिद्विजान्धनैः ॥ ४७ ॥ कच्चित्प्रजानोपिशुनैर्बाध्यंतेदुःखदैःकरैः ॥ अपि त्वंकुशलीप्राप्तश्चितयन्मनसाहरिं ॥ ४८ ॥ किमत्रागमनेकार्यंतदाचक्ष्वजनप्रियं ॥ चंद्रहासउवाच युष्मादृशांस तांसंगाद्विपदोयांतिसंक्षयं ॥ ४९ ॥ कृष्णेतुभक्तिःसुदृढाजायतेमुक्तिदानृणां ॥ संदेशात्तेपितुःप्राप्तःपत्रंगृह्णीष्ववाचय ॥ ५० ॥ एकांतेगूढमस्यत्रमहत्कार्यंनवेद्यितत् ॥ करेगृहीत्वामदनःपत्रंप्रोवाचविस्मितः ॥ ५१ ॥ शृण्वंतुनिखिलाः पत्रमेकांतेकरवाणिकिं ॥ अथपत्रंसभामध्येवाचयिष्यामिनान्यथा ॥ ५२ ॥ शृण्वतांसर्वलोकानांवाचयामाससमंत्रि जः ॥ स्वस्त्यस्तुमदनायाशुविषयास्मैप्रदीयतां ॥ ५३ ॥ नरूपंनकुलंशौर्यंमाविद्यांचावलोकय ॥ इतिपत्रेस्थितंवीक्ष्य

हृषितोमदनोब्रवीत्॥५२॥ अद्यमेपावितोवंशःपित्रासर्वैश्चबांधवाः॥ मयायच्चिंत्यतेनित्यंस्वयमेवाभवच्चतत्॥५३॥
नारदउवाच हर्म्यस्यसप्तमेपृष्ठेविषयाकाममोहिता॥ सखीभिःसवयोभिस्तंचंद्रहासमवैक्षत॥५४॥ ध्यायंतीमन
सादेवींपार्वतींशंकरप्रियां॥ भर्त्तारंदेहिमेदेविदाक्षायणिनमोऽस्तुते॥५५॥ त्वत्प्रियार्थंकरिष्यामिव्रतंनभसिचागते॥
कृष्णपक्षेतृतीयायांरात्रौकृत्वातुपूजनं॥ ५६॥ गंधैश्चविविधैर्धूपैःपक्वान्नैर्मोदकादिभिः॥पुष्पमंडपिकांकृत्वामूर्तिंचि
त्रमयींशुभां ॥ ५७॥ तोषयिष्यामिनक्तेनतथाजागरणेनच॥ मदनस्यमुखाद्वाणीसत्यानिर्यातुवेदवत्॥ ५८॥ इति
संचिंतयंतींतांवयस्याकाचिदब्रवीत्॥ मनोरथस्तेकिंजातःकिंचिंतयसिभामिनि ॥ ५९ ॥ तयाचंपकमालिन्याहसं
त्यायदुदाहृतं॥ वक्षोभित्वानिर्गतौतौभक्त्याकिंतेरतिस्मरौ॥६०॥ प्रियंप्रार्थयपूजार्थमनयोस्तापसंक्वचित्॥ दृष्टःस
तापसःप्राणानस्मैसात्वंप्रयच्छच॥ ६१॥ इत्थंसखीनांवचनेनबालाप्रहर्षिताधोवदनालिलेख॥ भूमिंपदांगुष्ठनखे
नभर्त्तुर्गुणानिवाग्र्यान्विषयाऽतिनम्रा॥ ६२॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेचंद्रहासमदनसंभाषणंनाम
चतुःपंचाशत्तमोऽध्यायः॥५४॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥
अर्जुनउवाच अतःपरंकिमभवन्मदनोधृष्टबुद्धिजः॥ कथंविवाहमकरोद्विषयाचंद्रहासयोः॥ १॥ कथंचचंदनाव
त्याःप्राप्तोमंत्रीस्वकंपुरं॥ किमब्रवीत्समदनंतन्ममाचक्ष्वनारद॥ २॥ नारदउवाच अथविप्रान्समाहूयज्योतिः
शास्त्रविशारदान्॥ पप्रच्छमदनोलग्नंविषयाचंद्रहासयोः॥ ३॥ गणकास्त्वब्रुवन्वाक्यंमदनंप्रतिहर्षिताः॥ शुक्रजीवा
वधिपतीतृतीयैकादशंशुभं॥ ४॥ अनयोस्तवभाग्याच्चगोरजोध्रियतेपुनः॥ पताकाइवकुर्वंत्यःपुच्छैरूर्ध्वमुखैःपुरं॥
॥ ५॥ लक्षयित्वाऽभिधावंत्योगावोवत्सदिदृक्षवः॥ त्रिगुणोद्धूतयारज्ज्वाबद्धंगोष्ठेहिचातुरं॥ ६॥ पश्यभाग्योदयंवत्स
वैष्णवस्यसमागमात्॥ अद्यैवरुचिरंलग्नंसर्वदोषविवर्जितं॥ ७॥ गोधूलिकंवराहाद्यैरुदितंफलदंनृणां॥ तेषामाक
र्ण्यवचनंमदनोहर्षनिर्भरः॥ ८॥ आदिदेशपुरंध्रीस्ताःपातिव्रत्योपशोभिताः॥ स्नापयंत्वद्यविषयांचंद्रहासंपृथक्पृथक्
॥ ९॥ सजलैःकलशैरार्द्रपल्लवैस्तंतुभिर्युतैः॥ परिधाप्यचवासांसिसमानयितुमर्हथ॥ १०॥ रक्तचंदनवर्णाढ्योमदन

स्तमुपाययौ ॥ उत्तिष्ठोत्तिष्ठभद्रंतेचंद्रहासमहामते ॥ ११ ॥ पतिव्रताकरधृतैःकलशैःस्नाहिवारुणैः॥ नारदउवाच सु
स्नातंचंद्रहासंतंगृहेरम्येन्यवेशयत् ॥ १२॥मदनःसाधुशब्दादिमधुपर्कमचीकरत्॥जाययातारकाक्ष्याचपादप्रक्षालनं
कृतं ॥ १३ ॥ तंचंद्रहासंरमणीयवेषमंतर्गृहेसोऽप्यनयत्स्मराढ्यः॥ स्वांकन्यकांतांविषयामथांतराचित्रांपटींमंत्रयुतैर
धारयत्॥ १४ ॥ पप्रच्छगोत्रंमदनस्तदीयंपितुःपितुस्तत्पितुराशुनाम ॥ सचंद्रहासोप्यवदत्स्वगोत्रंहरिःस्वयंमेजनकः
सएव॥ १५ ॥ पितामहःसप्रपितामहश्चहरेर्नचान्योऽस्तिसुहृद्द्वितीयः ॥ ऋतेकुलिंदाच्चगुरोर्मदीयादाधारशक्तेर्नचत
स्यपत्न्याः॥ १६॥ तच्चंद्रहासीयमनन्यभावंवचोनिशाम्यर्थपतिःस्वकामात्॥स्वसारमुच्चैःप्रददाद्गिराऽस्मैलक्ष्मीपतिस्तृ
प्तिमुपैतुदानात्॥ १७ ॥ बद्धांजलीकुंकुमचर्चितांगौतौदंपतीप्रापतुराशुवेदीं ॥ हुताशनंतर्पितमाज्यपूरैःपरीयतुःसप्त
पदान्ययातां॥ १८ ॥ द्विजान्नमश्चक्रतुराशिषस्ताःस्वीचक्रतुःकांतिमवापतुस्तौ॥ पतिव्रतानांतिलकानिभालेसंदध
तुःपत्रफलानिपाणौ॥ १९ ॥ ततोऽसौमदनोत्हृष्टःप्रददौमंडनंबहु॥ गावश्चघटदोहिन्योमहिष्यःक्षीरसिंधवः॥ २० ॥
मुक्ताफलानिरत्नानिस्वच्छानिविविधानिच॥ वासांस्यगुरुकर्पूरचंदनानिचवीर्यवान्॥२१॥दत्वातुमदनोदध्यौकिम
स्मैदीयतेमया॥ चंद्रहासायचात्मानमर्पयामीतिमेमतिः॥ २२ ॥ मिषतांसर्वलोकानांमदनोवाक्यमब्रवीत्॥ इदंशि
रःसरोजंचकालायास्मैगमिष्यते॥ २३॥ यदाकदाचिद्दास्यामिक्रीडनार्थंकरांबुजे ॥ यथायंचंद्रहासोमेजामाताविष
यान्वितः॥२४॥ पुत्रपौत्रैःपरिवृतश्चिरकालंप्रशास्त्विमां ॥ तथाभूयाच्चमेपुण्याद्विष्णोराराधनात्मकात्॥ नानालंकर
णैर्वस्त्रैःपूजयित्वाथगालवं॥ २५॥ मदनःप्रत्युवाचाथद्विजानन्यांश्चयाचकान् ॥ प्रातःसर्वैरलंकार्यंगृहंपूज्यतमैर्मम
॥ २६॥यथाशक्त्याकिंकरोऽहंपूजयिष्यामिचाखिलान्॥ तान्विसृज्यद्विजान्सर्वान्चंद्रहासमभोजयत्॥ २७॥ विष
यासहितंकामोबुभुजेस्वजनान्वितः॥ सुष्वापमदनःकिंचिद्ब्राह्मेजातेसमुत्थितः॥२८॥कृत्वात्मचिंतनंपश्चादादिदेशव
चोहरान्॥ मंडपंरचयंत्वेकेचित्रयंत्वद्यमंदिरं ॥ २९ ॥ संमार्जयंतुकेचिच्चचंदनोदकसेचनैः॥ उच्चैःक्रियंतांविपुलाःप
ताकादंडमंडिताः॥ ३० ॥ नारदउवाच तैस्तदाकारिबीभत्सोसेवकैरथनिर्मलाः॥ दिशःकुर्वन्समुदितोविनता

तनयोविपात्॥ ३१ ॥ कथयन्निवलोकानांस्वामिनंसमुपागतं॥ उत्थीयंतांतुभोलोकाःक्रियतांवैदिकोविधिः॥३२॥
उदयाचलकूटस्थोरविःसन्निहितोभवत्॥ चंद्रहासःसमालोक्यज्ञात्वासम्यगथोज्वलं ॥ ३३ ॥ रात्रिजंप्राणिनांचि
त्तमोहध्वांतमपोथयत्॥ विषयाचंद्रहासौतौस्नापितौविमलैर्जलैः ॥ ३४ ॥ हरिद्राचंपकस्नेहैरुद्वर्त्यचपुरंध्रिभिः॥ परि
धाय्यचवासांसिमुकुटाभ्यामलंकृतौ॥ ३५॥ तौदंपतीततोवेदीमागतौस्त्रीपुरस्कृतौ॥ कृतस्वस्त्ययनौविप्रैरुपविष्टौव
रासने॥३६॥ अथप्राप्ताद्विजाःपूज्यावेदशास्त्रविशारदाः॥ नराश्वगजदेहानांसम्यग्रक्षाचिकित्सकाः॥३७॥ मागधा
नर्त्तकागीतशिक्षकावंशधारिणः॥ मृदंगवादकावेश्याःशैलूषाजलचित्रकाः॥ ३८॥ ऊर्ध्ववंशंसमारुह्ययेक्रीडंतिन
राःक्षितौ॥ मुखाद्वह्नेर्महाज्वालामुत्सृजंतितथाचये ॥ ३९॥ ढक्काडमरुजीवाश्वकिन्नरामधुरस्वराः ॥ सूतायेचपुराण
स्यानुच्चरंतिनृपान्सदा॥४० ॥प्रेतलोकगतान्शूरान्वर्णयंतिचमागधाः ॥ वर्तमानान्नृपान्सम्यग्येतुसंग्रामकारिणः
॥ ४१ ॥ वर्णयंतिप्रबंधैर्येबंदिनस्तेसमाययुः॥ नानाबंधेषुकुशलामल्लास्तेब्रह्मचारिणः॥ ४२ ॥एवंनानाविधैर्लोकैःसं
कीर्णंतस्यमंदिरं॥ मदनस्याभवत्पार्थतृष्णैकानसमागता ॥ ४३ ॥ अन्येसर्वजनाःप्राप्तालाभकौतुकवीक्षया ॥ ते
भ्योरत्नानिवासांसिकांचनंप्रददौबहु॥ ४४॥ अनुक्रमात्समदनोविनयाढ्यैर्वचोमृतैः॥ सुहृत्संबंधिनःसर्वान्तोषया
मासभारत॥४५॥हृष्टपुष्टजनाकीर्णंतद्भूत्कौंतलंपुरं॥वैष्णवागमनात्पार्थविष्णुभक्तेःफलंशृणु॥ ४६ ॥ अकैतवंहृषी
केशंध्यायंतिमनसासदा ॥ तेषांविघ्नगणाःपार्थकिंकरिष्यंतिनिर्बलाः ॥ ४७॥ विषमस्मैप्रदातव्यमितिहेतोश्चमंत्रि
णा॥ प्रेरितश्चंद्रहासोऽयंविषयांप्रापकन्यकां ॥ ४८ ॥भूमौपरवशोजंतुरभिमानीभवेद्वृथा॥ हठाद्यःकुरुतेजंतुस्तन्न
सिद्ध्यतिकर्हिचित्॥ ४९ ॥ विवाहस्त्वभवज्जिष्णोविषयाचंद्रहासयोः ॥ अतःपरंयदभवत्तदाकर्णयनिश्चलः ॥ अभ
क्तिभक्त्योर्माहात्म्यंपुंसांविस्मयकारकं॥ ५० ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेचंद्रहासविवाहोनामपंचपंचाश
त्तमोऽध्यायः॥५५॥ ॥छ॥ ॥छ॥ ॥छ॥ नारदउवाच तस्यांतुचंदनावत्यां
कुलिंदंनिगडैर्दृढैः॥ धृष्टबुद्धिर्बबंधासौदंडयामासताःप्रजाः॥ १ ॥ कंठेबद्ध्वाशिलांतोयेनिमज्यार्थमयाचत ॥ ज्वलद्

न्नेरुपरिताःप्रजादग्रेऽर्थलिप्सया॥२॥ अतूतुदत्समांसानिशस्त्रैश्चपुरवासिनां॥ अपाययच्चूर्णतोयंनासारंध्रेणकांश्चन ॥ ३ ॥ दंडयित्वाप्रजाश्चैवंधृष्टबुद्धिरथोब्रवीत्॥ कुलिंदत्वंहिरेमूढमांनजानासिदारुणं॥ ४॥ चंद्रहासाश्रयेणत्वंगर्वितोसिधनागमात्॥ द्रव्यंतत्प्रेषितंमत्व्यंतेनसार्धंभवान्कथं॥ ५ ॥ नागतोसिविमूढात्मन्सेवकाःप्रेषितास्त्वया॥ तेपिमत्तामयादत्तमन्नमादन्नबालिशाः॥ ६॥ सांप्रतंत्वंव्रतंदानंकरोषिधनगर्वतः॥मदीयंनाशितंद्रव्यंनिश्चलंतुत्वयाव्ययात्॥ ७॥ आशैशवात्कदाचिन्मेनास्यांपुरिशिवालयं॥ विष्णवालयंतडागानिवापीकूपमठाःप्रपाः ॥ ८ ॥ ब्राह्मणानांगृहाश्चेहपुराणपठनंतथा॥ नवभूवुरिदानींतुसर्वतस्तन्मयीपुरी॥ ९ ॥ कृतात्वयामदीयेनवित्तेननिखिलेनच ॥ कुत्रवेदमविदःसंतिकुत्रतेशिल्पिनोगताः ॥ १० ॥ यैर्भक्षितंमदीयंतद्वसुसर्वंदुरात्मभिः ॥ क्वगताब्राह्मणास्तेवैसर्वेपुर्यधिकारिणः॥ ११ ॥इत्थंनिर्भर्त्सयामासकुलिंदंधृष्टधीस्तदा॥ लोभमाहूयसचिवंसेवकंवाक्यमब्रवीत् ॥ १२ ॥तृष्णयाजाययासार्धंत्राहीमांचंदनावतीं॥ इतिसंदिश्यतंपश्चाद्ययौकौंतलकंपुरं॥ १३॥ हर्षेणमहतायुक्तआदायविपुलंधनं॥ पुत्रंमनसिसंचिंत्यचंद्रहासंतथैवच॥ १४॥ मदीयोमदनःपुत्रोविषंतस्मैप्रदास्यति॥तृतीयोदिवसोद्यद्यचंद्रहासेगतेसति॥ १५॥ एकेनावापनगरंद्वितीयेवासरेरिपुः॥ प्राप्तोनूनंसमदनःसायाह्नेतत्करिष्यति॥ १६॥ यामेनैकेनयास्यामिकृतकार्यःपुरंप्रति॥ इतिसंचिंत्यमनसाशिबिकामारुरोहसः॥ १७॥ ऊढांचत्रिशतैःपुंभिर्मत्स्यभुग्भिर्महाबलैः॥ पार्थगच्छन्धृष्टबुद्धिःपापात्मादंडमाददे ॥ १८॥ वैणवंग्रंथिलंदीर्घंताडयामासधीवरान्॥शीघ्रंगच्छतरेदुष्टाधीवरामत्स्यभक्षकाः॥ १९॥ तेऽब्रुवन्नपगच्छामोमंत्रिन्शीघ्रतरंप्रभो॥ माताडयभृशंदंडप्रहारैर्गच्छतोहिनः ॥ २० ॥ नहुषस्यकुलेजातोभवान्किंनमुनीश्वराः॥ वयंस्मभूपमन्युत्वाद्भोगिराजंनकुर्महे ॥ २१ ॥ सुवातेपोतवज्जग्मुर्धीवराढीवराश्चते॥ उपर्युपरिडीयंतेकाकाःस्मशिबिकांहठात् ॥ २२॥ चंच्वाभिघातंकुर्वंतिपक्षतुंडनखैश्चतं ॥एवंपार्थाभवत्तत्रविद्विपापस्यचेष्टितं॥ २३॥ तावत्पुरःप्रादुरभूद्विशालःफणाभिराकाशमिवालिहन्वै॥पुच्छंनिवेश्यक्षितिपृष्ठएवप्रोवाचसर्पोनृगिराविषाढ्यः॥ २४ ॥ त्वदीयसौवर्णघटेषुनित्यंवसामिरक्षंस्तवसूनुनातत् ॥ स्थानंमदीयंकिलनाशितंहिग

च्छामितेस्वस्तिअलंविषादात् ॥ २५ ॥ इत्येवमुक्त्वावचनंसर्पःपातालमाविशत् ॥ विसिस्मायसमूढात्मानाजानाद्गूढ
पाद्वचः ॥ २६ ॥ धृष्टबुद्धिःपुनर्दंडप्रहारैर्धीवरान्दृढं ॥ उत्तिष्ठंश्चर्वयन्नोष्ठौदंतैर्दंतांश्चपीडयन् ॥ २७ ॥ युष्माकंचरणान्
ग्रामंगत्वाछेत्स्यामिमाचिरं ॥ इत्थंसपीडयन्प्रापोधीवरान्कौंतलंपुरं ॥ २८ ॥ यामेनैकेनशुश्रावधृष्टधीस्तूर्यनिःस्वनं ॥
चिंतयामाससमनसाकार्यंपुत्रेणतत्कृतं ॥ २९ ॥ नारदउवाच तस्माद्विमानादवरुह्यमूढःपदातिरेकःप्रययौपुर
स्तात् ॥ ददर्शसूतानथमागधान्बहून्स्वलंकृतान्बंदिनएववस्त्रैः ॥ ३० ॥ बंदिनऊचुः आगच्छशीघ्रंधृष्टबुद्धेसुते
नकृतंकार्यंसूरिणातत्तुसर्वं ॥ ब्रह्मायुस्तेचंद्रहासस्यभूयात्तथासूनोर्मदनस्यातिदातुः ॥ ३१ ॥ धृष्टबुद्धिरुवाच आः
पापारेबंदिनश्चंद्रहासःकोसौदूरात्सर्पतहन्मिदंडैः ॥ इत्यूचिवान्धृष्टबुद्धिःपुरस्तात्पूज्यान्विप्रान्पूजितांश्चंदनेन ॥ ३२ ॥
नानाक्षौमैर्भूषितान्भूषणैश्चगृहान्स्वीयानागतानन्वपश्यत् ॥ ३३ ॥ विप्राऊचुः भूयादेवंस्वस्तितेधृष्टबुद्धेकुतो
लब्धश्चंद्रहासोवरोयं ॥ भाग्योदयस्तवरम्योविभातियेनेदृशीकीर्तिरापूर्यतेते ॥ ३४ ॥ निशम्यतेषांवचनंदुरात्माजज्वा
लमंत्रीकिलवाडवोऽब्धौ ॥ दंडंसमुद्यम्यकुतःपुरस्ताद्गमिष्यथेत्यादिजजल्पविप्रान् ॥ ३५ ॥ विप्राःपलायंतिविसृज्य
वासोकृष्णाजिनंतेतुततःस्खलंतः ॥ विमुक्तकेशाःस्खलदुत्तरीययज्ञोपवीताःपथिनिःश्वसंतः ॥ ३६ ॥ ततोत्दृष्टागा
यकामंत्रिणंतेप्रोचूराज्यंचंद्रहासोविधत्तां ॥ सतान्चक्रेभिन्नकपालवीणामृदंगढक्कानकभेरिवंशान् ॥ ३७ ॥ पश्यं
श्चित्रंद्वारिवर्णैर्विचित्रंप्रायाद्द्वाराभ्यंतरंधृष्टबुद्धिः ॥ नीराजितुंचंपकांग्योभिजग्मुर्दीपान्विताःकुंकुमचर्चिताश्च ॥ ३८ ॥
आहस्मताधृष्टधीरुत्सवोऽयंकस्मात्कृतःकिंचलब्धंसुतेन ॥ ऊचुर्मृगाक्ष्यस्तवसूनुनाद्यलब्धोहितश्चंद्रहासःकुलस्य ॥
॥ ३९ ॥ दुष्टोमूढोधृष्टधीराहतस्मैधनंदत्तंचंद्रहासायतेन ॥ ४० ॥ स्त्रियऊचुः मैवंब्रूहिचंद्रहासायतस्मैदत्ताक
न्याविषयापुत्रकेण ॥ तासांवचःशल्यविभिन्नगात्रोबिभ्रच्छोणेलोचनेक्रोधयुक्तः ॥ ४१ ॥ ततःप्रायात्सप्तमद्वारम
ध्यंयत्रास्तेयंद्वारपालोविवेकः ॥ श्रद्धायष्टिस्तंचदृष्ट्वाससारप्राप्तेक्रोधेकाविवेकस्यवार्त्ता ॥ ४२ ॥ अथापश्यद्धृष्टधीर्वे
दिकायांतंचंद्रहासंविषयांचकन्यां ॥ बद्धांचलांचंद्रहासांचलेनपुष्पोद्गुंफंमुकुटंबिभ्रतींच ॥ ४३ ॥ स्वेदोमहान्वेपथुश्चा

स्यगात्रेप्रादुर्बभूवाप्रतिमःशुष्कमास्यं ॥ क्रुद्धोदध्यौकिंकृतंमत्सुतेनयन्नापश्यद्दूढपत्रंमदीयं ॥ ४४ ॥ जामाताथोश्व
श्रुरंवीक्ष्यपत्न्यासहोत्थितःकुरुतेस्मप्रणामं ॥ यथाव्याघ्रंबालमृगोविलोक्यतथाचामुंनाभ्यनंदद्द्विरापि ॥४५॥ अथ
मदनमुपागतंप्रनम्रंचरणयुगेवदतिस्मधृष्टबुद्धिः॥वदसुतकिमकारिरेदुरात्मन्ममचमनोनहितोषमाजगाम॥४६॥आ
हस्मतंमदनस्तातपत्रंविलोक्याहंदत्तवान्स्वांस्वसारं॥वरायास्मैचंद्रहासायधेनूर्वासोहिरण्यंमहिषीःकोटिशोऽद्य॥४७॥
कस्मात्तातःक्रुध्यतिमांविलोक्यकोशागारंपश्यरिक्तंकृतंतत् ॥ नानादेशादागतेभ्योद्विजेभ्योदत्तंद्रव्यंयाचकेभ्योऽखि
लेभ्यः ॥ ४८ ॥ नारदउवाच आःपापोयोधुनयन्स्वंकपालंहस्तेहस्तंपेषयन्निःश्वसन्सः॥ प्रोवाचेदंधृष्टधीर्याहि
घोरंवनंभिक्षामटकृष्णाजिनीत्वं॥४९॥ मदनउवाच नैतच्चित्रंताततरामोवनंकिंपितुर्वाक्यान्निरगात्पुण्यकीर्तिः॥
तथावनंतववाक्यात्प्रयास्येपरंन्यूनंकिंकृतंमेविवाहे॥५०॥नाहूतोयंदेशपालःकुलिंदःपत्नीतदीयाकिंकरोम्यल्पकाले॥
समायातस्तत्सुतोलेखिपत्रंशीघ्रंबलंनमुहूर्तस्त्वथेत्थं॥ ५१॥किंवाधुनायामिकुलिंदमेकःसमाहूयात्रानयिष्येनमस्ये॥
न्यूनंनान्यद्विषयायाविवाहेसर्वेंदत्तावाजिनोहस्तिनश्च॥ बाहूशिरोदायिमयावरायपूज्यायकृष्णानुचरायतात॥५२॥
धृष्टबुद्धिरुवाच दूरंप्रसर्पनमुखंममदर्शयाद्यपत्रंसमानयनिरीक्षयतत्रकिंस्वित् ॥ तेनाहृतंपत्रमपश्यदेषमंत्रीवि
धातुर्लिपिमन्वमंस्त ॥ ५३॥ क्षणंदध्यौसांत्वयामासपुत्रंसत्यंत्वदीयंकिलवीक्षितंच॥ मयात्वसौचंद्रहासोविसृष्टस्त
थापत्रंलिखितंगूढभावं॥ ५४॥ जातोदैवाद्विषयायाविवाहोनाहंकर्त्तानभवान्नापरोऽपि॥ इत्थंसमाश्वास्यसुतंदुरा
त्मातंचंद्रहासंपरिपूज्यदंभात्॥ ५५ ॥ जातेचतुर्थेदिवसेचतुर्थीकर्मव्यधात्कैतवाद्धृष्टबुद्धिः॥ ततःपरंदूयमानःसराज
न्कर्ताकिमत्राद्यविपक्षपक्षे॥ ५६ ॥ कृतंमयात्व्येकमहोद्वितीयमग्रेकथंकार्यममुष्यशत्रोः ॥ इत्थंनिमग्नःसतुशोकसिं
धौकर्तव्यनौकारहितेऽल्पबुद्धिः॥५७॥ इत्याश्वमेधिकेप० जै० धृष्टबुद्धिसंतापोनामषट्पंचाशत्तमोऽध्यायः॥५६॥छ॥
नारदउवाच धृष्टधीश्चिंतयामासविपरीतमभून्मम ॥ दत्तातुविषयाकन्यावध्यायास्मदरातये॥ १ ॥ अतःपरंम
याकार्यंकिंकंगच्छामिबांधवं॥ पुत्रोयंमद्वशेनैववर्त्ततेमदनोमलः॥ २॥ आभ्यांमदीयंहिकुलंपुत्राभ्यांनाशितंध्रुवं॥

चंद्रहासोविशेषेणनाशयिष्यतिमत्कुलं ॥ ३ ॥ विषयाविधवाभूयात्करिष्याम्यनृतंवचः ॥ मुनीनामितिसंचिंत्यचांडा लांस्तानथाह्वयत् ॥ ४ ॥ एकांतेसंस्थितःपाप्मासंदिदेशशनैःशनैः ॥ चंडिकायतनंबाह्येपुरादुपवनेशुभे ॥ ५ ॥ करवा लकराःसर्वेतत्रगच्छथमौनिनः ॥ गूढंतस्यस्थिताःकोणद्वयेनिश्चलमानसाः ॥ ६ ॥ जातेपितृप्रसूकालेयःकश्चिदपियास्य ति ॥ भवद्भिःसहिहंतव्योमाविचारयतध्रुवं ॥ ७ ॥ पूर्वंयथावंचितोऽहंतथामाकुरुताधुना ॥ युष्माकंसंपदामर्धंप्रदास्येम दनांशकं ॥ ८ ॥ तस्यवाक्यंसमाकर्ण्यतेंऽत्यजाश्चंडिकालयं ॥ जग्मुःप्रच्छन्नवेषाश्चतृतीयप्रहरेसति ॥ ९ ॥ धृष्टबुद्धि श्चंद्रहासंविनयाद्वाक्यमब्रवीत् ॥ चंद्रहासमहाप्राज्ञशृणुमेवचनंहितं ॥ १० ॥ अस्माकंहिकुलेदेवीचंडिकापूज्यतेकिल ॥ कृतोद्वाहोभवानद्यतांनमस्कुरुमातरं ॥ ११ ॥ सायंसंध्यांविधायाशुपुष्पाण्यादायचंदनं ॥ एकःप्रयाहितांदेवींपुरबाह्य कृतालयां ॥ १२ ॥ पूजितुंचनमस्कर्तुमित्यादिश्यकुधीःस्थितः ॥ ओमित्युक्त्वाततोवाक्यंचंद्रहासोऽप्यकैतवात् ॥ १३ ॥ ससंध्यावंदनंकृत्वागंतुकामोबभूवह ॥ अंबिकालयमेवासौचंद्रहासोमहायशाः ॥ १४ ॥ नारदउवाच एतस्मि न्नंतरेपार्थराजाकौंतलपःसुधीः ॥ गालवंतंसमाहूयदेहचेष्टामथाब्रवीत् ॥ १५ ॥ स्वामिन्गालवभूलोकेराज्यंमेकुर्व तोनहि ॥ सुखमस्तितनुच्छायामशिरस्कांविलोकये ॥ १६ ॥ उत्क्रांतिसमयोमेऽद्यसमायातोनसंशयः ॥ अरिष्टाध्याय माख्याहियंश्रुत्वानिर्वृतिलभे ॥ १७ ॥ गालवउवाच अरिष्टानिमहाराजशृणुवक्ष्यामितानिते ॥ दत्तात्रेयोऽप्य लर्कायियान्याचख्यौमहात्मने ॥ १८ ॥ अरिष्टानिसमालोक्यमृत्युंजानातियोगवित् ॥ देवमार्गंध्रुवंशुक्रंसोमच्छायाम रुंधतीं ॥ १९ ॥ योनपश्येन्नजीवेत्सनरःसंवत्सरात्परं ॥ अरश्मिबिंबंसूर्यस्यवह्निंचैवांशुमालिनं ॥ २० ॥ दृष्ट्वैकादश मासाच्चनरस्तूर्ध्वंनजीवति ॥ सुवर्णवर्णान्वृक्षांश्चनवमासान्सजीवति ॥ २१ ॥ स्थूलःकृशःकृशःस्थूलोयोऽकस्मा देवजायते ॥ प्रकृतिश्चविवर्तेततस्यायुश्चाष्टमासिकं ॥ २२ ॥ खंडंयस्यपदंपार्ष्ण्योःपादस्याग्रेतथाभवेत् ॥ पांसुकर्दम योर्मध्येसप्तमासान्सजीवति ॥ २३ ॥ कपोतगृध्रोलूकाश्चवायसोवापिमूर्धनि ॥ क्रव्यादोवाखगोलीनःषण्मासायुःप्र दर्शकाः ॥ हन्यतेकाकपंक्तीभिःपांसुवर्षेणयोनरः ॥ २४ ॥ स्फुरेच्चयस्यवैचर्मस्तनादूर्ध्वमुरस्थलं ॥ तस्यापिपंचभिर्मा

सैर्विद्यान्मृत्युमुपस्थितं ॥ २५ ॥ स्वांछायांचान्यथादृष्ट्वाचतुर्मासान्सजीवति॥ अनभ्रेविद्युतंदृष्ट्वादक्षिणांदिशमाश्रि
तां॥ २६॥ योनिशींद्रधनुर्वापिजीवितंद्वित्रिमासिकं॥ घृतेतैलेऽथवादर्शेतोयेवाप्यात्मनस्तनुं॥ २७॥ यःपश्येदशिर
स्कांचमासार्धंनसजीवति॥ यस्यत्वस्थिसमोगंधोगात्रेशवसमोऽपिवा॥ २८॥ तस्यार्धमासिकंज्ञेयंनरस्यनृपजीवि
तं॥यस्यवैस्नातमात्रस्यहृत्पद्ममवशुष्यति॥ २९॥पिबतश्चजलंशोषोदशाहंसोऽपिजीवति॥ऋक्षवानरयुग्मस्थोगाय
न्योदक्षिणांदिशं॥ ३०॥ स्वप्नेप्रयातितस्यापिमृत्युस्तत्कालमृच्छति॥ रक्तकृष्णांबरधरागायंतीहसतीचया॥ ३१॥ द
क्षिणाशांनयेन्नारीस्वप्नेसोऽपिनजीवति॥ नग्नंक्षपणिकंस्वप्नेहसमानंप्रपश्यति॥ ३२॥यएवंतस्यचक्षिप्रंविद्यान्मृत्युमु
पस्थितं॥ आमस्तकतलाद्यस्तुनिमग्नःपंकसागरे॥ ३३॥ स्वप्नेपश्यत्यथात्मानंनरःसद्योम्रियेतसः॥ कोशागारंरथा
गारंधक्षयंतंस्वकंशिरः॥ ३४॥ दृष्ट्वास्वप्नेदशाहेनमृत्युरेवनसंशयः॥ करालैर्विकटैःकृष्णैःपुरुषैरुद्यतायुधैः॥ ३५॥ पा
षाणैस्ताडितःस्वप्नेसद्योमृत्युमवाप्नुयात्॥ नात्मानंपरनेत्रस्थंवीक्षतेनसजीवति॥ ३६॥ पिधायकर्णौनिर्घोषंनशृणो
त्यात्मसंभवं॥ स्वभाववैपरीत्येनवर्ततेनसजीवति॥ ३७॥ देवान्नार्चयतेविप्रान्गुरून्वृद्धांश्चनिंदति॥ मातापित्रोर
सत्कारंजामातॄणांकरोतियः॥ ३८॥ योगिनांज्ञानविदुषामन्येषांचमहात्मनां॥ प्राप्तकालःसपुरुषोनतुजीवतिवैक्ष
णं॥ ३९॥ योगिनासततंयत्नादरिष्टान्यवनीपते॥ विलोक्यस्वासनेस्थित्वाध्यातव्यंपरमंपदं॥ ४०॥ सारभूतमुपासी
तज्ज्ञानंयत्कार्यसाधनं॥ इदंज्ञेयमिदंज्ञेयमितियस्तृषितश्चरेत्॥ ४१॥ अपिकल्पसहस्रायुर्नसज्ज्ञानमवाप्नुयात्॥ त्यक्तसं
गोनिराहारोजितक्रोधोजितेंद्रियः॥ ४२॥ विषयेभ्योनिवर्त्याशुमनोध्यानेनिवेशयेत्॥ नारदउवाच योगसारं
समाकर्ण्यगालवान्मुनिपुंगवात्॥ ४३॥ राज्यंत्यक्तुमनाःसोथजीर्णांत्वचमिवोरगः॥ तत्रोपविष्टंमदनंसमाहूयेदम
ब्रवीत्॥ ४४॥ राजाकौंतलपस्तस्यकर्णेजामातरंस्वकं॥ समानयाशुमदनकरिष्येत्वद्यात्मनोहितं॥ ४५॥ बाढमित्याल
पित्वासप्रायाज्जामातरंप्रति॥ सूर्यंजपाप्रसूनाभेत्वस्तंगिरिमुपाश्रिते॥ ४६॥ ददर्शचंद्रहासंतंकृतसंध्याविधिंशुचिं॥
पुष्पकर्पूरकस्तूरीचंदनांबरधारिणं॥ ४७॥ हरिद्राकुंकुमोन्मर्दगौरांगंमुकुटावृतं॥ एकाकिनंसमायांतंपथिदृष्ट्वाऽब्रवी

त्स्मरः ॥ ४८ ॥ अयित्वंचंद्रहासाशुकुतोव्रजसितद्वद ॥ चंद्रहासोब्रवीद्वाक्यंपित्राहंप्रेरितस्तव ॥ ४९ ॥ चंडिकांचनमस्क
र्तुंमहिषघ्नींबहिःस्थितां॥ वारयामासमदनस्त्वंयाहिनृपमंदिरं॥५०॥देहिचंदनपुष्पाणित्वंनृपत्वरितंव्रज॥इत्युक्त्वापुष्प
मालाढ्यंपात्रमाच्छिद्यतत्करात्॥५१॥ययौसमदनश्चैकश्चंडिकाभवनंतदा ॥ अवतीर्यहयात्तस्मात्सेवकान्विनिवार्य
च ॥ ५२ ॥ व्रतभंगभयात्पार्थच्छत्रचामरवर्जितः ॥ चंद्रहासस्तमारुत्थवाजिनंचप्रयत्नतः ॥५३॥ तैरेवसेवकैःसार्धंछ
त्रचामरवीजितः ॥ प्रापकौंतलपंवेगान्नमस्कृत्यपुरःस्थितः॥५४॥चंद्रहासंसमालोक्यराजाकौंतलपोऽब्रवीत्॥स्वामि
न्गालवयास्यामिवनंत्यक्त्वापरिच्छदं॥५५॥सर्वसंगपरित्यागंपात्रेकुर्वेद्यवैष्णवे॥ओमित्युक्तःसमुनिनाददौचंपकमा
लिनीं ॥ ५६ ॥ चंद्रहासायनिखिलंराज्यंप्रादादवाङ्मुखः ॥ परित्यज्यचवस्त्राणिनग्नऊर्ध्वभुजोनृपः ॥ ५७ ॥ वनंजगा
मसंत्यक्त्वासमलोष्टाश्मकांचनः ॥ प्राप्ययोगर्द्धिमतुलांपरांनिर्वाणलक्षणां ॥ ५८ ॥ पश्यंस्तुच्छमिदंसर्वंसदेवासु
रमानुषं॥पाशैर्गुणमयैर्बद्धंबध्यमानंचनित्यशः॥५९॥पुत्रस्वभ्रातृपौत्रादिस्वपारक्यादिभावितैः॥आकृष्यमाणंकरणै
र्दुःखार्तंभिन्नदर्शनं॥६०॥अज्ञानपंकगर्तस्थमनुबुध्वामहीपतिः॥आत्मानंचसमुत्तीर्णंगाथामेतामगायत ॥ ६१॥अ
होकष्टंयदस्माभिःपूर्वंराज्यमनुष्ठितं॥अपिपश्चान्मयाज्ञातंयोगान्नास्तिपरंसुखं॥६२॥ नारदउवाच इत्थंसंसारपाशे
भ्योमुक्तःकौंतलपोनृपः॥सिंहासनेचंद्रहासंगालवःसोभ्यषेचयत् ॥६३॥गांधर्वेणविवाहेनतदाचंपकमालिनीं ॥परि
णिन्येचंद्रहासःसूर्येस्तंयातिपाटले॥६४॥ नारदउवाच पुष्पाणिचसमादायगच्छन्समदनःपथि॥ददर्शयुध्यत्पुरतोबि
डालद्वयमातुरं॥६५॥हस्ताच्चंदनपुष्पाणांपात्रंभूमावथापतत्॥रुधिरंप्रस्रवन्नेत्रान्मदनस्यमुखात्तथा॥६६॥उलूकःसच
वैमूर्ध्निस्थितवान्भीमनिःस्वनः॥तथाप्यगणयन्पार्थमदनोवाक्यमब्रवीत्॥६७॥अपिस्वस्तिभवेत्तस्मैचंद्रहासायधीम
ते॥वैष्णवायचधीरायजामात्रेममसांप्रतं॥६८॥इत्येवंचिंतयन्प्रापमदनश्चंडिकालयं ॥६९॥अवाङ्मुखःसन्सविवेश
धीमान्कपाटयुग्मंप्रहरन्करेण॥शब्दंसमाकर्ण्यचतेपशुघ्नाःशस्त्राणियत्नाज्जगृहुःप्रमत्ताः॥७०॥कर्णेलगित्वाशनकैरवो
चन्द्विजघ्नधेनुघ्नशिशुघ्नकश्चित्॥प्राप्तोमुमूर्षुस्तदिहात्रजंतुःस्वनामवैयर्थ्यमहोनकार्यं॥ ७१ ॥ नलंघनीयःकुलधर्मएष

नीतिस्ततोहिस्युरमुंचशूलैः ॥ अथप्रविष्टंमदनंसुवेषंदक्षंपितुर्वाक्यकरंपशुघ्नाः ॥ ७२ ॥ शूलैश्चखड्गैर्निशितैश्चपट्टिशै र्जघ्नुस्तदाप्राहसुतःसुमंत्रिणः ॥ हेचंडिकेवैष्णविनोलुलायोदैत्योनिशुंभोऽपिनशुंभएव ॥ नरक्तबीजोहमिहागतस्त्वां कस्माच्चशूलैरभिहंसिमातः ॥ ७३ ॥ नप्रार्थयाम्यद्यचजीवितार्थंत्वंसाक्षिणीमेवचनस्यभूयाः ॥ यच्चंद्रहासार्थमभा णिबाहूशिरःप्रदास्येत्यनृणोहमासं ॥ ७४ ॥ इत्यूचिवान्मंत्रिपुत्रस्तदानींजहौप्राणानुच्चरन्माधवेति ॥ चांडालास्तेप्रस्फु रद्वाक्यभीताजग्मुस्तेवैकोहतोऽस्माभिरेव ॥ ७५ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकुंतलपुरराज्यप्राप्तिर्नामसप्त पंचाशत्तमोऽध्यायः ॥ ५७ ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥ ॥छ॥

नारदउवाच राज्यंलब्ध्वाचंद्रहासःपत्नींचंपकमालिनीं ॥ शुभेगजेतयासार्धमारुरोहनिशागमे ॥ १ ॥ नमस्कर्तुं धृष्टबुद्धिंमृदंगध्वनिशोभितः ॥ आजगामत्वरायुक्तोदिदृक्षुःश्वशुरंनृप ॥ २ ॥ शंसंतिस्मवचस्तस्मैमंत्रिणेचवचोहराः ॥ मंत्रिन्समागतंपश्यचंद्रहासंनृपंनवं ॥ ३ ॥ जामातरंतवविभोराज्ञःकौंतलपस्यच ॥ तेषांवचनमाकर्ण्यक्रोधान्मंत्रीव चोऽब्रवीत् ॥ ४ ॥ युष्माकंरसनांछेत्स्येमूलमारभ्यपापिनां ॥ कोऽन्यःकौंतलपाद्राजाभविष्यतिधरातले ॥ ५ ॥ वचोहराब्रु वंतिस्मस्वामिन्दृष्ट्यावलोकय ॥ तावत्संप्राप्तश्चंद्रहासोजाययासहितःपुरः ॥ ६ ॥ ददर्शधृष्टबुद्धिस्तंनेत्रेस्वेपरिमार्जयन् ॥ उताहोस्वित्सुतःप्राप्तोमदनोऽयंभविष्यति ॥ ७ ॥ पुरतोविद्यतेकन्यायथाचंपकमालिनी ॥ उवाचोच्चैस्तदामंत्रीरेरेमद नकिंकृतं ॥ ८ ॥ इतिचिंतयतस्तस्यचंद्रहासःपुरःस्थितः ॥ अवतीर्यगजात्तस्मात्पादौजग्राहमंत्रिणः ॥ ९ ॥ चुचुंबेधृष्ट बुद्धिस्तंदधारनभवान्गतः ॥ चंडिकाभवनंरम्यंगोत्रस्थितिविनाशकृत् ॥ १० ॥ चंद्रहासउवाच यावद्गच्छाम्यहं स्वामिन्पुष्पचंदनपात्रभृत् ॥ तावत्कौंतलपादेशकारकोमदनश्चमां ॥ ११ ॥ वारयामासपश्चाच्चस्वयंदेवींजगामसः ॥ तत्तस्यवचनंश्रुत्वाकठोरंमर्मभेदिच ॥ १२ ॥ ऊर्ध्वबाहुर्मुक्तकेशोमंत्रीसविलपन्ययौ ॥ परार्थंयोवटंकर्तातस्मिन्सपत तिध्रुवं ॥ १३ ॥ तस्मात्सर्वप्रयत्नेनप्राणिनांहितमाचरेत् ॥ उत्तिष्ठन्निपतन्भूमौध्वांतेघोरेस्थितःपथि ॥ १४ ॥ धृष्टबुद्धि र्जगामाशुपश्यन्प्रेतस्थलींबहिः ॥ प्रज्वलंतिचितायत्रभस्मवातेननीयते ॥ १५ ॥ तंदृष्ट्वाभूतवेतालकंकालावाक्यमब्रु

वन्॥ अस्मत्तोऽभ्यधिकःकोऽपिसमायातिचपश्यतां॥ १६ ॥तत्रापरोऽब्रवीत्प्रेतःकोस्मत्तोऽभ्यधिकोभवेत् ॥ मयाप्रे
ष्येणयुष्माकंघातितंब्राह्मणत्रयं ॥ १७॥ विश्वासधनहर्त्तारंपरनिंदापरायणं ॥ वित्तमांसर्वदाभूतजंतुघ्नंभयदंसतां ॥
॥१८॥ तथाब्राह्मणहंतारंभ्रातरंमेऽप्यपश्यत॥ममपुत्राद्भ्यधिकस्तस्मात्पथिकघातकात्॥१९॥तावद्ब्रह्मग्रहस्त्वेकःप्र
हसन्वाक्यमब्रवीत्॥ अधिकस्तेसुतोभ्राताव्वंततोब्रह्मघातकी ॥ २० ॥ अयमायातिचान्योऽस्तित्वादृशोनचमादृशः
तस्मात्पलायनंकार्यंयुष्माभिर्नचदर्शनं ॥ २१ ॥ कर्तव्यंतस्यपापस्यदुष्टस्यातिविरोधिनः ॥ मित्रद्रोहीकृतघ्नोऽयंवि
श्वासस्यैवघातकः॥ २२॥ अयमायातिपापिष्ठस्तस्माद्दूरंपलायते॥इत्यालोच्यपलायंतेतंदृष्ट्वाभूतभैरवाः ॥ २३ ॥
धृष्टधीःपुत्रशोकार्तश्चिताकाष्ठानिसंदधत्॥ ज्वलंतिपाणौप्रययौचंडिकाभवनंप्रति ॥ २४ ॥ ददर्शपुत्रंमदनंखङ्गशूल
विदारितं॥ चंडिकापुरतोनूनंपशुंद्वात्रिंशतागुणैः॥ २५॥ अन्वितंतंसुचारित्रंयोगिनांतपतांवरं॥ज्ञातार्थसमयंशांतं
मनोवाक्कायदंडकं॥२६॥विभिन्नकलशंदिव्यंप्रासादमिवभूतले॥काश्मीरमिवसंभिन्नंलिंगंपाखंडिभिर्नरैः॥ २७॥दृ
ष्ट्वातंमदनंपुत्रंतथाच्छिन्नमनोरथः॥स्वकीयस्यैववंशस्यच्छिन्नंमूलंसधृष्टधीः॥२८॥ परित्यज्यचिताकाष्ठंपश्यन्ससु
तमातुरः॥आलिलिंगतथाभूतंसमुत्थाप्यचपाणिना॥२९॥ धृष्टबुद्धिरुवाच उत्तिष्ठोत्तिष्ठरेपुत्रचंद्रहासःसमा
गतः॥ तस्मैत्वंविषयांकन्यांप्रदेहिविपुलंधनं॥ ३० ॥मयात्वंकठिनैर्वाक्यैःपीडितोऽसिप्रकोपितः ॥ सांप्रतंवैष्णवद्रो
हफलंप्राप्तंमयासुत॥ ३१ ॥वैष्णवद्रोहिणांसत्यंहृदयंतुविदीर्यते ॥ तस्मान्मदीयंहृदयंविदीर्णमधुनाभवत् ॥ ३२ ॥
अयंसमदनोयस्यरतिःकृष्णेसदास्थिता॥ नायंशिवद्रोहकरोनयोगीजनतापनः ॥ ३३॥ इत्थंविलप्यबहुधाधृष्टधीः
स्वशिरस्तदा॥ आस्फालयामासभृशंस्तंभेधातुविभूषिते ॥ ३४ ॥ सभिन्नमस्तकोभूमौस्फुटितांडमिवापतत्॥ तस्मि
न्निपतितेपार्थधृष्टबुद्धौचतत्सुते॥ ३५ ॥ प्रभातसमयेजातेतापसःपुष्पतोयभृत् ॥ चंडिकाभवनंप्रायात्स्नापितुंपूजि
तुंचतां॥ ३६ ॥प्राविशद्भवनंदेव्याःसलिंगीपुरतोमृतौ॥धृष्टधीमदनौशांतौदीपाविवददर्शह ॥ ३७॥ आहोस्विर्त्कि
बभूवात्रनवराज्यफलंस्फुटं॥ मंत्रिपुत्रावपिहतौनृपकौंतलपप्रियौ॥ ३८ ॥ आगतश्चंद्रहासायतापसःशंसितुंतदा॥

तापसउवाच केनापिनिहतौराजन्धृष्टधीमदनौबहिः ॥ ३९ ॥ चंडिकाभवनेरात्रौतच्छीघ्रमवधार्यतां ॥ तस्यवा
क्यंसमाकर्ण्यपद्मामेवागतोनृपः ॥ ४० ॥ चंद्रहासःसुदुःखार्तोदेव्याभवनमातुरः ॥ ददर्शपुरतोदेव्याःपितापुत्रौचता
दृशौ ॥ ४१ ॥ चंद्रहासोऽब्रवीद्वाक्यंहेमातश्चंडिकेमयि ॥ क्रुद्धाऽसिचेन्मांगृहाणत्वयाएतौवृथाहतौ ॥ ४२॥ इत्युक्त्वापुर
तोदेव्याःपितापुत्रौचतादृशौ॥ दृष्ट्वास्नात्वाशुचिर्भूत्वास्वस्तिवाच्यततोनृपः॥४३॥ कुंडंखनित्वारुचिरंचतुरस्रंसुलक्षणं॥
तस्मिन्पावकमारोप्यबलिदीपपुरःसरं ॥ ४४ ॥ जुहावाज्यतिलान्रम्यान्पायसंसितयासह ॥ स्वदेहमांसमुद्धृत्यसूक्तंज
प्त्वाजुहावसः ॥ ४५ ॥ सर्वंमांसंचंद्रहासोहुत्वापादशिरोधरान् ॥ अस्थीनिधारयन्शीर्षंप्राहस्मजगदंबिकां ॥ ४६ ॥
चराचरगुरोर्विष्णोश्चिच्छक्तिस्त्वमुदाहृता ॥ सर्वेषांकर्मणांमातःसाक्षिणीत्वंपृथक्स्थिता ॥ ४७ ॥ अधुनाच्छेद्मिख
ड्गेनशिरस्तेनजगत्पतिः ॥ प्रीयतांसहृषीकेशस्त्वद्रूपःकालिकेंऽबिके ॥ ४८ ॥ इत्येवमुक्त्वातंखड्गंयावत्कंठेदधारसः ॥
तावत्प्रादुर्बभूवैषाचंडिकाप्राहतंनृपं ॥ ४९ ॥ मैवमात्मवधंकार्षीरेषपाप्माकुकर्मणा ॥ पंचत्वमगमन्मंत्रीतत्सुतोप्यद
दादृणं ॥ ५० ॥ त्वदीयंयत्पुराप्रोक्तंविवाहसमयेस्वसुः ॥ प्रसन्नाहंहरेर्भक्तचंद्रहासतवाधुना ॥ वरौप्रार्थयभद्रंतेस्वेच्छ
यामानसौध्रुवं ॥ ५१ ॥ चंद्रहासउवाच हरौभक्तिःसदाभूयान्ममजन्मनिजन्मनि॥ वरोऽयंप्रथमोमातर्द्वितीयेनमृ
तौत्विमौ ॥ ५२ ॥ पितापुत्रौप्रजीवेतांजगत्पावनितेनमः ॥ श्रीदेव्युवाच अचलातेहरौभक्तिर्भविष्यतिचसा
त्विकी ॥ ५३ ॥ पुत्रोऽपिभविताशूरस्तोषयिष्यतियोहरिं ॥ आशैशवाच्चरित्रंतेचंद्रहासकलौयुगे ॥ ५४ ॥ नरानार्यश्च
सततंश्रोष्यंतिपरमादरात् ॥ पठिष्यंतिचयेभक्त्याहृदिकृत्वाजनार्दनं ॥ ५५ ॥ तेषांभक्तिर्हिसुदृढाभविष्यतिरमापतौ॥
चंद्रहासमहाप्राज्ञआयाहिपुरतोमम ॥ स्थिरोभवमुहूर्तार्धंपिधायनयनेस्वके ॥ ५६ ॥ नारदउवाच तथाचक्रे
सनृपतिर्वैष्णवीशक्तिरुत्थिता ॥ खड्गशक्तिगदाब्जाद्यैरायुधैःपरिवारिता ॥ ५७॥ दधेनृपस्यशिरसिहस्तंज्ञानोपदेशकं
ततस्तावेवसोपश्यद्धृष्टधीमदनौनृप ॥ ५८॥ तादृग्रूपवयोवेषौयथासुप्तोत्थितौहितौ॥ आत्मानंपूर्ववच्चापिनिर्व्रणंचंदना
र्चितं ॥ ५९ ॥ नतांददर्शजननींजगदंबांहरेस्तनुं ॥ खात्पुष्पवृष्टिंपतितांसुरमुक्तांविलोक्यच ॥ ६० ॥ नमश्चक्रेधृष्टबुद्धिं

चंद्रहासःस्मरंतथा॥ समालिंग्यसुसंपूज्यश्वशुरंवाक्यमब्रवीत्॥ ६२॥ चंद्रहासउवाच हरेर्मायाविंयंसर्वाक
श्वजीवतिकोम्नतः॥ तस्मात्सर्वप्रयत्नेनभजामस्तमधोक्षजं॥६३॥ नारदउवाच एवंसवैष्णवःपार्थव्यसनेनन
पीडितः॥ प्रविवेशपरंताभ्यांचंद्रहासःपुरंनिजं ॥ ६४ ॥ अर्जुनउवाच दैवात्प्रापमहद्राज्यंचंद्रहासोमहामुने॥
कुलिंदेनतुपश्चाच्चदुःखितेनतुकिंकृतं॥ ६५॥ नारदउवाच श्रृणुपार्थमहाबाहोकुलिंदस्यचचेष्टितं ॥ गतेऽथचं
द्रहासेसपीडितोधृष्टबुद्धिना॥ ६६॥ विचार्यमनसादेवंहरिंबंधविमोक्षकं॥ धनंतद्ब्राह्मणेभ्यस्तुदत्वानिर्वेदमागमत्॥
॥ ६७॥ पुत्रंमेचंद्रहासाख्यंत्वद्भक्तंत्वत्परायणं ॥ त्वयादत्तंहृषीकेशरक्षास्मात्पापचेष्टितात्॥ ६८ ॥ इत्युक्त्वास्वगृहेत
स्मिन्सपत्नीकःसबांधवः॥ प्रविवेशहुताशंवैनिर्विण्णोध्यानतत्परः॥ ६९॥ एतस्मिन्नंतरेलोकाधृष्टबुद्धौन्यवेदयन्॥
स्वामिन्कुलिंदोनृपतिःसर्वदाहितकृत्तव ॥ ७० ॥ दुःखात्सपरिवारोऽसौविशतिस्महुताशनं ॥ इतितेषांवचःश्रुत्वा
प्रेरितोहरिणाययौ॥ ७१ ॥विचार्यमनसासम्यकूपुत्रोऽस्यनिहतोमया॥ किमर्थंघातयाम्येनंवृद्धंधनविवर्जितं॥७२॥
पुत्रहीनोमृतोह्येषदैवेनहिनिपातितः॥ एवंविमृश्यमनसाशीघ्रंगत्वान्यवारयत्॥ ७३॥ माकुलिंदविषादंत्वंकुरुद्रव्या
पहारजं॥ पुनर्दास्यामितेवित्तंदेशंचविविधंवसु॥ ७४ ॥इतिनानाविधैर्वाक्यैराश्वस्तःसकुलिंदकः॥ पुत्राशांपरमां
कृत्वाउत्थितःप्रणनामतं॥ ७५॥ धृष्टबुद्धिस्त्वाजगामतंनिवार्यस्वमंदिरं॥ कुलिंदेनश्रुतंसर्वंचंद्रहासेनयत्कृतं॥ ७६॥
तच्छ्रुत्वाहर्षसंपन्नोहरिंनत्वाद्विजान्धनैः ॥ पूजयामासधर्मात्मायाचकानथसर्वशः॥ ७७॥ चंद्रहासोऽपितद्राज्यंल
ब्ध्वातानर्चयद्द्विजान्॥ स्वयंतुबंधुभिःसार्धमदनेनद्विजातिभिः॥ ७८॥ आनयामासपितरंमातरंपुत्रवत्सलां॥ ततः
कौंतलकेराज्यंचकाराब्दशतत्रयं॥ ७९॥ विषयाऽसूततनयंमकरध्वजमूर्जितं॥ असूतशूरंपद्माक्षंसुतंचंपकमालिनी
॥ ८० ॥ इत्थंपार्थमहाबाहोचंद्रहासःपुराशिशुः॥ शालिग्रामशिलासंगान्निस्ततारभवार्णवं ॥ ८१ ॥ तस्मात्संपूजये
न्नित्यंशालिग्रामशिलांनरः॥ शालिग्रामशिलाचक्रंद्वारकायाःसमुद्भवं॥ ८२ ॥ कलिकालेविभुःपार्थनजहातिजना
र्दनः॥ सर्वलोकोपकाराययतिरूपेणतिष्ठति॥८३॥ तस्मात्सर्वप्रयत्नेनयतिःपूज्योहिकेशवः॥द्वेरूपेदेवदेवस्यचरंचाचर

मेवच ॥ ८४ ॥ चरंसंन्यासिनंप्राहुरचरंचक्रचिह्नितं ॥ यदीच्छसिहिदुष्पारंतर्तुंसंसारसागरं ॥ ८५ ॥ शालिग्राममयंशै
लंभक्त्यार्चयमहामते ॥ शालिग्रामशिलाचक्रंयेयच्छंतिमहीपते॥८६॥विष्णुभक्तायविप्रायतस्यमुक्तिर्नदुर्लभा ॥ अ
र्चितःपूजितोध्यातःसंस्तुतःशैलनायकः ॥ ८७ ॥ पापिनामुपकारायकिंपुनर्धर्मशीलिनां ॥ नैमिषाच्चप्रयागाच्चगंगा
सागरसंगमात्॥८८॥कुरुक्षेत्राच्छतगुणंशालिग्रामशिलार्चनं॥यद्युक्तामहापापैर्जन्मकोटिसमुद्भवैः॥८९॥मुच्यंते
नात्रसंदेहःशालिग्रामशिलार्चनात् ॥ शालिग्रामशिलात्यक्तंचंदनंवाथकुंकुमं ॥ ९० ॥ देहेधारयतेनित्यंसमुक्तोनात्र
संशयः ॥ शालिग्रामशिलात्यक्तंनिर्माल्यंशिरसावहेत्॥ ९१ ॥ हरिरेवसमंतव्योब्रह्मणाकथितंस्वयं ॥ शालिग्रामशि
लादत्तंनैवेद्यंयस्तुभक्षयेत्॥ ९२ ॥ सिक्थेसिक्थेभवेत्पुण्यंकपिलागोसमुद्भवं ॥ शालिग्रामशिलास्पर्शंयेकुर्वंतिदिने
दिने ॥ ९३ ॥ तैःकृतंपूजनंभूपपितृविप्रदिवौकसां ॥ शालिग्रामसमीपेतुयःश्राद्धंकुरुतेनरः ॥९४॥ नित्यंनैमित्तिकंवा
पिगयाश्राद्धसमंभवेत् ॥ शालिग्रामसमीपेतुभक्त्यापुस्तकवाचनं ॥ ९५ ॥ भारतंहरिवंशंवापुत्रदंधनदंभवेत् ॥ श्री
मद्भागवतंपुण्यंभुक्तिमुक्तिफलप्रदं ॥ ९६ ॥ शृणोतिहृष्टमनसासपुनातिजनान्बहून् ॥ शालिग्रामशिलायस्यनित्यंति
ष्ठतिवेश्मनि ॥ ९७॥ तत्रसर्वाणितीर्थानिसंतिसर्वेसुरामखाः ॥ अंतकालेऽपियस्यास्येशालिग्रामशिलोदकं ॥ ९८ ॥
क्षिप्यतेपापिनोपीहसयातिपरमांगतिं ॥ नारायणसमोबंधुर्नतिथिर्द्वादशीसमा ॥ ९९ ॥ विष्णुपादोदकैस्तीर्थंनतुल्यं
भुवनत्रये ॥ दर्शनात्पातकंहंतितुलसीनवपल्लवा ॥ १०० ॥ तस्यास्तुदीर्घमंजर्यांनित्यंवसतिकेशवः ॥ तत्पत्रैः
केशवःपूज्योगलितैरपिचार्जुन ॥ १ ॥ तस्ययज्ञकृतंपुण्यंभवतीतिनसंशयः ॥ नारदउवाच शालिग्रामशिला
यास्तुमहिमावर्णितुंमया ॥ २ ॥ नशक्यतेबहुत्वाच्चगमिष्यामिसुरालयं ॥ इत्युक्त्वानारदःप्रायादर्जुनोविस्मयंययौ ॥
॥ ३ ॥ सतांसंगाद्विनालोकेलभ्यतेनसुखंनरैः ॥ इतिब्रुवन्सव्यसाचीसर्वैर्भूपतिभिर्वृतः ॥४॥ जगामचंद्रहासस्यपुरंकौं
तलकंमुदा ॥ जैमिनिरुवाच इतिहासमिमंभक्त्यायःशृणोतिपठत्यपि ॥ सभुक्त्वाविविधान्भोगान्विष्णुलोकेमही
यते ॥५॥ इत्याश्वमेधिकेपर्वणिजै० चंद्रहासोपाख्यानेशालिग्राममहिमावर्णनोनामाष्टपंचाशत्तमोऽध्यायः ॥५८॥

जनमेजयउवाच दधारचंद्रहासःकिंवाजिनौतौनवामुने ॥ एतत्सर्वसमाख्याहिमयापृष्टोऽसिजैमिने॥ १ ॥ जैमिनिरुवाच प्रातःकालेतुबाह्यस्थौतस्मिन्कौंतलकेपुरे ॥ ददर्शतुर्हरीप्राप्तौप्रद्युम्नाक्षमकरध्वजौ ॥ २ ॥ विस्मयंपरमंप्राप्तौदधतुस्तौतुरंगमौ ॥ पत्राभिप्रायमालोक्यजग्मतुःपितरंतदा ॥ ३ ॥ चंद्रहासोऽपिविज्ञायप्राप्तौपार्थतुरंगमौ ॥ प्रहर्षमतुलंलेभेजातःकृष्णसमागमः ॥ ४ ॥ आशैशवान्मयादेवोनित्यंयश्चित्यतेहरिः ॥ सकेशवःपार्थयुतोनूनमत्रागमिष्यति ॥ ५ ॥ विषयातनयंप्राहचंद्रहासःशुभंवचः ॥ साक्षाद्धर्मस्यसंप्राप्तौवाजिनौपुत्रसांप्रतं॥ ६॥ रक्षितौवर्षमात्रंतैःक्लेशेनेतिमयाश्रुतं॥ धारयिष्यसिचेदेतौपूर्णाब्देविफलःक्रतुः॥ ७॥ त्वंरक्षवाजिनौपुत्रमासमात्रंप्रयत्नतः॥ बध्वेमौवाजिनौपश्चाद्धर्मराजायचार्पय ॥ ८ ॥ सुकृतेनैवनःकार्यवाजिभ्यांकिंप्रयोजनं॥ सुकृतंवासुदेवस्यदर्शनान्नोभविष्यति॥ ९ ॥ अहंयोत्स्येऽद्यपार्थेनयथातुष्येदयंहरिः॥ जैमिनिरुवाच विषयातनयःप्रायाद्वाजिनौपरिपालयन्॥ १० ॥ चंद्रहासोऽपिनगराद्बहिस्तस्थौससैनिकः॥एतस्मिन्नंतरेप्राप्तःसपार्थःकृष्णसारथिः॥ ११ ॥ ददर्शचंद्रहासंतंगरीयांसंतुवैष्णवं॥ शंखचक्रांकिततनुंबिभ्राणंचोर्ध्वपुंड्रकं॥ १२॥ श्रीमत्कृष्णपदांभोजतुलसीपूतमस्तकं॥ वयोवृद्धंतपोवृद्धंज्ञानवृद्धंनवंबुधि॥ १३॥ पार्थोऽब्रवीन्मेसफलंजन्मचास्मत्कुलंतथा॥ यच्चंद्रहासोदृष्टोऽयंबाल्यादारभ्यवैष्णवः॥ १४॥ अथकृष्णोऽपिसंतस्थौरथोपस्थेचतुर्भुजः॥ शंखचक्रगदांभोजैरायुधैःसमलंकृतः॥ १५॥ तंदृष्ट्वापुंडरीकाक्षंचंद्रहासोरथात्तदा॥ अवतीर्यनमश्चक्रेपार्थस्यपुरतस्तदा ॥ १६ ॥ आलिलिंगहरिर्दोर्भिश्चंद्रहासंविशांपते॥ वासुदेवउवाच उत्तिष्ठालिंग्यभोपार्थमद्भक्तंध्रुवसन्निभं॥ १७॥ चंद्रहासंमहाबाहुंवृद्धंसद्धर्मकारकं॥ पार्थउवाच श्रेयान्स्वधर्मोविगुणःपरधर्मात्स्वनुष्ठितात्॥ १८॥ इत्थंहिशिक्षितंकृष्णत्वयाभीष्मसमागमे॥ विपरीतंकथंब्रूषेसांप्रतंदेवकीसुत॥ १९॥ युद्धमत्रप्रकर्तव्यंकथमालिंगनंददे॥ नमस्करोमिचरणौवृद्धत्वादस्यभूपतेः॥ २०॥ श्रीकृष्णउवाच मद्भक्तश्चनमस्कार्यःसमालिंग्योविशेषतः॥ कपिलागोशतेदत्तेयत्फलंजायतेनृणां॥ २१ ॥ तत्फलंलभतेपार्थवैष्णवालिंगनान्नरः॥ मद्भक्तेषुत्वयाप्रीतिःसधर्मःपरिकीर्तितः॥

॥ २२ ॥ परिष्वजैनंचंद्रहासंवैष्णवंविष्णुवल्लभं ॥ २३ ॥ जैमिनिरुवाच अथार्जुनोगाढमालिंग्यतस्थौतंचंद्रहा
संकृष्णवाक्येनतुष्टः ॥ तदाब्रवीच्चंद्रहासोऽपिवाक्यंयुद्धायाहंसंस्थितःपांडुसूनो ॥ २४ ॥ मखोविनश्येत्तवनूनंविसृष्टः
पुत्रोमयावाजिनोरक्षणार्थं ॥ जातंसख्यंनौहरेःसद्वचोभिस्तस्मादमुंकेशवंसंश्रयावः ॥ २५ ॥ एवंचोभौभाषमाणौ
तुरंगौसमायातौयत्रकृष्णार्जुनौस्तः ॥ तयोःपृष्ठेविषयासूनुरागान्नमश्चक्रेपितरंतौचकृष्णौ॥ २६॥प्रद्युम्नाद्यैःपूजितश्चं
द्रहासस्तस्थौकृष्णंसंस्तुवन्वाग्विलासैः॥२७॥ जैमिनिरुवाच महोत्सवेनतौकृष्णौप्रवेश्यनगरंमुदा॥ चंद्रहासः
कृष्णयुतःसबभौभूपुरंदरः॥ २८ ॥ चंद्रहासाश्रयात्सर्वेजनाःकृष्णपरायणाः॥ धृष्टबुद्धिःपुत्रयुतःकृतार्थःसमपद्यत ॥
॥ २९ ॥ तत्पदंवासुदेवस्यवैष्णवानुग्रहान्नृप॥ततोगालवमाहूयहरेःपूजांव्यधान्नृपः॥३०॥गालवंतंसमालोक्यआग
च्छंतंतदाहरिः॥ नमश्चक्रेयोगिराजंपरमानंदनिर्भरं॥३१॥ गालवोपिनमश्चक्रेपरमात्मानमव्ययं॥ मनसातत्पदंध्या
यन्मुहूर्ततन्मयोह्यभूत् ॥३२॥ पूजांप्रापहरिस्तत्रचंद्रहासेनतोषितः॥ स्थित्वात्रिरात्रंनगरेअनुज्ञाप्यचगालवं॥ ३३॥
निर्ययौनगरात्तस्मात्कृष्णःकमललोचनः॥ चंद्रहासोऽपितद्राज्यंददौकृष्णकरेमुदा॥३४॥ कृष्णोपिप्रददौसर्वंतत्पुत्रा
यार्जुनाज्ञया॥ अर्जुनःपरमानंदमवापनृपदर्शनात्॥ ३५॥ इदंचरित्रंचंद्रहासस्यभक्त्यानरःपठेच्छृणुयाद्यःसमग्रं॥
सचाप्नुयाद्बलमायुश्चपुत्रान्सदाचारान्विष्णुभक्तांश्चदातॄन्॥३६॥कृष्णेभक्तिःसुदृढात्यंतकालेसंसाराब्धेस्तारयेद्वासुदे
वः ३७॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेचंद्रहासोपाख्यानसमाप्तिर्नामैकोनषष्टितमोऽध्यायः॥५९॥ ॥छ॥
जैमिनिरुवाच चंद्रहासःपुराध्यक्षंविषयातनयंव्यधात्॥ अब्रवीच्चमयापुत्रवार्धकत्वाद्वनंमहत्॥१॥ गंतव्यंमोक्षला
भायसमोक्षःसुलभोऽधुना॥ कृष्णस्यदर्शनाज्जातोनमुंचामिततोहरिं॥ २॥ इतिसंदिश्यतनयंकृष्णेनसहितोययौ ॥
पालयन्वाजिनौतस्यपार्थस्यामिततेजसः॥ ३॥ येषुयेषुचदेशेषुतौप्राप्तौवाजिनौनृप ॥ तत्रत्यैराजभिर्मुक्तौनमस्कृत्य
महाभयात्॥ ४॥ केचिद्दरीतुहरिणापालितौवीक्ष्यसादरं ॥ दक्षिणीकृत्यसंपूज्यभक्त्यानत्वाग्रतःस्थिताः॥५॥अथोत्त
रस्यामंभोधिंदिशिप्राप्तौतुरंगमौ॥ प्रविष्टौसरितांपत्युर्जलेगाधेविशांपते॥ ६ ॥ दुःखंप्राप्ताःपार्थमुख्यायोधाःप्रोचुर्ह

रिंप्रति ॥ किमिदानींप्रकर्तव्यंतयोःप्राप्तिःकथंभवेत् ॥ ७ ॥ श्रीभगवानुवाच पंचानांकेवलाद्यश्वाःसंतिवारिच
राःशुभाः ॥ हंसध्वजस्यजिष्णोश्चबभ्रुवाहस्यमद्भुवः ॥ ८ ॥ मयूरकेतोःपंचैतेरथाःसर्वत्रगामिनः ॥ इत्युक्त्वाप्रविवेशा
ब्धिंकृष्णस्तेचमहारथाः ॥ ९ ॥ ददर्शफाल्गुनोवृद्धंमुनिंमध्येसरित्पतेः ॥ द्वीपस्थंधारयंतंकेवटपत्रंकरेणच ॥ १० ॥ जी
र्णशुष्कंशतच्छिद्रंलूतामंदिरमंडितं ॥ बकदाल्भ्यंमहाभागंनिमील्यनयनेस्थितं ॥ ११ ॥ अवतेरुरथेभ्यश्चनमश्चक्रुश्च
तेमुदा ॥ उन्मील्यनयनेदीर्घेकृष्णादींस्तान्विलोक्यच ॥ १२ ॥ हर्षादुत्फुल्लनयनोगाथामेतामगायत ॥ अहोपंचभिरानी
तोहृषीकेशोऽतिचंचलैः ॥ १३ ॥ अतःपरंहिनोवासोमंडलेऽस्मिन्नसौख्यकृत् ॥ इतिब्रुवंतंतमृषिंपार्थःप्राहसविस्मितः
॥ १४ ॥ युष्माभिर्ध्रियतेपत्रंशुष्कंनक्रियतेगृहं ॥ युष्माकंजानुनीभित्त्वाकिंशुकौनिर्गताविमौ ॥ १५ ॥ ययोःकृतंनी
डशतंपक्षिभिर्गृहिणीयुतैः ॥ वल्मीकानिविराजंतेपुरस्तात्पृष्ठतश्चवः ॥ १६ ॥ येभ्योनिर्यात्यमीसर्पायुष्मत्स्कंधस्थि
ताःसुखं ॥ पिबंतिवायुमास्यैर्वःकुर्वत्यासनमुच्छ्रितं ॥ १७ ॥ कंडूयंतिमृगाःस्वांगमहोनिस्पृहतादृढा ॥ प्रहस्यबकदा
ल्भ्योसौश्रुत्वापार्थस्यभाषितं ॥ १८ ॥ उवाचहर्षयन्चित्तंतदीयंशुभयागिरा ॥ १९ ॥ बकदाल्भ्यउवाच क्लेशा
वहोदारपरिग्रहोयंपापस्यमूलंहिभवेदधोगतिः ॥ तत्पोषणेकार्यमकार्यमेतद्विचारएषोऽतितरांविनश्येत् ॥ २० ॥ नष्टे
विचारेकुतएवमोक्षस्तृष्णावरीवर्तिनृणामतीव ॥ एतेमदीयाःखलुवत्ससंघावृद्धिंगताःक्षेत्रवहाभवेयुः ॥ २१ ॥ पु
त्राःकथंस्युश्चतथैवपौत्रावेदांश्चशास्त्राणिकथंपठेयुः ॥ विवाहएषांभविताकथंस्वित्प्रेक्षाम्यहंपुत्रमुखंकदास्वित् ॥ २२ ॥
एवंसदाचिंतयतेगृहस्थःस्त्रीपाशबद्धोनतुधर्ममार्गं ॥ अतोमयाकारिनदारसंग्रहोनपर्णशालाविहिताऽल्पमायुः ॥ २३ ॥
पार्थोऽब्रवीत्कियदायुर्गतंवःशुष्कंपर्णमस्तकेबिभ्रतांच ॥ प्राहस्मायुर्बकदाल्भ्योऽर्जुनंनःकियान्यातःकालइहस्थि
तानां ॥ २४ ॥ मार्कंडेयालोमशाःकत्यभुवन्तेषांसंख्यांकर्तुमलंमयापि ॥ अस्तंगताब्रह्मणांविंशतिर्मेस्थितस्यात्रप्रा
यआयुष्यमल्पं ॥ २५ ॥ तस्मादहंनकरोम्यत्रजिष्णोवारंवारंनाशमायात्यपारः ॥ यदायदाब्रह्मणोत्यंतकालस्तदातदा
वारिमयंजगत्स्यात् ॥ २६ ॥ वटश्चैकःस्निग्धपत्रोविभातिशाखाशतैर्व्याप्नुवन्रोदसींच ॥ तच्छाखायांवटपत्रेशया

नंपश्यामिबालंहसमानंरुदंतं॥ २७॥ पादांगुष्ठंवदनेसन्निवेश्यगौरंधयंतंसुनसंचारुवक्रं॥ तद्दर्शनात्सागरेमज्जितो
ऽहंनतादृशःसंप्रतिकान्यवार्ता॥ २८॥ सएवायंकृष्णरूपोहिजातःपंचानांवःसंगवशान्मयाप्तः॥ २९॥ बकदाल्भ्य
उवाच कस्माद्दूरंदूरमस्मत्सकाशात्प्रयासिविष्णोमांजलेऽस्मिन्विहाय॥ बालोभूस्त्वंवटपत्रेशयानोदृष्टोयदाप्रार्थि
तोनैवकिंचित्॥ ३०॥ युवाद्यलक्ष्मीमधिगम्यधर्मपुत्रंकथंदर्शयतेनमांत्वं॥ आलिंगनंदेहिजगन्निवासधर्मस्वयंद
र्शयतत्पुरंच॥ ३१॥ जैमिनिरुवाच इत्यूचिवान्समुनिस्तंचकृष्णंसमालिंग्यप्राहतंफाल्गुनंच॥ मद्वासार्थंगृह
मेतत्स्फुटंस्यान्मुक्तिर्ध्रुवागृहिणीयत्रभाति॥ ३२॥ करोमिकिंनगृहंनापिपत्नींनतादृशीमधिगच्छामिपार्थ॥ तस्मात्का
लोगमितःशुष्कपत्रैःपश्याधुनागृहदारानवाप्तान्॥ ३३॥ एवंब्रुवंतंबकदाल्भ्यंसकृष्णःसंभावयामासवचोभिरीड्यैः॥
त्वमेवसाक्षात्पुरुषःपुराणस्त्वयादृष्टाब्रह्मणांविंशतिश्च॥ ३४॥ सर्वेषांनःपूज्यतमस्त्वमेवजातोयज्ञःसफलोधर्मसूनोः॥
प्रहस्यैषन्मुनिराहस्मविष्णुंत्वयाभारोमयिगर्वस्यमुक्तः॥ ३५॥ परंगर्वोव्यगलन्मेसमग्रस्तथास्यपंकेरुहजन्मनश्च॥ तत्त्वं
समाकर्णयपार्थयत्नात्कृष्णःसर्ववेदवेदस्यमूलं॥ ३६॥ महाकल्पेवेदसंज्ञोविरिंचिश्चत्वारिंशद्वार्षिकोमामियाय॥ प
ठन्वेदान्मानसौकोधिरूपःप्रोवाचेदंगर्वभारेणवाक्यं॥ ३७॥ कस्त्वंकिमर्थंध्रियतेपर्णमेतत्त्वयाघोरंतप्यतेवेद्मिकामात्
प्रसन्नोहंप्रार्थयवांछितंचब्रह्माहमित्येवमवेहिविप्र॥ ३८॥ तच्छ्रुत्वाहंचाब्रुवंगर्वभाराद्ब्रह्माणंतंगच्छदूरंदुरात्मन्॥ म
यादृष्टास्त्वादृशाविंशतिश्चत्वंमर्त्यंकिंदास्यसेयाहियाहि॥ ३९॥ एवंमयिब्रुवतिप्रादुरासीद्वात्याघोरादारयंतीवपृथ्वीं॥
आवर्तैर्नद्रुमभंगंविधत्यानीतौतदाद्वावपिखंविशालं॥ ४०॥ औदुंबरादन्यमौदुंबरंहिविशंत्यमीजंतवःकर्मनुन्नाः॥
तथाप्रविष्टौदेवदेवस्यविष्णोर्ब्रह्मांडैस्तैःफलितस्यद्वितीयं॥ ४१॥ अस्माद्रम्यंब्रह्मलोकंविरिंचिःप्रविश्याहंविस्मयंचा
प्तवान्सः॥ ततःप्रोवाचाष्टमुखोविरिंचिःसमाह्वयन्नौपरिपप्रच्छपार्थ॥ ४२॥ कस्माद्युवांप्राप्तवंतावपूर्वौकिन्नामानौ
शंसतंमत्पुरस्तात्॥ चतुर्मुखोथावदत्सत्यलोकात्समागतंविद्धिमांपद्मयोनिं॥ ४३॥ शिष्यंयोमेपरिचर्यार्थमागान्ना
म्नास्फुटंबकदाल्भ्यःप्रसिद्धः॥ निशम्योच्चैरष्टमुखोजहासभवान्ब्रह्माशिष्यएवद्वितीयः॥ ४४॥ तावत्तद्वैयावदहंनदृष्टौब्र

ह्माशिष्यौसंप्रतिमेभवंतौ॥ शौचार्थमत्रापिजलंमदंचसमानयेतांस्वस्थचित्तौमदर्थं ॥ ४५ ॥ एवंब्रुवत्यष्टमुखेविरिं
चौवात्याघोरामांचतावप्यनैषीत्॥ मयासार्धंखेभ्रमंतौविरिंचौविष्णोःप्रविष्टौब्रह्मगोलंतृतीयं॥ ४६॥ यस्मिँल्लोकाः
पुण्यशीलावदान्यादृष्ट्वाऽस्मांस्तेजहसुःकेभवंतः॥ कस्माद्देशादागतानामकिंवस्तत्सर्वंवैब्रूतलज्जांविहाय॥४७॥ आ
हस्माथोवसुवक्रोविरिंचिरहंप्राप्तोब्रह्मलोकान्मनोज्ञात्॥ प्रोचुर्लोकास्तेतदाब्रूतमैवंकलावक्रःश्रोष्यतिवैविरिंचिः॥
॥ ४८ ॥ आयातपश्यतविहायविरिंचिगर्वंमौनंसमाश्रयतदेवमजंप्रणम्य॥ ततोवयंभीतभीताःप्रयाताविलोकितुं
षोडशतुंडकंच॥ ४९॥ जहासोच्चैःषोडशास्योविरिंचिर्दृष्ट्वाचतुर्वक्रमथाष्टवक्रं॥५० ॥ अहोचित्रमहोचित्रंब्रह्मण्यपि
मयिस्थिते॥ इतिगर्वायतेतस्मिन्विरंचौषोडशानने ॥ ५१ ॥ वात्याप्रादुरभूद्घोरातयाभ्रांतावयंविभो॥ अधोवक्त्रा
ऊर्ध्वपादाःप्राप्ताब्रह्मालयंपरं॥ ५२ ॥ द्वात्रिंशद्वदनोब्रह्मायत्रलोकस्तुसुंदरः॥ नापृच्छत्कश्चिदेवास्मान्नामतत्रभवो
जनः॥ ५३॥ ततोवयंस्मचत्वारोदृष्टादेवाद्विरिंचिना॥ आहूताःकृपयापश्चात्परिपप्रच्छनामसः॥ ५४॥ द्वात्रिंशद्व
दनउवाच प्रहस्यपूर्वंगर्वितोऽतीवसत्यंब्रह्माब्रवीदहमेवास्मिनान्यः॥ खद्योतालिर्योत्यतेतावदेवयावत्सूर्योध्वां
तहानाभ्युदेति ॥ ५५॥ द्वात्रिंशद्वदनोप्येवंब्रुवन्वात्यापरिप्लुतः॥ खेभ्रमत्सहितोऽस्माभिश्चतुःषष्ट्याननंस्थितं॥ ५६॥
ददृशेगोलोकेन्यस्मिन्सगर्वंकृतवान्बहु॥ एवंद्विगुणयावृद्ध्यागर्वितास्तेविरिंचयः॥ ५७॥ प्राप्ताःसहस्रनयनंसहस्रवद
नंविभुं॥ स्तूयमानंचमुनिभिःसनकाद्यैस्तथासुरैः॥ ५८॥ अथतानागतान्दृष्ट्वासहस्रवदनोऽब्रवीत् ॥ कुतःप्राप्तंपूज्य
पादैर्ब्रह्मभिःस्वागतंहिवः ॥ ५९॥ युष्मत्प्रसादाल्लोकेऽस्मिन्ख्यातिंप्राप्स्याम्यनुत्तमां ॥ इतिब्रुवाणंपुरुषंप्रणम्यधरणीं
गताः॥ ६० ॥ विहायगर्वंब्रह्माणस्तुष्टुवुस्तमधोक्षजं॥ ततःप्रसन्नोभगवान्यथास्थानंन्यवेशयत्॥ ६१ ॥ तान्विरिंची
नहंपार्थविहायास्मान्स्थितोंबुधौ ॥ तस्माद्गर्वोनकर्तव्यःपुंभिःसच्छास्त्रकोविदैः ॥ ६२ ॥ मुनेर्भाषितमाकर्ण्यहर्षि
तौकृष्णपांडवौ॥ ददर्शतुस्तुरंगौतौकथांश्रुत्वाविनिर्गतौ॥ ६३॥ प्रार्थयित्वामुनिंकृष्णःशिबिकायामरोपयत्॥६४॥
इत्याश्वमेधिकेपर्वणिजैमिनीयेबकदाल्भ्यसंवादोनामषष्टितमोऽध्यायः॥ ६०॥ ॥छ॥ ॥छ॥ ॥छ॥

जैमिनिरुवाच व्यावृत्यवाजिनौशीघ्रंपुरंजायद्रथंशुभं ॥ प्रापतुर्यत्रनृपतिर्दौःशलेयःशिशुःस्थितः ॥ १ ॥ सिंहासनस्थःसचिवैःसेव्यमानःसभास्थितैः ॥ श्रुत्वाचफाल्गुनंप्राप्तंसजयद्रथघातिनं ॥ २ ॥ उच्चैःप्रकंपेप्रस्विन्नोरोमांचितवपुर्धरः ॥ जहौप्राणान्दौःशलेयःसिंहासनगतोभयात् ॥ ३ ॥ विलपंतीततःप्राप्तादुःशलाफाल्गुनंप्रति ॥ दृष्ट्वाकृष्णंनमस्कृत्यप्राहोच्चैस्त्राहिमामिति ॥ ४ ॥ जिष्णुनानिहतोभर्तासांप्रतंचसुतोमम ॥ त्वामहंशरणंप्राप्ताकृष्णकृष्णजगत्पते ॥ ५ ॥ अथोत्थितोरथात्पार्थःस्वसारंसंप्रणम्यच ॥ अब्रवीन्नकृतंकिंचित्तवपुत्रस्यवैशसं ॥ ६ ॥ तथाऽपिक्षम्यतांसर्वंमयायच्चपुराकृतं ॥ गृह्णीष्वहस्तिनोमत्तान्सहस्रंलक्षमेववा ॥ ७ ॥ जित्वाचवैरिणःसर्वराज्यंदास्यामितेऽनघे ॥ अर्जुनस्यवचःश्रुत्वादुःशलादुःखिताभृशं ॥ ८ ॥ कृष्णंनत्वापुनर्वाक्यमुवाचक्लेशसंयुता ॥ दुःखहंतात्वमेवात्रप्राणिनांहृदिसंस्थितः ॥ ९ ॥ द्रौपद्यासंस्मृतःपूर्वंदुःखंतस्याव्यपोहयत् ॥ अन्येषामपिजंतूनांस्मरणादुःखहानिदः ॥ १० ॥ कृतार्थादर्शनेनाद्यजातास्मितववैप्रभो ॥ पतिहीनापुत्रहीनापार्थेनास्मिकृताविभो ॥ ११ ॥ नत्रपाजायतेतस्यसंबंधद्योतनेनच ॥ सांप्रतंपुत्रहीनाचराज्यहीनातथाकृता ॥ १२ ॥ कथमश्वगजानांचसहस्रंदातुमिच्छसि ॥ ब्रुवंत्येवंबहुविधंलुठंतीकृष्णपादयोः ॥ १३ ॥ नेत्रांबुनाक्षालयंतीपादाब्जंसुरदुर्लभं ॥ एवंसुदुःखितांदृष्ट्वाआर्तत्राणपरोहरिः ॥ १४ ॥ आश्वासयामासचतांभवमायाप्रपीडितां ॥ उत्तिष्ठोत्तिष्ठभद्रंतेगच्छपुत्रस्यसन्निधौ ॥ १५ ॥ इत्युक्तासहपार्थेनप्रविवेशपुरंतदा ॥ हर्म्येसभायांपतितंददर्शतनयंशुभं ॥ १६ ॥ उत्तिष्ठभोवत्सभयंमाकुथाममसन्निधौ ॥ इत्युक्त्वापाणिनाबालंपस्पर्शमधुसूदनः ॥ उत्थितस्तत्क्षणादेवप्रणनामहरिंमुदा ॥ १७ ॥ वंदितौतुजनैःसर्वैःकृष्णपार्थौमुदान्वितैः ॥ भेरीमृदंगपटहगीतनृत्यमहोत्सवैः ॥ १८ ॥ मांगल्यंपरमंचक्रुर्नागराःकृष्णसन्निधौ ॥ अर्जुनःशमयामासदुःशलांपुत्रसंयुतां ॥ १९ ॥ अब्दःपूर्णोऽद्यसंजातोगंतव्यंतुगजाह्वये ॥ निमंत्रितासमायाहिकुंतींद्रष्टुंचपार्षतीं ॥ २० ॥ सातथेत्यब्रवीत्पार्थोत्दृष्टश्चासीद्दिशांपते ॥ जैमिनिरुवाच हर्षितासाहृषीकेशंदुःशलावाक्यमब्रवीत् ॥ २१ ॥ एवमेवत्वयाकार्यंभक्तानांजीवनंसदा ॥ प्रसादात्तवराज्यंमेप्राप्तंगच्छामिधर्मजं ॥ २२ ॥ इत्युक्त्वापुत्रसहितानिर्गताचगजाह्वयं ॥ आनयत्त

त्तुरंसर्वंयज्ञार्थंपांडवोऽर्जुनः ॥ २३ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेजयद्रथपुरेदुःशलासांत्वनंनामैकषष्टितमोऽध्यायः ॥ ६१ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥ ७ ॥ जैमिनिरुवाच पूर्णेब्देदेवकीपुत्रःपार्थस्यतुरगौमुदा ॥ दधौस्वयंवनेरम्यौभ्रममाणौस्वलीलया ॥ १ ॥ प्रत्युवाचकथंपार्थवीरैर्भूपतिभिर्वृतां ॥ दिष्ट्याभूमिंपार्थहयौभ्रमितौनिखिलामपि ॥ २ ॥ चिरकालंधर्मराजःक्लिश्यतेविविधैर्यमैः ॥ वर्षमात्रंहिसंजातंकुर्मःकर्माग्निसन्निधौ ॥ ॥ ३ ॥ अद्यसर्वेमहीपालापांडवंधर्मनंदनं ॥ वीक्षितुंत्वरितायांतुत्वयासहगजाह्वयं ॥ ४ ॥ पुरस्कृत्यहयावग्रेनानावादित्रवादकाः ॥ नर्त्तक्योविविधैस्तालैर्हस्तकैःकरणैस्तथा ॥ ५ ॥ प्रद्युम्नश्चानिरुद्धश्चवृषकेतुर्महाबलः ॥ बभ्रुवाहोपिशैनेयोवीरवर्मानुशाल्वकः ॥ ६ ॥ बर्हिकेतुर्हंसकेतुस्तथानीलध्वजोबली ॥ ताम्रध्वजोमहावीरःप्रवीरश्चमहारथः ॥ ७ ॥ यौवनाश्वश्चंद्रहासस्तथाऽन्येबहवोनृपाः ॥ भूषिताविविधैर्हारैःकटकैरंगदैस्तथा ॥ ८ ॥ कुंडलैश्चामरैर्धूपवासैःपुष्पैर्विलासिताः ॥ नानाकुसुममालाभिर्वरचंपकमंडिताः ॥ ९ ॥ रात्रौपुरंप्रयांत्वेतेदीपिकाभिःप्रकाशिताः ॥ गंधतैलावसिक्ताभिःप्रस्तुतावंदिभिर्भृशं ॥ १० ॥ अहमग्रेप्रयास्यामिधर्मराजपुरंप्रति ॥ जैमिनिरुवाच एतावदुक्त्वावचनंकृष्णोनागपुरंययौ ॥ यत्रास्तेधर्मतनयोमहर्षिपरिवारितः ॥ ११ ॥ गंगातीरेवरक्षेत्रेदिव्यमंडपमंडिते ॥ देवकीप्रमुखायत्रस्त्रियःसंतिमनोरमाः ॥ १२ ॥ धर्मराजगृहंप्राप्यराजानंवीक्ष्यमाधवः ॥ नमस्कृत्याग्रतस्तस्थौनृपेणाप्यभिनंदितः ॥ १३ ॥ शशंसपार्थसंप्राप्तंहयंराजन्यमंडलं ॥ प्राप्तोनीलध्वजोराजाहंसकेतुर्महाबलः ॥ १४ ॥ मयूरकेतुर्बलवान्बद्धुधायःपरीक्षितः ॥ धर्मराजतवभ्रात्रात्वत्पुण्येनजितानृपाः ॥ १५ ॥ सुधन्वायोधितोवीरोराजन्कृष्णेणसंयुगे ॥ सुरथेनापिसभयाःकृतावीरेणतेविभो ॥ १६ ॥ ततोमणिपुरंप्राप्तःसव्यसाचीहयान्वितः ॥ बभ्रुवाहेणसंग्रामेपुत्रेणनिहतोऽर्जुनः ॥ १७ ॥ उलूपीमणिनापार्थंजीवयामासभामिनी ॥ प्रथमंकर्णपुत्रंतंसर्ववीरप्रतोषकं ॥ १८ ॥ संजीवयित्वात्वरितातस्मिन्कालेपतिव्रता ॥ पुत्रेणसहितःपार्थोययौसारस्वतंपुरं ॥ १९ ॥ वीरवर्मावशीयत्रसंजातःस्वयमेवसः ॥ ततःकौंतलकंवाजीप्राप्तस्तेधर्मनंदन ॥ २० ॥ चंद्रहासोधिपोयत्रदुर्जयःससुरासुरैः ॥ ततःसतुरगोयातोमध्येन

दनदीपते:॥ २१॥ शुष्कंपत्रंयत्रकृत्वामस्तकेबकदाल्भ्यकः॥ चिरंस्थितोमहातेजास्तपस्तप्तुंचसुव्रतः ॥ २२॥ ददृशुः पार्थमुख्यास्तेपंचवीरामयासह॥ तंमुनिंहिपुरस्कृत्यसमानयतितेऽनुजः॥ २३॥ वित्तंबहुसमानीतंरत्नानिविविधानि च॥ स्तोकाहिपृथिवीपार्थप्रतापस्तेऽधिकःप्रभो॥ २४॥ एवंकुशलिनःसर्वेपुनःप्राप्ताःस्वमंदिरं ॥ यथामांवीक्षसेराजं स्तथासर्वान्विलोकय ॥ २५॥ एहिभीममहाबाहोदेहिमेपरिरंभणं॥ ततोभीमादिभिर्वीरैर्वासुदेवोनमस्कृतः॥ २६॥ न मस्कृत्यहरिःकुंतींमातॄस्ताःपुरतःस्थिताः॥ववंदेमुदितस्तत्रकथयन्कुशलंस्वकं॥२७॥द्रौपदीचसुभद्राचनमस्कृत्यजना र्दनं॥ स्थितासमीपंकृष्णस्यहर्षव्याकुललोचना॥ २८॥ गांधारींधृतराष्ट्रंचविदुरंसंजयान्वितं॥ ददर्शकृष्णोभगवान्प रिष्वज्ययथासुखं॥ २९॥ ततोभीमेनसहितोविवेशस्वंनिवेशनं॥ यत्रसारुक्मिणीदेवीसत्यभामाचलक्ष्मणा॥ ३०॥ तथाजांबवतीरम्याकृष्णदर्शनलालसा ॥ एताश्चान्याश्चताबह्व्योवीक्षंतेहरिमागतं॥ ३१॥ उवाचसत्यभामाथस्वना थंसुसमागतं॥ पालितःपांडवोनाथसहयःसबलोवने ॥ ३२॥ काचित्प्राप्तात्वयानोवानारीकुब्जाऽथवामना॥ प्रमी लांहियथापार्थःप्रयाणेऽस्मिन्प्रलब्धवान्॥ ३३॥ जैमिनिरुवाच तस्यास्तद्वचनंश्रुत्वाप्रहस्यमधुसूदनः॥प्रत्युवा चसमीपस्थंभीमसेनंमहामतिः॥ ३४॥ अस्याःश्रुतंभीमवचोवक्रंयन्मांप्रभाषितं॥बहुपुत्रोऽस्मिसंजातःपौत्रैरपिस मन्वितः॥३५॥युधिष्ठिरस्यनगरेवहुवृद्धसमागमे॥यस्यमेऽत्रस्थितिर्जातात्रपाहिस्त्रीपरिग्रहे॥३६॥एवमेवनजानाति सत्यावक्तुंचगोपने॥ बालत्वेयत्कृतंकिंचित्सांप्रतंतन्नमेप्रियं॥३७॥एतस्मिन्नंतरेप्राप्तःप्रतीहारोमहीपतेः॥कृष्णंविलो क्यभीमंचविनीतवदुवाचह ॥ ३८॥ उत्तिष्ठंतुजनाःसर्वेकृष्णमुख्यान्नृपालये॥ सर्वैस्तुसहितःकृष्णकुरुयज्ञंमनोरमं॥ ॥ ३९॥ जैमिनिरुवाच ततोदेवोनृपंप्राप्यप्रत्युवाचमहाबलः॥ त्वयाऽत्रराजन्स्थातव्यंयज्ञवाटेमनोरमे ॥ ॥ ४०॥ अहंचधृतराष्ट्रेणवृद्धैश्चपरिवारितः॥ ऋषिभिःसहितोयास्येभ्रातृभिःसहितोग्रतः॥ ४१॥ अर्जुनोयत्रतंदि व्यंपरिवार्यमहाबलः॥ बकदाल्भ्यंसुचरितंसहयःसंस्थितःपथि॥ ४२॥ कुंतीचसंमुखायातुतथैवममयोषितः॥ संभा वयंतुसंप्राप्तंमुनिस्त्रीगणसंयुताः॥ ४३॥ ब्राह्मणाद्याश्चयेवर्णावेदध्वनिसमन्विताः॥ लाजवर्षंप्रकुर्वाणागजस्थाश्च

कुमारिकाः ॥ ४४ ॥ पताकाभिर्विचित्राभिर्नगरंसमलंकृतं ॥ नरैश्चनृत्यसंयुक्तैर्नानाकौतुकमिश्रितैः ॥ ४५ ॥ पुष्पोत्करैः समाकीर्णंचंदनोदकशीतलैः ॥ कुर्वंतुराजपुरुषाःपार्थस्याद्यसमागमे ॥ ४६ ॥ एवंकृष्णेनतेसर्वेसंदिष्टास्तैस्तथाकृतं ॥ पुरस्कृत्यहृषीकेशंनिर्गताःपुरवासिनः ॥ ४७ ॥ प्राप्तःपार्थोहयौप्राप्तौदिष्ट्यादिष्ट्येतिवादिनः ॥ रुक्मिणीस्ववधूवृंदैःस हिताशिबिकांययौ ॥ ४८ ॥ उषास्त्रीणांसहस्राणिपुरस्कृत्यययौपथि ॥ तथासत्यास्वकंवृंदंनारीणांसमलंकृतं ॥ ४९ ॥ कुसुमैःपारिजातस्यदुकूलैःक्षौरहासकैः ॥ कौसुंभरंगयुक्तैश्चरम्यकार्पासकैर्ययौ ॥ ५० ॥ ततोजांबवतीदेवीनिरगान्मा निनीगणैः ॥ मुक्तामालावृतैःकांतैर्युवभावसमन्वितैः ॥ ५१ ॥ वेष्टितैर्दिव्यवसनैस्तमालनिभकंचुकैः ॥ हर्षादतीवनि र्यांतिसमूहाःस्त्रीमयाःपथि ॥ ५२ ॥ परस्परस्यसंघर्षात्क्षरत्कुंकुमपंकिलां ॥ छिन्नमौक्तिकहाराणांतोयेनधरणींस्त्रियः ॥ ५३ ॥ चक्रुःकर्पूरदानेनच्युतेनचकरात्करैः ॥ गजस्थादेवकीदेवीयशोदारुक्मिणीस्थिता ॥ ५४ ॥ कुंतीचैवगजेम त्तेप्रस्थितापांडवंप्रति ॥ धृतातपत्रासर्वास्तायोषितश्चलचामराः ॥ ५५ ॥ हर्षेणमार्गेसंयांतिवीक्षितुंचारुलोचनाः ॥ धनंजयंचिराप्राप्तंवासुदेवेननोदिताः ॥ ५६ ॥ एवंमहाजनयुतःप्रातःस्नानंमलापहं ॥ कृत्वाकुसुमगंधेनवासितोहि समस्थले ॥ ५७ ॥ व्यूह्यसेनांस्वयंरम्यामर्धचंद्रनिभांहरिः ॥ अग्रतोब्राह्मणाःसर्वेवेदध्वनिकृतःस्थिताः ॥ ५८ ॥ तेषां पत्न्योययुश्चाग्रेदधिदूर्वाक्षतैर्युताः ॥ क्षत्रियाःस्वर्णपात्रेषुधृतकर्पूरदीपिकाः ॥ ५९ ॥ गोरोचनंकुंकुमचंदनानिसुवर्ण पात्रेषुनिधायवेश्याः ॥ कौसुंभवस्त्रैश्चविकासितांग्यस्तस्थुःप्रभासन्मुकुटाःकृशांग्यः ॥ ६० ॥ महाजनानांपुरतश्चवेश्या नृत्यंतिमुक्ताफललोलहाराः ॥ प्रमाथिभिर्नेत्रकटाक्षवीक्षणैर्विकाशयंत्याशुमनांसियूनां ॥ ६१ ॥ नृत्येनताःपथिहरिंपरि तोषयंतिसद्भावहावरसतालयुगेनरामाः ॥ मुग्धंचतत्स्वमुखपद्मरसाधिरूढंतस्थुःकरैरलिकुलंविनिवारयंत्यः ॥ ६२ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेअर्जुनागमोनामद्विषष्टितमोऽध्यायः ॥ ६२ ॥ ॥ ७ ॥ ॥ ७ ॥ ॥

जैमिनिरुवाच पार्थःप्राप्तोऽवतोभूपैःकालेनकियतानृप ॥ यत्रतिष्ठतिकृष्णोसौमहाजनयुतःपथि ॥ १ ॥ अर्जुनेनस्व कंसैन्यंरचितंराजभिर्युतं ॥ समुत्तीर्यस्वयंयानात्पुरस्कृत्यतुरंगमौ ॥ २ ॥ नृपतीन्पुरतःकृत्वाक्रर्षिंचशिबिकांस्थितं ॥ त्य

क्वायानानिभूपालाःप्रयांतिहरिसंमुखं ॥ ३ ॥ ददृशुःपार्थसैन्यंतेलीनंकृष्णकलेवरे ॥ धर्मराजनिमित्तंहिसैन्यरूपःस्व
यंहरिः ॥ ४ ॥ गजामत्ताहयाःशुभ्रारथाश्चैवपदातयः ॥ राजानोराजपुत्राश्चबभूवुःकृष्णरूपिणः ॥ ५ ॥ सर्वेसुंदररूपा
णिकृत्वायत्राग्रतःस्थिताः ॥ राजानःप्रसमीक्ष्याथप्रोचुस्तेवैपरस्परं ॥ ६ ॥ दृष्टावैबहवोऽस्माभिर्देशाःपार्थहयानुगैः ॥
देशानांवैभवेनापितुष्टानिविदुषामपि ॥ ७ ॥ मनांसियानितान्यत्रवीक्ष्ययौधिष्ठिरंपुरं ॥ गर्हयंतिनिजंचारुवैभवंदेश
संभवं ॥ पुण्यंधनंसुखंधर्मोदेवोद्यानस्यकौतुकं ॥ ८ ॥ संपदोबहुलायत्रहसंतिभुवनत्रयं ॥ जनाःपुण्यप्रियाय
स्मिन्नानामंडनभूषिताः ॥ ९ ॥ रतिरूपास्तुकामिन्योनरामन्मथरूपिणः ॥ सूर्येद्रवाहनैर्मान्यारत्नालंकारभूषिताः ॥ १० ॥
विलोक्यंतेगजायत्रकिंप्रसूताहरेर्गजात् ॥ नानारत्नैःकिरीटैश्चभूषितारत्नकंबलैः ॥ ११ ॥ धाराभिःपंचभिर्युक्तायत्रसं
तितुरंगमाः ॥ विजेतारःसुरहयान्स्ववेगेनसमर्धिताः ॥ १२ ॥ किमत्रवर्ण्यतेचारुपांडवस्यपुरेहरिः ॥ सर्वव्याप्यस्थि
तोऽनंतःस्वभाभिर्भासयन्दिशः ॥ १३ ॥ कन्यकाकरनिर्मुक्तैर्मौक्तिकैरत्नमिश्रितैः ॥ पार्थागमेभूभृतोऽत्रक्रियंतेहारसंयु
ताः ॥ १४ ॥ एतेराजप्रभृतयोविराजंतेऽत्रचामरैः ॥ उद्यताश्चलितैर्वीराःकिमूर्ध्वकरभास्कराः ॥ १५ ॥ अत्रायांतिहि
वृंदानिऋषीणामूर्ध्वरेतसां ॥ याचितुंदीक्षिताद्धर्मादसिपत्रव्रतस्थितात् ॥ १६ ॥ धूपधूमेनगगनंसमांसलमिवाभव
त् ॥ कृष्णस्योपरिभूलोकेवादित्रभयशंकितं ॥ १७ ॥ एषासेनात्रविरजाधर्मराजस्यविक्ष्यते ॥ चलितापिधृताधीरैःस्वयं
कृष्णेनरक्षिता ॥ १८ ॥ एवंब्रुवंतस्तेसर्वेराजानःसंगताहरिं ॥ तत्रपार्थोमहाबुद्धिःकृष्णमुख्यान्महाजनान् ॥ १९ ॥ नमस्कृ
त्यमुदालिंग्यदर्शयामासभूपतीन् ॥ सौबलेयींचकुंतींचदेवकींचपितृव्यकं ॥ २० ॥ धृतराष्ट्रंचविदुरंप्रत्युवाचधनंजयः ॥
एनंपश्यंतुमेपूज्यंराजानंचंद्रहासकं ॥ २१ ॥ विषयाभिरतंवीरंविष्णुभक्तंसमागतं ॥ वीरवर्मानृपश्रेष्ठोनानावीरगणा
ग्रणीः ॥ २२ ॥ नमस्करोतिपुरतोधृतराष्ट्रमहीपते ॥ २३ ॥ मयूरकेतुःसमुपैतिचायंविभेदितोयोहरिणानभिन्नः ॥ स्व
धर्मतोवीरजनंतृणंखेन्यवेशयद्बाणसमीरणेन ॥ २४ ॥ एनंविभावयनृपंसुधियांवरिष्ठंत्वत्पादसेवनरतंसहसाभिप
न्नं ॥ यस्यप्रतापरविणारिपुवक्त्रपद्मंसंकोचितंगतबलंस्वकरैर्दिवापि ॥ २५ ॥ यःशेषराजभवनान्मणिमाजहारयो

नागभोगविलसद्विषमादधार॥ योजान्हवीगहनशापदवाग्निदग्धंमांबांधवैर्युतमचीकरदेतिसोयं॥ २६॥ हंसध्वजंप
श्यपुरःपादयोःप्रणतंनृपः॥ यस्यपुत्रौमहावीरौशंकरंपार्वतीपतिं॥ २७॥ स्वशिरोभ्यांप्रभायुक्तंचक्रतुर्मुदितंदिवि॥
येनसर्वेरणेवीराःस्वप्रतापेनमोचिताः॥ २८॥ तंकर्णपुत्रंप्रणतंपरिष्वजजनाधिप॥ नीलध्वजंचबलिनंसमुत्थापय
मारिष॥ २९॥ वन्हिनायेनतत्सैन्यंदग्धंसंशयितावयं॥ जैमिनिरुवाच ततःसर्वैर्नृपास्तेनधृतराष्ट्रेणपूजिताः॥
समागत्यमहात्मानंधर्मराजंववंदिरे॥ ३०॥ नमस्कृत्यार्जुनस्तंवैसमालिंग्याग्रतःस्थितः॥ भीमसेनंचवृद्धांस्तान
भिवंद्यप्रहर्षितः॥ ३१॥ कुंतीवीक्ष्यसुतंप्राप्तंशरतोमरदारितं॥ परिष्वज्यस्थितावीरंमुंचतीहर्षजंजलं॥ ३२॥ कर्णपु
त्रंसमाघ्रायमूर्ध्निवैप्रियबालकं॥ प्रत्युवाचत्वयासर्वंरक्षितंवृषकेतुना॥ ३३॥ तथाप्रहर्षिताकुंतीस्थिताधर्मनिवेशने
युधिष्ठिरोऽथऋषिभिःसहितःकर्षितुंययौ॥ ३४॥ क्षेत्रंगृहीत्वावृषभौद्रौपदींचसुमध्यमां॥ ओषधीःसमुपादायदीक्षि
तोवसुमेवच॥ ३५॥ कृष्णाद्याःसर्वभूपालाःपश्चंतःपृष्ठगामिनः॥ कुंतीचदेवकीदेवीयशोदावरवर्णिनी॥ ३६॥ सि
षिचुश्चंदनजलैःसकर्पूरैर्युधिष्ठिरं॥ मंत्रपाठंप्रकुर्वंतिब्राह्मणाःस्त्रीभिरन्विताः॥ ३७॥ कृषित्वाततदाक्षेत्रमिष्टिकाच
यनंततः॥ चकारत्वरितोमंत्रैरिष्टिकानांचतुःशतैः॥ ३८॥ चतुर्वेदैश्चविधिवद्व्यासमुख्यैःप्रचोदितः॥ बकदाल्भ्ये
नमुनिनासमस्तैर्वंदितेनच॥ ३९॥ सुपर्णाचितिरेकाहिप्रथमातत्रसाकृता॥ सुपर्णाख्याचहंसाख्याइष्टिकानांचतुःश
तैः॥ ४०॥ दक्षिणस्तस्यपक्षस्तुविहितोयज्ञवेदिभिः॥ चतुश्चत्वारिंशताचशतेनैकेनचैवहि॥ ४१॥ अनेनैवान्यपक्षो
हिपुच्छंमध्येशतेनच॥ एकविंशतियुक्तेनतस्यवैरचितंमुखं॥ ४२॥ द्वितीयाद्विगुणाभिर्हिकृतास्त्रैनैवसाचितिः॥ इष्टि
काभिस्तृतीयातुतस्मिन्वैद्विगुणातथा॥ ४३॥ चतुर्थीपंचमीयावत्सुपर्णानांचपंचकं॥ संजातंपरिशिष्टैश्चवेष्टितंबहु
भिस्तथा॥ ४४॥ अष्टद्वारयुतंरम्यंमंडपंचक्रिरेबुधाः॥ सुपताकंसुकुंडानामष्टकंयाज्ञिकैःकृतं॥ ४५॥ षट्खादिराःकृता
यूपाःसप्तपालाशजाःकृताः॥ पंचबैल्वाश्चरचिताःपंचश्लेष्मातकस्यते॥ ४६॥ चषालैर्भूषितास्तत्रवेदिकात्रितयंकृतं
स्रुवाश्चस्थापितारम्याजुहूनांशतमेवच॥ ४७॥ वैकंकतीनांराजेंद्रस्रुचीनांषष्टिरेवच॥ गोचर्मलोहितंसोमवल्लीमुस

लमेवच ॥ ४८ ॥ मंडपेविहितंसर्वंतथारम्यमुलूखलं ॥ संभाराणिचभूरीणिवस्तुजातंसमाहृतं ॥ ४९ ॥ आचार्यस्तुकृतोव्यासोबकदाल्भ्यःपितामहः ॥ ऋत्विजश्चकृतादिव्याऋषयोदीप्ततेजसः ॥ ५० ॥ वामदेवोवसिष्ठश्चगौतमोऽत्रिःपराशरः ॥ भारद्वाजोजामदग्न्यःकहोडोभागुरिस्तथा ॥ ५१ ॥ रैभ्यःसुमंतुःकौंडिन्योजातूकर्ण्योऽथगालवः ॥ सौभरिर्लोमशाद्याश्चकृतास्तेऋत्विजःक्रमात् ॥ ५२ ॥ रक्षांविधायसन्मंत्रैरक्षोघ्नैर्द्वारपालकाः ॥ वृतास्तेधर्मराजेनतस्मिन्यज्ञेमनोरमे ॥ ५३ ॥ विश्वामित्रश्चपुलहोधौम्यश्चारुणिरेवच ॥ उपमन्युर्वायुभक्षोमधुच्छंदाविभांडकः ॥ ५४ ॥ एतेकृताद्वारपालास्तस्मिन्यज्ञेऽतिसुंदरे ॥ एतेचान्येचबहवोवृतास्तेपूजिताःक्रमात् ॥ ५५ ॥ दीक्षितेनतदाराजन्मृगाजिनविधारिणा ॥ नवनीतानुलिप्तेनद्रौपदीसहचारिणा ॥ ५६ ॥ व्यासस्ततःप्रत्युवाचदीक्षितंधर्मनंदनं ॥ उपविष्टांश्चभूपालान्दिव्यसिंहासनेषुच ॥ ५७ ॥ दंपतीनांचतुःषष्टिर्यातुगंगातटंशुभं ॥ आहर्तुंजान्हवीतोयंमयादिष्टंयथोचितं ॥ ५८ ॥ अत्रिस्तुपत्नीसहितोवसिष्ठोरुंधतीयुतः ॥ रुक्मिणीसहितःकृष्णःसुभद्रासहितोऽर्जुनः ॥ मायावतीयुतोवीरःप्रद्युम्नोयातुसत्वरः ॥ ५९ ॥ उषागृहीतकरकाअनिरुद्धान्वितासती ॥ हिडिंबयाभीमसेनोवृषकेतुःप्रभद्रया ॥ ६० ॥ मयूरकेतुःप्रिययालीलावत्याऽग्रगच्छतु ॥ प्रभावत्यायौवनाश्वोनीलकेतुःसुनंदया ॥ ६१ ॥ गृह्णातुकलशंशीघ्रमनुशाल्वोधमिल्लया ॥ एतेमयाहिनिर्दिष्टास्तथाऽन्येजान्हवीजलं ॥ ६२ ॥ आनयंतुनृपस्यार्थेसदाराःकलशैःशुभं ॥ जैमिनिरुवाच एवंव्याससमादिष्टाःस्वपत्नीसहितामुदा ॥ ६३ ॥ आनेतुंजान्हवीतोयंप्रस्थिताबद्धपल्लवाः ॥ वादित्राणांस्वनोरम्यःप्रावर्ततजलागमे ॥ ६४ ॥ ब्राह्मणाद्याश्चयेलोकागजस्थाश्चकुमारिकाः ॥ मुक्ताफलानिवर्षंत्यःशृण्वंत्यःशंखगर्जितं ॥ ६५ ॥ पठंतस्तत्रमुनयोगायंतोगीतकोविदाः ॥ तत्रनृत्यंप्रकुर्वाणास्तेलोकाःप्रस्थिताःपुरः ॥ ६६ ॥ नानाशृंगारसहितोनिर्ययौसमहाजनः ॥ देवकींचैवकुंतींचपुरस्कृत्यजनार्दनः ॥ ६७ ॥ तदाकुंतीचकृष्णस्यगृहीत्वावस्त्रपल्लवं ॥ बबंधरुक्मिणीपट्टकूलप्रांतेमनस्विनी ॥ ६८ ॥ तत्कौतुकंसमालोक्यनारदोमुनिसत्तमः ॥ जगामसत्याभवनंशंसितुंकृष्णनिर्गमं ॥ ६९ ॥ नारदउवाच सत्यभामेशृणुवचोमदीयंकृष्णवल्लभे ॥ यज्ञारंभेसतांपार्श्वेनानानृपसमागमे ॥ ७० ॥ रुक्मिणीबहु

लंमानंप्रपेदेहरिसंयुता ॥ निर्यातिजलमानेतुंकृष्णेनैवसुसंयुता ॥ ७१ ॥ धृतातपत्रासायातिसधूपाचलचामरा ॥ ल
भतेराजसन्मानंसैवनान्याःस्त्रियोहरेः ॥ ७२ ॥ समर्थःकामपुत्रोऽसौपौत्रोयस्यानिरुद्धकः ॥ कस्माद्धिशयितंगेहेत्वयास
त्येचतद्वद ॥ ७३ ॥ समीपेत्वांसमालोक्यमुखदाक्ष्येणकेशवः ॥ तत्रानेष्यत्सत्यभामेयद्यसिष्यत्समीपगा ॥ ७४ ॥
सत्यभामोवाच अत्रतिष्ठतिगोविंदोमद्गृहेमुनिसत्तम ॥ अनेनसहितायास्येतत्त्वंपश्यसमागमं ॥ ७५ ॥ जैमिनि
रुवाच नारदोदद्दशेसत्याःकेतनेतार्क्ष्यकेतनं ॥ उवाचकेशवंविप्रस्त्वंदृष्टोऽसीतिसंसदि ॥ ७६ ॥ सत्यागृहेचपश्या
मिविस्मयोमेप्रजायते ॥ युधिष्ठिरस्यपुरतोमयादृष्टोऽसिमंत्रदः ॥ ७७ ॥ सत्यायुक्तःप्रयास्येवंगच्छगच्छजगत्पते ॥
निर्जगामगृहात्तस्मान्निर्गतंवीक्ष्यमाधवं ॥ ७८ ॥ नारदोमुनिरन्यत्रययौजांबवतीगृहं ॥ प्रविश्यमंदिरंतस्याःप्राहजांब
वतीमिदं ॥ ७९ ॥ नारदउवाच स्थितासिकिंगृहेमातर्नगतासिनृपालयं ॥ आहर्तुंजान्हवीतोयंयत्रयातिस्व
यंहरिः ॥ ८० ॥ रुक्मिणींसत्यभामांचसहनेष्यतिमाधवः ॥ जांबवत्युवाच सर्वास्तेनयुताःसंतिमहिष्यःकेशव
स्यताः ॥ ८१ ॥ यांपरित्यज्यगंतासौसानजीवतिमानिनी ॥ अस्मिन्समागमेरम्येसाधूनामपमानिता ॥ ८२ ॥ जैमि
निरुवाच तत्रापिनारदोवीक्ष्यमाधवंबद्धपल्लवं ॥ मंदिराणिसगोपीनांबभ्राममुनिसत्तमः ॥ ८३ ॥ सर्वाणितानि
सद्मानिसकृष्णानीत्यमन्यत ॥ पुनरागत्यदेवर्षिर्मंडपेपांडवस्यहि ॥ ८४ ॥ ऋत्विग्भिःसहितस्तस्थौस्तुवन्कृष्णंसनात
नं ॥ वसिष्ठेनसमंसर्वेराजानोजान्हवीतटे ॥ ८५ ॥ जग्मुःसकृष्णाःसानंदामहावीरैःसुरक्षिताः ॥ व्यासेनमंत्रितंतोयं
पूजिताजलदेवताः ॥ ८६ ॥ पूरयित्वाततोव्यासःकलशंचसपुष्पकं ॥ ददौकरेनुसूयायास्तस्मिन्कालेनराधिप ॥ ८७ ॥
सुवर्णकलशंचैकंपरिपूर्णमरुंधती ॥ जग्राहपुरतस्तेषांमुनीनांभावितात्मनां ॥ ८८ ॥ रुक्मिणीमस्तकेस्वेतुकलशंतोयपू
रितं ॥ अरुंधत्यार्पितंस्नेहाद्दंगातीरेदधौमुदा ॥ ८९ ॥ रुक्मिणींप्रत्युवाचाथवसिष्ठस्यप्रियासती ॥ दूयतेतवभद्रेकंपुष्प
भारेणयद्गृहे ॥ ९० ॥ तस्मिन्मयाऽर्पितेनात्रकलशेननदूयसे ॥ अरुंधतीवचःश्रुत्वासुभद्रावाक्यमब्रवीत् ॥ ९१ ॥ एषाभा
रसहामातर्येनगोवर्धनोगिरिः ॥ धृतःकरेगवार्थंचसन्नाहंचस्वलीलया ॥ ९२ ॥ रुक्मिणीतंदिवारात्रौत्वंदिधृत्वानदूयते ॥

पतिव्रतानांधर्मोऽयंकृतःकेवलयाऽनया॥ ९३॥ रुक्मिण्युवाच ममव्रतंसमालोक्यसुभद्रातंधनंजयं ॥ धारयं
तीव्हदिसदासौख्यमाप्नोतिनित्यशः॥ ९४॥ जैमिनिरुवाच एवंब्रुवंत्यस्ताःसर्वाजगृहुःकलशान्बहून्॥स्वेस्वेशिर
सिपुष्पाढ्येधृतमौक्तिकपुंजके ॥ ९५ ॥ सभर्तृकाश्चसंप्राप्तायज्ञवाटेतथाविधे॥ मृदंगायत्रवाद्यंतेशंखाश्चपटहैःसह
॥ ९६ ॥ वीणाश्चविविधाभेर्यःशंखाश्चकाहलाःशुभाः॥ तत्रानीयजलंपुण्यंपावितःसतुरंगमः॥द्रौपद्याधर्मराजेनयू
पेबद्धःसुपूजितः॥ ९७॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेजलयात्रावर्णनंनामत्रिषष्टितमोऽध्यायः॥ ६३॥ ६४ ॥
जैमिनिरुवाच ततःप्रववृतेयज्ञोधर्मराजस्यशासनात्॥ यज्ञविद्याविधानेनस्नातोयंमंत्रितैर्जलैः॥ १ ॥भीमार्जुना
दयःसर्वेसकृष्णाःकर्मकारकाः॥ पादप्रक्षालनंकृत्वामुनीनांभावितात्मनां॥ २॥ स्वयमेवहृषीकेशःस्थापयामासतानृ
षीन्॥ ततोपविष्टावासांसिपरिधायद्विजोत्तमाः॥३॥ चंदनेनानुलिप्तांगादिव्यालंकारभूषिताः॥ स्रग्विणोदत्तमाल्या
श्चदत्तकर्पूरवीटिकाः॥ ४॥सुवर्णपीठेष्वासीनाःसंस्तुताःकृष्णपांडवैः॥दीयतांदीयतामन्नंशब्दोभून्नृपतेर्गृहे॥ ५॥ युधि
ष्ठिरस्ययज्ञेतुनानाद्विजसमागमे॥ सुवर्णंचैवरत्नानिवासांसिरुचिराणिच ॥ ६ ॥ गजाश्वरथयानानिगोसहस्राणि
चंदनं॥ छत्राणिचामराण्येवदासीदासगणान्महीं॥ ७॥ अर्थिभ्यश्चेतरेभ्यश्चमंदिराणिधनानिच॥ यस्ययस्यप्रियंय
त्तुतत्तस्मैदीयतामिति ॥ ८ ॥ युधिष्ठिरःकृतस्नानोयज्ञकर्मणिदीक्षितः॥ सुवर्णचयमासाद्यसमानीयतुरंगमं॥ ९ ॥
प्रोवाचाग्रेपशुरभूच्छ्रुतिमेतांपठन्पुरः॥पिबभोस्त्वमपोघोटतवलोकोभविष्यति॥ १०॥युधिष्ठिरस्यतद्वाक्यमाकर्ण्यतु
रगःस्वयं॥ धुनयामासवदनमपश्यत्केशवंमुदा॥ ११॥ प्रोथाभ्यांस्वमभिप्रायंशशंसनकुलायसः ॥ ज्ञात्वाभावंतुरंग
स्यनकुलःप्राहधर्मजं॥ १२॥ वाजीशंसतिराजेंद्रनाहंयास्येत्रिविष्टपं॥ अन्येषुकिंतुयज्ञेषुस्वर्गकामेषुयेहयाः॥ १३॥
त्रिविष्टपंगतावीरतेपुकृष्णोनकर्मकृत्॥ अनीश्वरेषुयज्ञेषुस्वर्गस्तुपरमंफलं ॥ १४ ॥जायतेभुविकर्तॄणामस्मिन्यज्ञेफ
लंहरिः॥ ममापिकृष्णवदनेस्थितंपश्यंतुयाज्ञिकाः॥ १५॥ नकुलउवाच एवंब्रूतेधर्मराजतुरंगस्तेमहाक्रतौ॥
अथैनंमुनयःसर्वेयूपपार्श्वेसुमंत्रितं॥ १६ ॥राजानःस्त्रीसमूहोऽपियांतंपश्यंतुमाधवं॥ नकुलस्यवचःश्रुत्वायूपेनीत

स्तुरंगमः ॥ १७ ॥ यूपेबद्धोहयोविप्रैःसकृष्णैरभिमंत्रितः ॥ धौम्यउवाच भीमखड्गंसमादायतिष्ठत्वंनिश्चलःक्ष
णं ॥ १८ ॥ यावत्परीक्षांकुर्वेऽहंवाजिनोऽस्यमहामते ॥ ततोधौम्योहयस्याशुवामकर्णन्यपीडयत् ॥ १९ ॥ तावत्क्षीर
स्यधारातुनिर्गताजनमेजय ॥ विस्मिताःसकलालोकाःशोणितंनैवदृश्यते ॥ २० ॥ धौम्योऽब्रवीद्भीमसेनंछिंधिकंवा
जिनोधुना ॥ यथातुष्येज्जगन्नाथःपुराणपुरुषोत्तमः ॥ २१ ॥ वादित्रनादेमहतिप्रवर्तितेभीमोलुनात्तस्यहयस्यशीर्षं ॥
ऊर्ध्वंगतंतच्चशिरोनचाधःसूर्येप्रविष्टंकिलवह्निरूपं ॥ २२ ॥ शुद्धंज्ञात्वाहृषीकेशस्तुतोदैनमुरस्थले ॥ बैल्वेनकंटकेनापि
भिन्नःकृष्णेनपावनः ॥ २३ ॥ निर्गताक्षीरधारातुतुरगस्यकलेवरात् ॥ धारांविनिर्गतांवीक्ष्यऋषयोधर्ममब्रुवन् ॥ २४ ॥
एवंविधोनकस्यापिशुद्धःपूर्वंतुरंगमः ॥ शुद्धंज्ञात्वाहृषीकेशोधर्मपुत्रंतुसोऽब्रवीत् ॥ २५ ॥ तथाब्रुवंस्तेऋषयोदृष्ट्वाशु
द्धंतुरंगमं ॥ दिष्ट्यातेसफलोयज्ञोजायतेद्ययुधिष्ठिर ॥ २६ ॥ तेषांसंवदतामेवंतुरंगमकलेवरात् ॥ निर्गतंसुमहत्तेजःप्र
विष्टंकेशवानने ॥ २७ ॥ पश्चाच्छरीरंपतितंभूत्वाकर्पूरमेवतत् ॥ विभूतिरिवरुद्रस्यच्युतागात्रादशोभत ॥ २८ ॥ वि
स्मितामुनयस्तंतुकर्पूरंवीक्ष्यतेभवन् ॥ कर्पूरंजुहुवुस्तेतुहोमकुंडेतुतत्क्षणात् ॥ २९ ॥ यत्रोपविष्टोराजासौसपत्नीकःस
माधवः ॥ व्यासोगृहीत्वाकर्पूरंस्रुवेणेदमथाब्रवीत् ॥ ३० ॥ व्यासउवाच गृहाणेंद्रमहायज्ञेघनसाराहुतिंविभो ॥
एहिराज्ञार्पितामेनांदुर्लभामग्रतःकलौ ॥ ३१ ॥ शक्रःसमागतःसाक्षात्प्रत्युवाचमहामुनिं ॥ देहिपावकवक्त्रेणयावत्तृ
प्तिर्ममाक्षया ॥ ३२ ॥ यांवीक्ष्यतृप्तिंप्राप्तोऽस्मिभुक्त्वाशंचभविष्यति ॥ व्यासस्ततोजुहावाग्नौवसंतेदशमीदिने ॥ ३३ ॥
शुक्लपक्षेहिचैत्रस्यसार्पर्क्षेगुरुवासरे ॥ स्वाहेतींद्रायविधिवत्परमामाहुतिंददौ ॥ ३४ ॥ चंद्रादिदेवताभ्यश्चतत्तन्मंत्रै
र्यथाक्रमं ॥ ततोदिग्देवताभ्यश्चमंत्रैर्दत्वायथाविधि ॥ ३५ ॥ घनसारंजुहावाग्नौदेवतानांपुरस्तदा ॥ हवनेनजगत्प्रीतं
बभूवसचराचरं ॥ ३६ ॥ होमधूमेनराजासौपूतःप्रीतोयुधिष्ठिरः ॥ समालिंग्याब्रवीद्भीमंदिष्ट्याजातश्चमेक्रतुः ॥ ३७ ॥
यज्ञांतेऽवभृथस्नानंकुर्वेऽहंनात्रसंशयः ॥ जैमिनिरुवाच ऋषिभिःसहितःकृष्णःस्नापयामासपार्थिवं ॥ ३८ ॥ सदारं
भीमसेनाद्यैर्दंतंभूपतिभिस्तथा ॥ सोमपानंकारयित्वाप्राशयित्वायथाक्रमं ॥ ३९ ॥ पुरोडाशंतुसर्वेभ्योदत्वाशेषंतदात्म

दत्॥ जयशब्दैर्वंदिनस्तेतथावादित्रनिःस्वनैः॥ ४० ॥ तुष्टुवुर्धर्मराजानंगुणगीतैश्चगायकाः॥ नीराजनंततश्चक्रुर्देव
कीप्रमुखाःस्त्रियः॥४१॥ कुंतीवधूभिःसहितामुदिताप्रापतत्सुखं॥ कृत्वापूर्णाहुतिंराजाउपविष्टोयुधिष्ठिरः॥ ४२॥अ
लंकृतश्चकृष्णेनतत्रराजामहात्मना॥ शुशुभेमघवानेवयथास्वर्गेसुरोत्तमैः ॥ ४३ ॥ पूर्वंहरिंपूजयित्वावस्त्रालंकारचं
दनैः॥ व्यासायपृथिवींसर्वांददौराजामुदान्वितः॥ ४४ ॥ संकल्पपूर्वंविधिवत्पुनर्व्यासःक्रमाद्ददौ॥ तद्द्रव्यंब्राह्मणेभ्य
श्चदीनेभ्यश्चददौऋषिः॥ ४५॥ रत्नाद्रिशिखरस्थंतुचरंतंकनकंद्वषं॥ ४६॥ बकदाल्भ्यायचददौतदाराजायुधिष्ठिरः॥
॥ ४७॥ एकोरथोवारणएकएवदशाश्वमुख्याश्चसुवर्णभारः॥ शतंगवांहेमविभूषितानांप्रस्थश्चदत्तोवरमौक्तिकानां
॥ ४८॥ एकैकशोभृत्यचतुष्टयंचकार्येषुदक्षंसददौनरेंद्रः॥ ऋत्विग्भ्योद्वारपालेभ्योददौपूर्णमनोरथः ॥ तदर्धार्धक्रमे
णैवइच्छादानान्यनेकशः॥४९॥ ददौयुधिष्ठिरोराजानृपतीनप्यतोषयत्॥तुरंगाणांसहस्रंचगजानांचशतंशतं॥५०॥
अलंकारान्सुवर्णस्यकोटिंचप्रददौनृपः॥ प्रत्येकंनृपतीन्पूज्यद्विगुणेनैवयादवान्॥ ५१॥ रुक्मिण्याद्यास्त्रियःसर्वाअ
लंकारैश्चतोषिताः॥ उपवेश्यासनेकृष्णमलंकारशतैर्युतं॥ ५२॥यज्ञजंसुकृतंसर्वंहृषीकेशकरेददौ॥ वादित्रनादःसंज
ज्ञेपुष्पवृष्टिःपपातच॥ ५३॥ भीमाद्याःपांडवाःसर्वेयज्ञःकृष्णेनकारितः॥ इतिब्रुवंतःसततंहर्षिताश्चाभवन्नृप॥५४॥
मोचिताःपशवःसर्वेयेचयूपेनियंत्रिताः॥ तुष्टुवुस्तेजनाःसर्वेयज्ञःकृष्णेनकारितः॥५५॥ यज्ञप्रकरणंश्रुत्वामुच्यंतेसर्व
पातकैः॥ सर्वैश्चपूजितास्तेवैसंतिष्ठंतिधरातले॥५६॥ इत्याश्वमे०युधिष्ठिराभिषेकोनामचतुःषष्टितमोऽध्यायः॥६४॥
जैमिनिरुवाच यज्ञस्यांतेभीमसेनःप्रार्थयित्वामुनीन्नृपान्॥ सकृष्णान्भोजयामासविविधान्नेनमारिष॥ १॥
जनमेजयउवाच कथंतेभोजिताविप्राःसकृष्णाश्चमहीभुजः॥ ययारीत्यास्त्रियोबालाभीमेनरसकारिणा॥ २॥अ
न्नानिकानिजातानिसर्वंशंसमहामुने॥ कौतुकंजायतेऽतीवशृण्वतोमेतवाननात्॥ ३॥ जैमिनिरुवाच शृणु
राजेंद्रवक्ष्यामिभीमसेनेनयत्कृतं॥ मंडपेनवरत्नाढ्येरम्येकांचनभूषिते॥ ४॥ तत्रचंदनजातेषुपीठास्तरणकंबलाः॥स
रत्नाःस्थापिताभांतिपुष्पप्रकरपूरिताः॥ ५॥ कचोलानांचतुःषष्टिर्हेमस्थालीनियंत्रिताः॥ प्रतिविप्रंधृतास्थालीरत्नदी

पद्यान्विता ॥ ६ ॥ तिरस्करिण्यः पुष्पाणां चंद्रिकालंबिताः शुभाः ॥ कृष्णागुरुकृतैर्धूपैर्वासिते मंडपेऽमले ॥ ७ ॥ सुगंधेन जलेनाथ पात्रप्रक्षालनं कृतं ॥ प्रतिपात्रं सुवर्णस्य धृतो रत्नकमंडलुः ॥ ८ ॥ ततो भीमेन सरसं पायसं तु प्रवेशितं ॥ दद्दृशुर्ब्राह्मणास्थाल्यां चंद्रबिंबमिवोदितं ॥ ९ ॥ भक्तं सूपान्वितं चैव यूथिकाकुड्मलप्रभं ॥ १० ॥ पुष्पपत्रफलमूलदारुभिर्वल्कलैर्व्यंजनपत्रकृतानि ॥ व्यंजनानि कटुतिक्तकखंडैर्निर्मितानि पवनात्मजयत्नात् ॥ ११ ॥ कश्चिद्द्विजस्तदापूपान्वीक्ष्य पप्रच्छ चापरं ॥ नवनस्थेन च मया दृष्टमेतद्धि किंवद ॥ १२ ॥ पृच्छंतं प्राह विप्रोऽसौ मत्वाऽत्मानमतोऽधिकं ॥ चंद्रस्य शकलं विद्धि पतितं शतधा भुवि ॥ १३ ॥ एवं वदति विप्रेऽस्मिन् ततः प्राप्ताः स्म फेनिकाः ॥ स्थाले स्वस्मिन्समीक्ष्यैको ब्राह्मणो विस्मयं गतः ॥ १४ ॥ मरालो धर्मराजस्य सितपत्रयुतो महान् ॥ समुत्पन्न इति प्राह वायुभक्षो महातपाः ॥ १५ ॥ दंतोलूखलिना प्रोक्तं मोदकान्वीक्ष्य यद्वचः ॥ औदुंबराणि चामूनि विषये ऽस्मिन्मयोच्यते ॥ १६ ॥ भक्तं मेने द्विजः कश्चित्पुष्पाणि कुटजस्य तु ॥ करंजिकां मुनिवरो कर्णिकां मन्यते परः ॥ १७ ॥ वटकं कनकाभं तु मेने कश्चिद्द्विजस्तदा ॥ पतितं भानवीयं किं रथचक्रं ममाग्रतः ॥ १८ ॥ द्राक्षारसं पिबंत्येके केचिच्चूतरसं मुदा ॥ लुठंति हि सितामध्ये घृताक्तं कदलीफलं ॥ १९ ॥ मुखे चिक्षेप सकलं मुनिशिष्यो गतत्वचं ॥ सिताज्यैर्मंडकं विप्रो वेष्टयित्वा ततोऽपरः ॥ २० ॥ चिक्षेप मुखमध्ये तु संप्राप्तः सुखमुत्तमं ॥ मेने मोक्षसुखं तुच्छं भक्षयन्खंडलड्डुकान् ॥ २१ ॥ इत्थं भीमेन ते विप्रास्तथाऽन्ये क्षत्रियादयः ॥ लोकाः संभोजिताः सर्वे तस्मिन्यज्ञमहोत्सवे ॥ २२ ॥ संतर्पिता हि ते विप्रा दिव्यचंदनचर्चिताः ॥ तांबूलं चंद्रसंयुक्तं दृष्ट्वा विस्मयमागताः ॥ २३ ॥ शुष्कपत्राणि संचूर्ण्य भक्षयामो वने वयं ॥ ते कृतावरतांबूलरसज्ञा धर्मसूनुना ॥ २४ ॥ जैमिनिरुवाच ब्राह्मणैः सहितो राजा क्षत्रियैश्च महाबलैः ॥ उपविष्टः स यज्ञांते सकृष्णो यज्ञमंडपे ॥ २५ ॥ ततः प्राप्तौ विप्रवरौ विवदंतौ हि संसदि ॥ धर्मराजं समागत्य प्रोचतुर्वचनं नृप ॥ २६ ॥ धर्मराजावयोर्वादं सम्यक् छिंधि महामते ॥ राजोवाच बकदाल्भ्यमुखाः संति वसिष्ठात्रिपुरोगमाः ॥ २७ ॥ यत्र सभ्याः सुमनसस्तत्र वादकथा हि का ॥ निरूपय स्वविप्रेंद्र कारणं स्वं पृथक् पृथक् ॥ २८ ॥ ब्राह्मण उवाच एभिस्तु मत्करे दत्तं क्षेत्रं स्वीयं

यथाक्रमं ॥ तत्पुनःकर्षितंतस्मान्निधानंनिर्गतंनृप ॥ २९ ॥ धान्यमेवमयाग्राह्यंयत्क्षेत्रेजायतेपुनः ॥ निधानंनग्रही
ष्येऽहंनमदीयंहितद्ध्रुवं ॥ ३० ॥ एभिरेवतुतद्ग्राह्यंमयात्यक्तंनृपाधुना ॥ पश्यमांपीडयंत्येतेनिधानेनगतत्रपाः ॥ ३१ ॥
युधिष्ठिरउवाच   सत्यंवदमहाबुद्धेकिमर्थंपीड्यसेद्विजं ॥ भवान्गृह्णातुतद्द्रव्यंयन्नदत्तंत्वयापुरा ॥ ३२ ॥   ब्राह्मण
उवाच   मयासमर्पितंक्षेत्रंपुरास्मैधर्मनंदन ॥ यत्किंचिज्जायतेतस्मिन्ब्राह्मणस्यनतन्मम ॥ ३३ ॥ तच्छ्रुत्वावचनंकृ
ष्णःप्रत्युवाचहसन्निव ॥ मासत्रयंतुविप्रेंद्रौस्थिरौभवितुमर्हथः ॥ ३४ ॥ कृष्णवाक्येनतुष्टौतौक्षिप्त्वावित्तंनृपालये ॥
जग्मतुश्चगृहंराजन्प्रतीक्षंतौचतद्दिनं ॥ ३५ ॥   राजोवाच   अधुनामाधवकथंनिर्णयोनत्वयाकृतः ॥ सर्वेषांपश्य
तामेवविस्मयोमेमहान्विभो ॥ ३६ ॥   श्रीकृष्णउवाच   ऋषयःसंतिराजानःसुखेनतवसन्निधौ ॥ यज्ञांतेमुदिता
लोकामध्येवादकथाकथं ॥ ३७ ॥ मासेतृतीयेघोरस्तुभविष्यतिकलिर्नृप ॥ द्रव्यार्थेविवदंतौहिताडयंतौपरस्परं ॥ ३८ ॥
मुष्टामुष्टिसंप्रहारंकेशाकेशिनखानखि ॥ आगंतारौचतेपार्श्वेकलिनामथितौनृप ॥ ३९ ॥ त्वंतद्धनंद्विधाकृत्वाताभ्यां
दास्यसिमेमतिः ॥ भविष्यंतिकलौविप्राआचारश्रुतिवर्जिताः ॥ ४० ॥ राजानोधर्महीनाश्चपीडयिष्यंतितेप्रजाः ॥ अ
धर्मवल्लभोलोकोधर्मद्वेषीचमत्सरी ॥ ४१ ॥ द्यूतमद्यरतानित्यंसर्वेव्यसनिनःसदा ॥ देवकार्येपितृणांवासाधुस्त्रीभरणे
तथा ॥ ४२ ॥ ब्राह्मणार्थेधनंस्वल्पंदत्वातेदुःखभाजिनः ॥ भविष्यंतिकलौराजन्मुदितागणिकागृहे ॥ ४३ ॥ नेष्यंतिच
धनंभूरिद्यूतादिव्यसनेष्वपि ॥ जननींजीर्णवस्त्रेणवेष्टयिष्यंतितेकलौ ॥ ४४ ॥ वेश्यांवापुंश्चलींवापिदुकूलैर्विविधैःस्वयं ॥
धत्तूरकस्यपुष्पाणिकरवीरभवानिच ॥ ४५ ॥ सकंटकानिपुष्पाणिनयिष्यंतिशिवालये ॥ वरपंकजजांमालांकर्पूरंचंद
नंतथा ॥ ४६ ॥ नेष्यंतिकुमुदंचारुवेश्यास्त्रीकुलटागृहे ॥ मातरंपितरंचैवत्यजंतिहिजनाःकलौ ॥ ४७ ॥ स्त्रीसेवकाभ
विष्यंतिपरिचारकवत्सदा ॥ जननींताडयिष्यंतिलालयिष्यंतिस्वांस्त्रियं ॥ ४८ ॥ श्वश्रूश्वशुरयोश्चैवस्नुषाःकलियुगेनृप ॥
वदिष्यंत्यप्रियंवाक्यंहृदयेशल्यकारकं ॥ ४९ ॥ नविश्वासंकरिष्यंतिदेवेषुब्राह्मणेषुच ॥ कर्मभ्रष्टाभविष्यंतिचतुर्वर्णाः
कलौयुगे ॥ ५० ॥ स्वीयंकर्मपरित्यज्यपरकीयंप्रकुर्वते ॥   जैमिनिरुवाच   एवंकृष्णेनकथिताःकलिधर्माभयाव

हाः ॥ ततोवीराःकथाश्चक्रुर्यज्ञांतेकृष्णपांडवाः ॥ ५१ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेकलिधर्मवर्णनोनामपं
चषष्टितमोध्यायः ॥ ६५ ॥ जैमिनिरुवाच श्रूयतांराजशार्दूलमहदाश्चर्यमुत्तमं ॥ अश्वमेधेमहायज्ञेनिवृत्तेयदभूद्वि
भो ॥ १ ॥ तर्पितेषुद्विजाग्र्येषुज्ञातिसंबंधिबंधुषु ॥ दीनांधकृपणेचापितदाभरतसत्तम ॥ २ ॥ जायमानेमहानादेदिक्षुसर्वा
सुभारत ॥ पतत्सुपुष्पवर्षेषुधर्मराजस्यमूर्धनि ॥ ३ ॥ गर्वितोऽभूत्तदाराजाधर्मपुत्रोयुधिष्ठिरः ॥ बिलान्निष्क्रम्यनकुलो
रुक्मपार्श्वस्तदानृप ॥ ४ ॥ वज्राशनिसमंनादममुंचतविशांपते ॥ सकृदुत्सृज्यतंनादंत्रासयानोद्विजान्नृपान् ॥ ५ ॥ मानु
षंवचनंप्राहधृष्टोबिलशयोमहान् ॥ सक्तुप्रस्थेनवोनायंयज्ञस्तुल्योनराधिप ॥ ६ ॥ उंछवृत्तेर्वदान्यस्यकुरुक्षेत्रनिवा
सिनः ॥ तस्यतद्वचनंश्रुत्वानकुलस्यविशांपते ॥ ७ ॥ विस्मयंपरमंजग्मुःसर्वेतेब्राह्मणर्षभाः ॥ ततःसमेत्यनकुलंपर्यपृ
च्छंततेद्विजाः ॥ ८ ॥ कुतस्त्वंसमनुप्राप्तअस्मिन्यज्ञसमागमे ॥ किंबलंपरमंतुभ्यंकिंश्रुतंकिंपरायणं ॥ ९ ॥ कथंभवंतंवि
द्यामोयोनोयज्ञंविगर्हसे ॥ अविलुप्यागमंकृत्स्नंविविधैर्याज्ञिकैःकृतं ॥ १० ॥ यथागमंयथान्यायंकर्तव्यंचतथाकृतं ॥
पूजार्हाःपूजितायत्रविधिवच्छास्त्रचक्षुषा ॥ ११ ॥ मंत्रपूर्वंहुतश्चाग्निर्दानंदत्तममत्सरं ॥ तुष्टाद्विजर्षभाश्चात्रदानैर्बहुवि
धैरपि ॥ १२ ॥ क्षत्रियाश्चसुयुद्धेनश्राद्धैरपिपितामहाः ॥ पालनेनविशस्तुष्टाःकामैःशूद्राश्चयोषितः ॥ १३ ॥ अनुक्रो
शैस्तथादानैराशीर्भिश्चपृथग्जनाः ॥ ज्ञातिसंबंधिनस्तुष्टाःशौचेनचनृपस्यनः ॥ १४ ॥ देवाहविर्भिःपुण्यैश्चरक्षणैःशर
णार्थिनः ॥ यदत्रन्यूनंतद्ब्रूहिसभायांब्राह्मणस्यहि ॥ १५ ॥ श्रद्धेयवाक्यःप्राज्ञस्त्वंदिव्यरूपंबिभर्षिच ॥ सभागतैश्चपृष्टस्त्वं
तत्त्वतोवक्तुमर्हसि ॥ १६ ॥ इतिपृष्टोद्विजैस्तैश्चप्रहस्यनकुलोऽब्रवीत् ॥ नैषानृतामयावाणीप्रोक्तागर्वेणवाद्विजाः ॥ १७ ॥
यन्मयोक्तमिदंसर्वंयुष्माभिश्चाप्युपश्रुतं ॥ सक्तुप्रस्थेनवोनायंयज्ञस्तुल्योनराधिप ॥ १८ ॥ उंछवृत्तेर्वदान्यस्यकुरुक्षेत्र
निवासिनः ॥ शृणुताव्यग्रमनसःशंसतोमेद्विजर्षभाः ॥ १९ ॥ अनुभूतंचदृष्टंचयन्मयाद्भुतमुत्तमं ॥ धर्मक्षेत्रेकुरुक्षेत्रे
धर्मज्ञैर्बहुभिर्वृते ॥ २० ॥ उंछवृत्तिर्द्विजःकश्चित्कापोतींवृत्तिमास्थितः ॥ सभार्यःसहपुत्रेणसस्नुषस्तपसिस्थितः ॥ २१ ॥
वधूचतुर्थोवृद्धःसधर्मात्मानियतेंद्रियः ॥ षष्ठेकालेसदाविप्रोभुंक्तेतैःसहसुव्रतः ॥ २२ ॥ कपोतधर्मिणस्तस्यदुर्भिक्षेस

तिदारुणे ॥ नाभविष्यत्तदाविप्राःसंचयस्तन्निबोधमे॥ २३ ॥ क्षीणौषधिसमावेशेद्रव्यहीनोभवत्तदा॥ कालेकालेसु संप्राप्तेनैवाविंदतभोजनं॥ २४॥ क्षुधापरिगताःसर्वेप्रातिष्ठंततदातुते॥उंछस्तदाशुक्लपक्षेमध्येतपतिभास्करे॥ २५॥ तृषार्तश्चक्षुधार्तश्चसविप्रस्तपसिस्थितः ॥ उंछनप्राप्तवानेवसार्धपरिजनैस्ततः ॥ २६ ॥ सतथैवक्षुधाविष्टःस्पृष्ट्वा तोयंयथाविधि॥ क्षपयामासतंकालंसार्धपरिजनेनवै॥ २७॥ अथषष्ठेगतेकालेसयवप्रस्थमर्जयत् ॥ यवप्रस्थेनते सक्तूनकुर्वस्तुतपस्विनः॥२८॥ कृतजप्याह्निकास्तेतुहुत्वाग्निंचयथाविधि॥ कुडवंकुडवंसर्वेव्यभजंततपस्विनः॥२९॥ अथागमद्द्विजःकश्चिदतिथिर्भुंजतांतदा॥ तंपूजयित्वाविधिवत्सविप्रःप्रीतमानसः॥ ३० ॥ प्रोवाचमधुरंवाक्यंमनः प्रह्लादकारकं॥ विप्रउवाच धन्योस्म्यनुगृहीतोस्मिपावितोस्मियतोभवान्॥प्राप्तोस्यतिथिवेलायांघर्मार्तस्येव तोयदः॥३१॥स्वागतंतेद्विजश्रेष्ठभूयःसुस्वागतंतव॥ सनाथःक्रियतांब्रह्मन्नुटजोयंप्रविश्यतां॥३२॥ तेगृहागृहिणःस त्यायेषुमार्गश्रमातुराः॥स्वगृहेष्विवविश्रांताभवंतिचभवादृशाः॥३३॥अहोतीवसभाग्यास्तेनिःस्वापिगृहमेधिनः॥ये षामशून्यादिवसागच्छंत्यतिथिपूजनैः ॥ ३४ ॥ तृणानिभूमिरुदकंवाक्तुर्थीचसूनृता ॥ एतान्यपिसतांगेहेनोच्छि द्यंतेकदाचन ॥ ३५॥ देयमार्तस्यशरणंपथिश्रांतस्यचासनं॥ तृषितस्यतुपानीयंक्षुधितस्यापिभोजनं॥ ३६ ॥ चक्षु र्दद्यान्मनोदद्याद्वाचंदद्यात्सुकेवलां॥ अभ्युत्थानानुव्रजनंकुर्यान्न्यायेनचार्चनं॥ ३७ ॥ नकुलउवाच एवमुक्त्वा सधर्मात्मातमभ्यर्च्यंयथाविधि॥ स्वभागंप्रददौतुष्टोनचतृप्यतितेनसः॥३८॥ततोऽस्यभार्याक्षुत्क्षामाद्वह्मम्लानात पस्विनी ॥ त्वगस्थिभूतावेपंतीभर्तारमिदमब्रवीत्॥३९॥ भार्योवाच ममापिभागोभोस्वामिन्दीयतांमाविचा रय॥ अर्थिनामन्नदानेनकृतार्थास्यामहंध्रुवं॥४०॥ ब्राह्मणउवाच अपिकीटपतंगानांमृगादीनांचशोभने॥ स्त्रियोरक्ष्याश्चपोष्याश्चनचैवंवक्तुमर्हसि॥ ४१ ॥ धर्मकामार्थकार्याणिशुश्रूषाकुलसंततिः॥ दारेष्वधीनःस्वर्गश्चपितॄ णामात्मनस्तथा॥ ४२ ॥ भुंक्ष्वतस्मात्त्वसक्तूंश्चनतेकश्चिदतिक्रमः॥ अनुज्ञातामयाभद्रेकुरुवाक्यंमयेरितं ॥ ४३ ॥ योनानुकंपतेभार्यांनपुष्णातिनराधमः॥ नयशोमहदाप्नोतिनरकंचाधिगच्छति॥ ४४ ॥ ब्राह्मण्युवाच सहध

र्मचरौधात्रास्तृष्टौभार्यापतीद्विज ॥ तस्मान्महतिधर्मेत्वंनबाधांकर्तुमर्हसि ॥ ४५ ॥ पतिर्नार्याःपरोधर्मःपतिरेवहिदैव
तं ॥ पतिरेवपरोबंधुःपतिरेवपरागतिः ॥ धर्ममर्थंचकामंचयशःस्वर्गतिरेवच ॥ ४६ ॥ पत्यौप्रसन्नेस्त्रीसर्वमेतत्प्राप्नोत्यसं
शयं ॥ कर्मणामनसावाचायास्त्रीपतिमनुव्रता ॥ ४७ ॥ इहचैवमहाभागासादेवैरपिपूज्यते ॥ नमयात्वय्यभुक्तेतुभुक्त
पूर्वंकदाचन ॥ ४८ ॥ व्रतमेतद्विदित्वातुत्वंसक्तून्दातुमर्हसि ॥ नकुलउवाच एवमुक्तोगृहीत्वातान्सक्तून्सोतिथ
येददौ ॥ ४९ ॥ भक्षयित्वातिथिस्तांश्चनैवतृप्तोभवत्तदा ॥ ततःपुत्रोविनीतात्मापितरंप्राहधर्मवित् ॥ ५० ॥ पुत्रउ
वाच तृप्त्यर्थमतिथेस्तातमद्भागोपिप्रदीयतां ॥ किंतस्यजीवितफलंप्राप्नोयस्याशयातिथिः ॥ ५१ ॥ शून्यादिवगृ
हाद्दीनोनिराशःप्रतिगच्छति ॥ विष्णुमुद्दिश्ययेचान्नमात्मानंपीडयंत्यपि ॥ ५२ ॥ ददतितेहरेर्लोकेपूज्यंतेदैवतैरपि ॥
तेनार्जितेनवित्तेनकिंतेषांदुष्टचेतसां ॥ ५३ ॥ अतिथिर्यस्यभग्नाशोगृहात्प्रतिनिगच्छति ॥ अतएवमयाचैवभागोदे
योद्विजन्मने ॥ ५४ ॥ कुटुंबंपीडयित्वातुत्यक्त्वालोभंविमत्सरः ॥ ददातियोतिथेरन्नंसयातिपरमांगतिं ॥ ५५ ॥ पि
तोवाच अपिवर्षशतायुस्त्वंबालएवमतोमम ॥ बालानांक्षुद्बलवतीतस्मात्त्वंभुंक्ष्वपुत्रक ॥ ५६ ॥ जयंतिलोकान्पु
त्रेणश्रुतिरेषासनातनी ॥ त्वयातुजीवतापुत्रलोकाःसर्वेहितामम ॥ ५७ ॥ तस्माज्जिगीषतालोकान्रक्ष्यस्त्वंसर्वथाम
या ॥ यस्मान्ममासिपुत्रस्त्वंनाहंमृत्योर्बिभेम्यतः ॥ ५८ ॥ प्रायशःपापकारित्वान्मृत्योरुद्विजतेजनः ॥ कृतकृत्याःप्रती
क्षंतेमृत्युंप्रियमिवातिथिं ॥ ५९ ॥ पुत्रउवाच पूर्वेवयसिपुष्णातिपितापुत्रमितिश्रुतिः ॥ उत्तरेपितरंपुत्रस्तस्मा
त्सक्तून्प्रयच्छमे ॥ ६० ॥ नकुलउवाच इत्युक्तःसगृहीत्वातुसक्तून्सोतिथयेददौ ॥ भुक्त्वातानपिसर्वांस्तुनैवतृप्तिम
वाप्तवान् ॥ ६१ ॥ ततःप्रीतास्नुषाप्राहश्वशुरंविनयान्विता ॥ मद्भागोऽपिमहाभागविप्रस्यास्यप्रदीयतां ॥ ६२ ॥
श्वशुरउवाच योषिद्बालास्नुषासाध्वीनियमव्रतकर्शिता ॥ कुलसंततिहेतुश्चरक्ष्यात्वंसर्वदामया ॥ ६३ ॥ गुरुशुश्रूष
णेसक्तांनियमस्थांपतिव्रतां ॥ त्वांदृष्ट्वाम्लानवदनांपीड्यतेचमनोमम ॥ ६४ ॥ स्नुषोवाच ममत्वंस्वामिनःस्वामी
देवतायाश्चदेवता ॥ गुरोर्गुरुर्गरीयांश्चनैवंत्वंवक्तुमर्हसि ॥ ६५ ॥ अनुकंप्येतिसंचिंत्यदृढभक्तेतिवापुनः ॥ प्रयच्छभ

गवन्सक्तून्दीनामनुगृहाणमां ॥ ६६ ॥ नकुलउवाच ततस्तानपिसक्तून्सगृहीत्वातिथयेददौ ॥ बुभुजेचातिथिः
सर्वान्नचासौचुक्षुभेद्विजः ॥ ६७ ॥ अनुग्रहंमन्यमानःसकुटुंबोमहातपाः ॥ धर्मवर्त्मनियुक्तात्मानचचालाचलोपमः ॥
॥ ६८ ॥ तंशुद्धभावंविज्ञायप्रीतःप्रोवाचसोतिथिः ॥ धर्मोहंद्विजरूपेणजिज्ञासुस्त्वामिहागतः ॥ ६९ ॥ दमस्तपोदया
दानंशौचमिंद्रियनिग्रहः ॥ सत्यंक्षमार्जवंज्ञानमित्येतेसूनवोमम ॥ ७० ॥ तस्मान्नित्यमिमान्यस्तुभक्त्यामेभजतेन
रः ॥ तस्यभक्तिमतस्तुष्टोगतिमिष्टांददाम्यहं ॥ ७१ ॥ यस्मात्तुशुद्धभावेनदत्तमुंछार्जितंत्वया ॥ कृच्छ्रंप्राप्तेनसर्वस्वंब्र
ह्मलोकंततोव्रज ॥ ७२ ॥ स्वर्गस्थास्त्रिदशाःसर्वेदिव्याब्रह्मर्षयस्तथा ॥ स्तुवंतुदानमेतत्तेविस्मयाविष्टमानसाः ॥ ७३ ॥ स
क्तुप्रस्थपरित्यागंश्रद्धयासमचीकरत् ॥ तेनाशुभवतोनूनंपप्रथेहियशोभुवि ॥ ७४ ॥ अग्नयःसफलास्तेऽद्यवेदायज्ञा
स्तपांसिच ॥ येनेदृशोत्यनुप्राप्तोभावोभूतेषुदुर्लभः ॥ ७५ ॥ इत्थंतस्मिन्महाराजब्रुवाणेमुनिपुंगवे ॥ गगनात्पुष्पवृष्टिश्च
पतितातस्यमूर्धनि ॥ ७६ ॥ तेजःप्रज्ञांबलंधैर्यंक्षुन्नाशयतिदेहिनां ॥ दुर्जयांतांयोजयतितेनस्वर्गोजितोभवेत् ॥ ७७ ॥
भार्यापुत्रःस्नुषासाध्वीतथैवात्मासुदुस्त्यजः ॥ सर्वाण्येतानिधर्मार्थेत्यक्तानितृणवत्त्वया ॥ ७८ ॥ नतथाप्रीयतेधर्मोदा
नैर्दत्तैर्महाधनैः ॥ न्यायलब्धैर्यथाल्पार्थैःश्रद्धापूतैःसतुष्यति ॥ ७९ ॥ अश्रद्धापरमंपापंश्रद्धापापविनाशिनी ॥ जहातिपा
पंश्रद्धावान्जीर्णांत्वचमिवोरगः ॥ ८० ॥ बह्वश्रद्धाविरहितंनष्टमाहुर्मनीषिणः ॥ वार्यपिश्रद्धयादत्तमक्षय्यमुपजाय
ते ॥ ८१ ॥ रंतिदेवस्तुधर्मात्मापुरानिष्किंचनोभवत् ॥ श्रद्धापूतःसधर्मात्मानाकपृष्ठमितोगतः ॥ ८२ ॥ आत्ममांसप्र
दानेनशिबिरौशीनरोयथा ॥ सर्वदुःखविनिर्मुक्तोमुमुदेदेववच्चिरं ॥ ८३ ॥ पश्यदेवविमानंखेतवप्राप्तमिदंद्विज ॥ स्व
र्गंगच्छसमारुह्यसभार्यःससुतस्नुषः ॥ ८४ ॥ नकुलउवाच इत्युक्तःपरितुष्टेनसाक्षाद्धर्मेणसद्विजः ॥ दिव्यंविमा
नमारुह्यसकुटुंबोययौदिवं ॥ ८५ ॥ ततोहंतेषुयातेषुबिलान्निःसृत्यसत्वरं ॥ दिव्यपुष्पसमाकीर्णेसक्तुतोयेव्यचेष्टयं ॥
॥ ८६ ॥ अथधर्मप्रसादान्मेमुनेस्तस्यचतेजसाः ॥ दिव्यपुष्पविमर्दाच्चहैमंपार्श्वमभूदिदं ॥ ८७ ॥ द्वितीयंतुकथंपार्श्वंहैमं
स्यादितिचिंतयन् ॥ तपोवनानितीर्थानियज्ञांश्चाप्यगमंस्तथा ॥ ८८ ॥ ततोयज्ञमिमंश्रुत्वाधर्मराजस्यधीमतः ॥ आ

शयापरयाप्राप्तोनतुकांचनतांगतः ॥८९॥ जैमिनिरुवाच इत्येवंकथयित्वातुद्विजानांनकुलस्तदा ॥ ययौयथाग
तंराजन्विप्राणांतत्रपश्यतां ॥ ९० ॥ एतत्तेसर्वमाख्यातंयन्मांत्वंपरिपृच्छसि ॥ अश्वमेधेमहायज्ञेयदाश्चर्यमभूत्तदा ॥
॥ ९१ ॥ तस्मान्नविस्मयःकार्यस्त्वयायज्ञेषुपार्थिव ॥ विनैवयज्ञैर्मुनयःश्रद्धापूतादिवंगताः ॥ ९२ ॥ अद्रोहःसर्वभूते
षुसंतोषःसत्यमार्जवं ॥ सर्वेंद्रियजयःशांतिस्तपश्चस्वर्गसाधनं ॥ ९३ ॥ इत्याश्वमेधिकेपर्वणिजैमिनीयेनकुलो
पाख्यानेसकुटुंबब्राह्मणस्वर्गप्राप्तिर्नामषट्षष्टितमोऽध्यायः ॥ ६६ ॥ ॥ छ ॥ ॥ छ ॥ ॥ छ ॥
जनमेजयउवाच कोसौनकुलरूपेणशिरसाकांचनेनच ॥ प्राहमानुषवद्वाचमेतत्पृष्टोब्रवीहिमे ॥ १ ॥ जैमिनिरु
वाच श्रूयतांनकुलोयोसौयथावागस्यमानुषी ॥ इहार्थैयत्पुरावृत्तंतदिहैकमनाःशृणु ॥ २ ॥ श्राद्धंसंकल्पयामास
जमदग्निःपुराकिल ॥ होमधेनुस्तमागाद्वैस्वर्गलोकादरिंदम ॥ ३ ॥ तत्क्षीरंस्थापयामासनवेभांडेदृढेशुभे ॥ तच्चक्रोधः
स्वरूपेणसर्पस्यपर्यधर्षयत् ॥ ४ ॥ जिज्ञासुस्तमृषिश्रेष्ठंकिंकुर्याद्धिविषीकृते ॥ इतिसंचिंत्यदुर्मेधाधर्षयामासतत्पयः ॥ ५ ॥
तमाज्ञायमुनिःकोपंनचास्यचुकुपेतदा ॥ सतुक्रोधस्तमाहेदंप्रांजलिर्मूर्तिमान्स्थितः ॥ ६ ॥ जितोऽस्मीतिभृगुश्रेष्ठभगवो
त्यतिरोषिणः ॥ लोकेमिथ्यापवादोयंयत्त्वयाऽस्मिपराजितः ॥ ७ ॥ सोहंत्वयिस्थितोद्यघक्षमावतिमहात्मनि ॥ बिभे
मितपसःसाक्षात्प्रसादंकुरुमेप्रभो ॥ ८ ॥ जमदग्निरुवाच साक्षाद्दृष्टोसिमेक्रोधगच्छत्वंविगतज्वरः ॥ नममापकृतं
तेऽघनमन्युर्विद्यतेमम ॥ ९ ॥ यानुद्दिश्येतिसंकल्पःपयस्यस्मिन्कृतोमया ॥ पितरस्तेमहाभागास्तेभ्योबुध्यस्वगम्यतां ॥
॥ १० ॥ इत्युक्तोजातसंत्रासस्तत्रैवांतरधीयत ॥ पितॄणामभिषंगात्तुनकुलत्वमुपागतः ॥ ११ ॥ सतान्प्रसादयामास
शापस्यांतोभवेदिति ॥ तैश्चाप्युक्तोयदाधर्मसभार्यांकृष्णसन्निधौ ॥ १२ ॥ उंछवृत्तेःकथांब्रूषेतदामुक्तोभविष्यसि ॥
इत्युक्तोयाज्ञिकान्देशान्धर्मारण्यानिचैवहि ॥ १३ ॥ कृष्णस्यदर्शनाकांक्षीतंयज्ञंसमुपागतः ॥ धर्मपुत्रमथाक्षिप्यस
त्कुप्रस्थेनतेनसः ॥ १४ ॥ मुक्तःशापात्तथावृत्तंतवतस्यमहात्मनः ॥ पश्यतामेवनस्तत्रनकुऽलोंतरधीयत ॥ १५ ॥ सचा
पिभगवान्कृष्णःशंखचक्रगदाधरः ॥ आसमाप्तेर्जगन्नाथोयज्ञंरक्षितवान्हरिः ॥ १६ ॥ रक्षित्वासमहाबाहुःपांडवैःपू

